MADRAS UNIVERSITY SANSKRIT SERIES No. 5.

# VĀJASANEYI PRĀTIŚĀKHYA
OF
# KĀTYĀYANA

WITH THE COMMENTARIES OF UVAṬA AND ANANTABHAṬṬA

BY

V. VENKATARAMA SHARMA.

(FORMERLY FELLOW IN SANSKRIT, UNIVERSITY OF MADRAS.)



UNIVERSITY OF MADRAS.

1934

PRICE RS. 4.] [FOREIGN 6 S.

मद्रपुरीयविश्वविद्यालयसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ५

# वाजसनेयिप्रातिशाख्यम्

## कात्यायनप्रणीतम्

भाष्यद्वयोपेतम्

वि. वेङ्कटरामशर्मणा

संपादितम्

मद्रपुरीविश्वविद्यालयः

१९३४.

# PREFACE.

The text of the Vājasaneyi—Prātiśākhya with two commentaries is now issued as No. 5 of the Madras University Sanskrit Series. The text with one of the commentaries, that by Uvaṭa, has already once been published from Benares in the Benares Sanskrit Series; that is nearly half a century ago. The present edition contains the commentary by Anantabhaṭṭa, besides the commentary of Uvaṭa. The former is printed for the first time. For the Prātiśākhyas of the Ṛgveda, the Taittirīya—Śākha of the Yajurveda and the Atharvaveda, there are very good editions available. The Ṛgveda-Prātiśākhya has been edited by Max Müller and the Taittirīya and the Atharva Prātiśākhyas have been edited by Whitney. There are other editions also.

The present edition was at the first instance prepared by Pandit V. Venkatrama Sarma who was for three years a member of the Sanskrit Department of the University. He corrected the proof for a few pages in the beginning. When he ceased to be a member of the Sanskrit Department, I had to take up the responsibility for finishing the work. In spite of innumerable corrections that I have carried out during the proof stage, I am sorry that I have to add a very long list of corrections at the end.

In the portion for which Pandit Venkatrama Sarma corrected the proofs, the Vedic passages quoted in the commentaries as examples had not been traced and their references given. I had to continue the plan. But it will be noted that Anantabhaṭṭa has not added many new examples, and the reference for all examples given by Uvaṭa are given in the Benares edition. If I am to note

all the references at the end as an appendix, it will take much time, since I have to attend to many other pressing matters. Although such an appendix would have been a great help to those who use the book, I have not done so, since the quotations can be very easily traced in individual cases with the aid of the word index published from Bombay. In the portion which was seen through the press by Pandit Venkatrama Sarma, the word "equals" was marked by the sign >, as in "pari siñcati > pariṣiñcati" under sutra 42 on page 20. The whole manuscript was thus prepared and I had to continue the practice, though I prefer the usual sign = . Pandit Venkatrama Sarma had not also marked the accent in the quotations from the Saṃhitā. I was confined by the limitations of the manuscript and did not insert the accents in the later portions too, although in the chapter dealing with accent it is a necessary factor. The references for the sūtras quoted by the commentators are not also given. But the index of the sūtras given at the end will help the reader to spot the sūtras very easily. In spite of these limitations it is hoped that the publication will be useful, since there is no good edition of this Prātiśākhya, and since the commentary of Anantabhaṭṭa is not available in print.

Normally, the commentary of Anantabhaṭṭa is only a repetition of the commentary of Uvaṭa. But there are many places where Anantabhaṭṭa gives additional information of a very useful nature. I draw the attention of the readers to passages like the following:—"yadvā āpastambādīnām atra padakāle svaritapāṭhāt tadabhiprāyam idam prasaṅgād uktam ity avadheyam". (p. 46 under sūtra 120) "siddhe pṛthak sūtrakaraṇam mandadhīprajñāpanārtham iti kecit (the reference is to Uvaṭa). vastutas tu pracikitah prakṛṣṭacetanāvāṁs tvam iti yuṣmado viśeṣaṇatvena svarāntare prāpte idam sūtram"

(p. 74, under sūtra 12) . "Kecit brahmann ity atra ādyudāttatvam sūcitam iti vadanti (the reference is to Uvaṭa). tan na........" (p. 82 under sūtra 21). "evaśabdaḥ atra padādir eva iti jñāpayati ..............." (p. 152 under sūtra 124). The readers will find many such interesting statements in the commentary of Anantabhaṭṭa. Further, when Uvaṭa simply gives examples from the Saṁhitā, Anantabhaṭṭa draws attention to the differences in the reading between the various śākhās. This is also a very interesting point in the commentary of Anantabhaṭṭa. Further there are differences in the readings of the sūtras between the two commentators. Page 31, sūtras 76 and 77: there is no commentary of Anantabhaṭṭa for these two sūtras. On page 94 under sūtra 48, Anantabhaṭṭa says "kvacit pustake 'na tanūnapāt pathe' iti sūtram nopalabhyate"; and Uvaṭa does not comment on such a sūtra either. Sūtra 59 on page 125 and sūtra 60 on page 126 are commented on as a single sūtra by Anantabhaṭṭa. Sūtra 3 on page 170 has no Anantabhaṭṭa commentary. Sūtras 13 and 14 on page 174 are commented on as a single sūtra by Anantabhaṭṭa and for sūtra 16 on the next page there is no Anantabhaṭṭa commentary. For sūtra 33 on page 184 there is no Uvaṭa commentary. Uvaṭa says that the sūtra 61 on page 195 is not accepted by some; but Anantabhaṭṭa notes it. Both Uvaṭa and Anantabhaṭṭa say that before sūtra 123 on page 225, some people read one more sūtra which is a mistake. For sūtras 139 and 140 on page 233, both the commentators say that the view is according to only some of the Ācāryas; but there is no hint for this restriction in the sūtras themselves. For these differences and corroborations in readings, as well as for the new points raised by Anantabhaṭṭa, no apology is needed for printing the commentary of Anatabhaṭṭa, though normally he adopts the commentary of Uvaṭa word for word where both agree.

On page 38, the commentary of Anantabhaṭṭa beginning with, "yathā vāk," must be brought over from sūtra 100 to sūtra 101, with a few words added in the beginning, as noted in the list of corrections. On page 218, the portion of Uvaṭa's commentary on line 3 beginning with "visarjanīyāt paraḥ" should be brought over to sūtra 107, as is also noted in the list of corrections.

For the edition of this work, the Benares Sanskrit Series edition of the Vājasaneyi-Prātiśākhya with the commentary of Uvaṭa has been utilised, and also the manuscript of Anantabhaṭṭa's commentary in the Adyar Library. Manuscripts of the two commentaries have been later acquired by the Adyar Library recently; but they came too late to be of any use for this edition.

The index of the sūtras added at the end of this edition was prepared by my colleague in the Department, Mr. T. R. Chintamani, M.A., Ph. D. (Madras).

The work has been in the press now for a long time, owing to other pieces of work in which I was engaged when I took up this responsibility, I was not able to finish this work earlier.

University of Madras.
23rd January, 1934.

**C. Kunhan Raja.**

# वाजसनेयिप्रातिशाख्यम्

## उव्वटभाष्य—अनन्तभट्टभाष्याभ्यां सहितम्



## प्रथमोऽध्यायः



स्वरसंस्कारयोश्छन्दसि नियमः ॥ १ ॥

(उव्वटभाष्यम्)

यस्य भृङ्गावलिः कण्ठे स्रुतदानाम्बुपूरिते ।
भाति रुद्राक्षमालेव स वः पायाद् गणाधिपः ॥
प्रणम्य परमात्मानं व्याख्यास्ये प्रातिशाख्यकम् ।
सरस्वतीं च जगतस्तमोनाशनदीपिकाम् ॥
जपादौ नाधिकारोऽस्ति सम्यक् पाठमजानतः ।
प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये ॥

स्वर उदात्ता-नुदात्त-स्वरित-प्रचितलक्षणः, संस्कारो लोपा-गम-वर्ण-विकार-प्रकृतिभावलक्षणः, तयोः स्वर-संस्कारयोः छन्दसि विषये नियमोऽधिकृतो वेदितव्यः । प्रतिज्ञासूत्रमेतत् । प्रतिज्ञा च शिष्यबुद्धि-समाधानार्था ॥

(अनन्तभट्टभाष्यम्)

हरिः ओम् ॥

गजाननकटद्वन्द्वनिस्सृता मदजर्झरी ।
प्रक्षाळयतु नः क्षिप्रं विघ्नसङ्घातकर्दमम् ॥
नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं तु देहि मे ॥
श्रीसरस्वत्यै नमः । ओम् ।
दक्षं दक्षाध्वरहरं हरहर्युभयात्मकम् ।
खलानामहितं नित्यं वन्दे श्रीरामसद्गुरुम् ॥
श्रीगुरुभ्यो नमः ॥
वन्दे विष्णुं सदानन्दं भक्तकल्पमहीरुहम् ।
यच्छायमाश्रितैर्लभ्यं नैररर्थचतुष्टयम् ॥
याज्ञवल्क्यमुनिं नत्वा कात्यायनमुनीनपि ।
सुमङ्गळादिकांश्चापि वन्दे विद्यागुरून्मम ॥
वेदवेदाङ्गतत्त्वज्ञोऽनन्तभट्ट इति श्रुतः ।
व्याख्यास्यामि प्रातिशाख्यं कात्यायनमुनीरितम् ॥
समस्तकाण्वशाखिभ्यो मूर्धन्येषोऽञ्जलिर्मया ।
ग्रथ्यते मच्छ्रमं दृष्ट्वा कृपां कुर्वन्तु ते मयि ॥
उदाहरणवाक्यानि दीयन्ते काण्वशाखिनाम् ।
अलाभे परकीयाणि सूत्रकारानुशासनात् ॥

शाखायां शाखायां प्रति प्रतिशाखम्, प्रतिशाखं भवम् इति प्रातिशाख्यम् इति समाख्यया समग्रोदाहरणलाभेन च माध्यन्दिनीयशाखीयमेवेदं प्रातिशाख्यमिति गम्यते । अतः काण्वशाखोदाहरणप्रतिज्ञानं कथमिति चेत् । सत्यम् । माध्यन्दिनीयमेवेति न नियमः । किन्तु काण्वादिपञ्चदशशाखानुगतं यतस्तासु शाखासु नियमः स्वल्पभेददर्शनेन । तल्लक्षणस्यासकृदुक्त्या बहूपकारार्थं तन्त्रेणाचार्यप्रवृत्तेः । तथाच पञ्चदशसु शाखासु एकमेव कात्यायनसूत्रम् इति । अनादिवृद्धव्यवहारात् अधिकं प्रविष्टं चेन्न तु तद्धानिरिति न्यायात् । अनेनैव

काण्वापेक्षितसर्वलक्षणसिद्धेश्च । इतरथा केनचिद्भ्रान्त्या प्रयुक्तस्यापपाठस्यापि सुपाठत्वापत्त्यातिप्रसङ्गो दुष्परिहरः स्यात् । किञ्चित्प्रातिशाख्यं श्रौतस्मार्त्तादिसूत्रवत् । बहूनां क्वापि देशेऽनुपलम्भात् सर्वदेशीयानामेकेनैव सूत्रग्रन्थेन कर्मानुष्ठानदर्शनाच्च । न केवलमेतदेव सूत्रैकत्वगमकम् । अपितु प्रातिशाख्यसूत्रेष्वपि तत्र तत्र ज्ञापकाच्च । तथाहि—यान्युदाहरणानि माध्यन्दिनशाखायां न सन्ति काण्वशाखादौ सन्ति तदुदाहरणसाधकानि सूत्राणि दृश्यन्ते । यथा—"पुरोळाशेन सविता जजान" । "पुरोळाशैर्हर्वीष्या" । तथा—"समूळ्हमस्य पांसुरे" "मीळ्हुष्टम शिवतम" इत्यादि काण्वशाखोदाहरणसिध्यर्थम्, "पुरो दाशे" इति सूत्रेण पुरोडाशेनेति सिद्धेऽपि माध्यन्दिनोदाहरणे पुनस्सूत्रं दृश्यते—"डढौ ळळ्हावेकेषाम्" इति । तथा "निषणाय रथवाहणमिन्द्रएणम्परिणीयते समिन्द्रण उरुष्याणो रक्षाणष्षूणष्षुणष्षुणासत्या स्वर्णास्थूरिणौ प्रण आयूँषि" इति सूत्रेण भिन्नपदेष्वप्येषु णत्वे नियमितेऽन्यत्र "परि नो रुद्रस्य" इत्यादौ माध्यन्दिनानां नत्वे सिद्धेऽपि "परिणो हेती रुद्रस्य" इति काण्वोदाहरणसिध्यर्थम् "परिण इति शाकटायनः" इति पुनस्सूत्रं दृश्यते ।

तथा भिन्नपदत्वेन "श्रीमणा" इति माध्यन्दिनोदाहरणसिद्धेऽपि "श्रीमनाश्शतपयाः" इति काण्वानां नत्वसिध्यर्थं पुनस्सूत्रम् "श्रीमना इत्येके" इति । तथा "प्रकृत्या कखयोः पफयोश्च" इति सूत्रेण "विष्णोः क्रमोऽसि", "ततः खनेम", "देवसवितः प्रसुव", "याः फलिनीः" इत्यादौ माध्यन्दिनीयानां विसर्गस्य प्रकृतिभावे सिद्धेऽपि "विष्णो॒क्रमोऽसि", "तत॒खनेम", "देवसवित॒प्रसुव", "या॒फलिनीः" इत्यादौ काण्वोदाहरणे जिह्वामूलीयोपध्मानीयसिध्यर्थं पुनर्वचनम्—"जिह्वामूलीयोपध्मानीयौ शाकटायनः" इति । न च वाच्यं जिह्वामूलीयादिकं माध्यन्दिनस्यापि विकल्पेन भविष्यतीति, "तस्मिन् ळ-ळ्ह-जिह्वामूलीयो-पध्मानीय-नासिक्या न सन्ति माध्यन्दिनानाम्" इति सूत्रकारेण निषिद्धत्वात् । न च वाच्यमेषु सूत्रेषु एकेषामित्यादिपदैः मतान्तरप्रदर्शनं कृतं सूत्रकारेणेति तावता वैयर्थ्यं भवति ; यथा "देवभ्यः शुन्धध्वम्" इति मन्त्राभावेऽपि मतान्तरप्रदर्शनं श्रितम्, तद्वदत्रापीति । यत्र मतान्तरप्रदर्शनं नास्ति केवलं शाखान्तरोदाहरणसिध्यर्थमेवाचार्यप्रवृत्तिः । तादृशान्यपि सूत्राणि दृश्यन्ते, यथा—

"दूणाशं सख्यं तव" इति शाबीयादिशाखोदाहरणसिध्यर्थं तृतीयाध्याये "नाशे च" इति सूत्रम्। तथा "षोडन्यो अस्य" इत्युदाहरणसिध्यर्थम् "षट्दशदन्तयोः सङ्ख्यावयोऽर्थयोश्च" इति सूत्रम्। तथा "सोमापूष्णोर्भागधेयम्" इत्युदाहरणस्य अन्तोदात्तत्वसिध्यर्थम् "द्वन्द्वं चेन्द्रसोमपूर्वं पूषाग्निवायुषु" इति सूत्रम्। एवं तत्र तत्र शाखान्तरोदाहरणसिध्यर्थं बहूनि सूत्राण्युपलभ्यन्ते। न च तानि लौकिकप्रयोजनसाधनार्थानि; तेषां व्याकरणसिद्धत्वात्। नाप्याश्वलायनाचार्यादिकृतप्रातिशाख्यसिद्धत्वम्। ऋषिवचनमात्रस्यापि वैयर्थ्यं वक्तुमनुचितत्वाच्च। तस्मात् सिद्धं काण्वादिपञ्चदशशाखासु एकमेव प्रातिशाख्यमिति। ओम्।

हरिः ओम्॥

जपादौ नाधिकारोऽस्ति सम्यक्पाठमजानतः।
प्रातिशाख्यमतो ज्ञेयं सम्यक्पाठस्य सिद्धये॥

सङ्गतिज्ञापकं तस्येदमाद्यं वचनं स्पष्टार्थम्। स्वरसंस्कारयोश्छन्दसि नियमः। स्वरः उदात्ता-नुदात्त-स्वरित-प्रचयरूपः, संस्कारो नाम लोपा-गम-वर्णविकार-प्रकृतिभावादिरूपः; तयोः छन्दसि वेदविषये नियमोऽधिक्रियते। प्रतिज्ञासूत्रमेतत्। प्रतिज्ञा तु शिष्यबुद्धिसमाधानार्था॥

लौकिकानामर्थपूर्वकत्वात्॥ २॥

(उ० भा०) लोके विदिता लौकिकाः। लौकिकानां शब्दानामर्थपूर्वकत्वात्प्रयोजनपूर्वकत्वादस्मिन् शास्त्रे नियमो न क्रियते। कथं प्रयोजनपूर्वकत्वम्? कथं प्रयोजनपूर्वकाणां शब्दानां नियमो न क्रियते? आह—"देवदत्त गामभ्याज शुक्लां दण्डेन" इति यस्य पुरुषस्य देवदत्तकर्तृका गोत्वजात्युपलक्षितशुक्लद्रव्यकर्मिका दण्डकरणिका अभ्याजनक्रिया अभिप्रेता स एवैतद्वाक्यं ब्रवीति, न तत्सर्वः। अतोऽर्थपूर्वकत्वं लौकिकानां शब्दानाम्। अर्थपूर्वकत्वे सत्यर्थाभावे नोच्चारणं लौकिकानां शब्दानाम्। छन्दसि पुनः "अहरहः स्वाध्यायमधीयीत" इति श्रुतिचोदनात्। अतः सदाकालं छान्द-

**सानां शब्दानामभ्यासः श्रुत्या विधीयते पुरुषस्याभ्युदयार्थम्। अतस्तद्विषय एव स्वर-संस्कारयोर्नियम आरभ्यते न लौकिकानामर्थपूर्वकत्वात् ॥**

(अ० भा०) लोके भवा लौकिकाः शब्दास्तेषां गामानय शुक्लां दण्डेन इत्येवमादीनां वाक्यानां नियमो न क्रियते। कुतः? अर्थपूर्वकत्वात्। यस्य पुंसः देवदत्तकर्तृका गोत्वजात्याक्रान्ता शुक्लद्रव्यकर्मिका दण्डकरणिका आनयनक्रियाभिप्रेता स एवैतद्वाक्यं प्रयुङ्क्ते न सर्वः अर्थाभावात्। छन्दसि तु पुनः "अहरहः स्वाध्यायमधीयीत" इति श्रुत्या सर्वकालार्थप्रयोजनाभावेऽपि वेदाध्ययनं विधीयते पुरुषस्याभ्युदयाय। अतो वैलक्षण्यात् तद्विषय एवायं नियमः, न लौकिकविषयः ॥

**न समत्वात् ॥ ३ ॥**

**(उ० भा०) नकारः प्रतिषेधवाची उभयत्र सम्बध्यते काकाक्षिवत्। नचै तत्, यद्वैदिकानां शब्दानां स्वर-संस्कारनियमोऽभ्युदयहेतुः। किन्तर्हि? लौकिकानामपि नियमोऽभ्युदयहेतुरेव। कुतः? समत्वात्, तुल्यत्वाच्छब्दानाम्। य एव वैदिकास्त एव लौकिकास्त एव तेषामर्था इति। अतो यदुक्तं वैदिकानामेव स्वरसंस्करणमभ्युदयहेतुरित्येतन्न समत्वात् ॥**

(अ० भा०) नञ् प्रतिषेधवाची, न पर्युदासार्थः। प्रसक्तप्रतिषेधात्। तदुक्तं महाभाष्ये—

"प्राधान्यं तु विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयोः यत्रोत्तरपदेन तु ॥
अप्राधान्यं विधेर्यत्र प्रतिषेधप्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥"

इति। इयमस्य योजना—अथ यदुक्तं वैदिकानामेव शब्दानामयं नियमः न लौकिकानामिति, तन्नेत्यर्थः। कुतः? समत्वाच्छब्दानाम्। य एव वैदिकाः त एव लौकिकाः त एव चामीषामर्था इति ॥

स्याद्वाम्नायधर्मित्वाच्छन्दसि नियमः ॥ ४ ॥

(उ० भा०) आम्नायो वेदः, तस्य धर्मः आम्नायधर्मः, आम्नायधर्मो विद्यते यस्य शब्दग्रामस्य स आम्नायधर्मी, तस्य भावः आम्नायधर्मित्वम्, तस्मादाम्नायधर्मित्वात् भवेद्वा छन्दसि शब्दानां स्वर-संस्कारनियमोऽभ्युदयाय महते स्यात्। छन्दसि नियमो महोदयः। कतमत्तदाम्नायधर्मित्वं नाम? आह—आम्नायः क्रियार्थो यज्ञार्थश्च। तद्यथा—ब्राह्मणं विध्यर्थवादरूपम्, मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवतास्मारकः, मन्त्रेण स्मृतं कर्म कर्त्तव्यमिति नियमार्थं वचनम्। मन्त्रस्तु यदि मनागपि स्वरतो वर्णतो वा हीनो भवति अथ कर्मासमृद्धिः, न केवलं कर्मासमृद्धिः, किन्तर्हि? दुरिष्टहेतुः प्रत्यवायः स्यात्। उक्तं च—

"मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥"

इति। दुष्प्रयुक्तमन्त्रविषयो निन्दार्थवादः, तथा स्वाध्यायविषयः फलार्थवादो भवति "घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभि वहन्तीति"। न तु लौकिकशब्दविषयमिदं किञ्चिदुपलभ्यते। अतः स्वरसंस्कारयोश्छन्दसि नियमो महोदय इति ॥

(अ० भा०) अतः समत्वात् उभयेषामयं नियमोऽस्त्वित्याह। वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। आम्नायो वेदः। तद्धर्मित्वात् स्वर-संस्कारयोः तत्रैवायं नियमः, नान्यत्र। आम्नायधर्मित्वं चेत्थम्—मन्त्रब्राह्मणरूपो वेदोः यज्ञार्थः। ब्राह्मणमपि विध्यर्थवादरूपम्। मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवताप्रकाशकः। मन्त्रस्तु यदि मनागपि स्वरतो वर्णतो वा हीनो भवति, अथ कर्मासमृद्धिः। नैव केवलं कर्मासमृद्धिः। किन्तर्हि? अनर्थहेतुः प्रत्यवायोऽपि। उक्तं हि—

मन्त्रे हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

इति । मन्त्रविषयो न निन्दार्थवादः । तथा स्वाध्यायविषयः फलार्थवादः "घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभि वहन्तीति", "एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः स्वर्गे लोके कामधुग्भवति" इत्यादितश्च । न तु लौकिकशब्दविषये ईदृङ्नियमः क्वचिदुपलभ्यते । अतः स्वर-संस्कारनियमो वेदविषय एवेति सिद्धम् ॥

**यत्तन्न ॥ ५ ॥**

**(उ० भा०) एवं स्वर-संस्कारौ छन्दसि विषये प्रतिज्ञातौ छन्दोविषये महोदयफलावित्यवधार्य, अधुना शब्दस्वरूपजिज्ञापयिषयेदमाह । यत् न ज्ञायते शब्दस्य कारणभूतं तद् वक्ष्याम इति सूत्रशेषः ॥**

(अ० भा०) नकारोऽत्र भिन्नक्रमः । एवं स्वर-संस्कारनियममभिधाय यन्न ज्ञायते शब्दकरणमिति तदुच्यत इति सूत्रशेषः ॥

**वायुः खात् ॥ ६ ॥**

**(उ० भा०) वायुः कारणभूतः शब्दस्य, स च खादाकाशादुत्पद्यते ॥**

(अ० भा०) वायुः शब्दस्य कारणम्, स च अकाशादुत्पद्यते। "आकाशाद्वायुः" इति श्रुतेः ॥

**शब्दस्तत् ॥ ७ ॥**

**(उ० भा०) शब्दस्तदात्मकः वाय्वात्मक इत्यर्थः ॥**

(अ० भा०) यद्वायुस्वरूपमुत्पन्नं तच्छब्दः, वाय्वात्मकमित्यर्थः ॥

सङ्करोपहितः ॥ ८ ॥

(उ० भा०) यदि वाय्वात्मकः शब्दः, वायोः सर्वगतत्वात् सदाकालं सर्वत्रोपलब्धिः प्राप्नोतीत्याशङ्क्याह—सङ्करोपेति। सम्यक्करणैरुपहितो हृदि वायुर्वेणुशङ्खादिभिः शब्दीभवति ॥

(अ० भा०) यदि वाय्वादिशब्दात्मकः शब्दस्तर्हि वायोस्सर्वगतत्वात् सर्वकालं सर्वशब्दोपलब्धिः स्यादित्याशंक्याह। करणानि कराः, समीचीनाः कराः सङ्कराः। सम्यक् करणैरुपहितो वायुः वेणुशङ्खादिभिः शब्दीभवति ॥

स सङ्घातादीन् वाक् ॥ ९ ॥

(उ० भा०) यो वायुः सम्यक्करणैरुपहितो वेणुशङ्खादिभिः शब्दीभवति स एव सङ्घातादीन् प्राप्य वाग् भवति। सङ्घातः पुरुषप्रयत्नः, स आदौ येषां स्थानादीनां ते सङ्घातादयः, तान् प्राप्य वाग्भवति वर्णो भवतीत्यर्थः ॥

(अ० भा०) योः वायुः वेणुशङ्खादिभिरुपहितः शब्दो भवति, स एव सङ्घातादीन् प्राप्य वागिति व्यवह्रियते। सङ्घातो नाम प्रयत्नः। स बाह्याभ्यन्तरत्वेन द्विधा। बाह्योऽप्येकादशविधः विवारः संवारः श्वासो नादो घोषोऽघोषः अल्पप्राणः महाप्राणः उदात्तोऽनुदात्तः स्वरितश्चेति महाभाष्ये विशेषोक्तः। तल्लक्षणमपि तत्रैवोक्तम् —

"खयां यमाः खयः ≍क≍पौ विसर्गः शर एव च।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ॥"

इति। आन्तरप्रयत्नश्चतुर्धा भिद्यते ॥

**त्रीणि स्थानानि ॥ १० ॥**

(उ० भा०) सङ्घातः पुरुषप्रयत्न इत्युक्तम् । अधुना सङ्घात आदिभूतो येषां स्थानादीनां तान्युच्यन्ते । त्रीणि स्थानानि वायोर्भवन्ति उरः-कण्ठ-शिरआत्मकानि शरीरे ॥

(अ० भा०) वायोः त्रीणि स्थानानि उरः—कण्ठ—मूर्धात्मकानि भवन्ति ॥

**द्वे करणे ॥ ११ ॥**

(उ० भा०) संवृत-विवृताख्ये वायोर्भवतः ॥

(अ० भा०) संवृत-विवृतलक्षणे वायोः द्वे करणे भवतः । तदुक्तं कात्यायनेन—

"चत्वारश्च प्रयत्ना स्युरक्षराणां तथैव च ।
स्पृष्टेषत्स्पृष्टता चैव संवृतं विवृतं तथा ॥" इति ॥

**शरीरात् ॥ १२ ॥**

(उ० भा०) य एते करणे संवृत-विवृताख्ये, यानि च त्रीणि स्थानानि, शरीराद्वायोर्निर्गच्छतस्तानि भवन्ति, यानि पुनरुपरिष्टाद्वक्ष्यति स्थान-करणानि तानि मुखस्थानानि । अत एवमाह शरीरादिति ॥

(अ० भा०) ये द्वे करणे, यानि त्रीणि स्थानानि, तानि शरीरान्निर्गच्छतः वायोर्भवन्ति । यानि पुनरग्रे सूत्रकृद्वक्ष्यति स्थानकरणानि तानि मुखस्थानानि । अत एवमाह शरीरादिति ॥

**शरीरम् ॥ १३ ॥**

**(उ० भा०) एवमेतेन प्रकारेण शरीराद्वायुर्निर्गच्छन् कादिवर्णविशेषव्यक्तिमापद्यते ॥**

(अ० भा०) एवं शरीराद्वायुः निर्गच्छन् अकारादिविशेषव्यक्ति[शरीर]–मापद्यते ॥

## शारीरे ॥ १४ ॥

**(उ० भा०) किं शरीराद्वायुर्निर्गच्छन् मात्रादिवर्णविशेषव्यक्तिमापद्यते ? नेत्याह—शारीरे शरीरैकदेशे मुखे प्राप्तो वायुस्ताल्वादिस्थानेषु निषक्तः करणेन विशेषव्यक्तिरूपेण वर्णत्वमापद्यते ॥**

(अ० भा०) किं यस्मात् कस्मात् शरीरात् वायुर्निर्गच्छन् मात्रादिवर्णविशेषव्यक्तिरूपं शरीरमापद्यते ? नेत्याह—शारीरे इति । शरीरैकदेशमुखे प्राप्तो वायुस्ताल्वादिस्थानेषु निस्सृतः करणविशेषनिरूपितवर्णत्वमापद्यत इत्यर्थः ॥

## तेषाँ समूहात् स उदयँस्त्रैकाल्यम् ॥ १५ ॥

**(उ० भा) तेषां स्थान-करण-प्रयत्नानां सम्बन्धिनः समूहात् स उदयन् वायुरुद्गच्छन् त्रैकाल्यमभिधत्ते । त्रयः कालाः समाहृताः त्रिकालम्, त्रिकालमेव त्रैकाल्यम् स्वार्थे ष्यञ् । त्रिकालसम्बद्धमर्थजातं भवद्भूतभविष्यत्सम्बद्धमर्थजातं वायुर्वर्णीभूतः पदवाक्यैरभिधत्ते । त्रिकालसम्बद्धस्यार्थजातस्य वायुः शब्दरूपेण प्रकाशको भवतीत्यर्थः । "वायोरियं विभूतिर्या त्रयी विद्या" इति ॥**

(अ० भा०) तेषां स्थान-करण-प्रयत्नानां समूहादुदयन् उद्गच्छन् स वायुः त्रैकाल्यं त्रयः कालाः समाहृताः त्रिकालम्, त्रिकालमेव त्रैकाल्यम् । स्वार्थे ष्यञ् । त्रिकालसम्बद्धमर्थजातं भूतभविष्यद्वर्त्तमानरूपमभिधत्ते । त्रिकालसम्बद्धार्थजातस्य वायुः शब्दरूपेण प्रकाशको भवतीत्यर्थः । "वायोरियं विभूतिर्या त्रयी विद्या" इति श्रुतेः ॥

**ओङ्कारः स्वाध्यायादौ ॥ १६ ॥**

**(उ० भा०) "यत्तन्न" इत्येवमादिना वायुः पदवाक्यरूपेण सर्वं प्रकाशयतीत्युक्तम् । अधुना स्वाध्यायविधिरुच्यते—ओङ्कारः स्वाध्यायादौ । कर्तव्य इति सूत्रशेषः । तथाचाह मनुः—**

**"ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।**
**क्षरत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्य्यते ॥" इति ॥**

(अ० भा०) "यत्तन्न" इत्येवमाद्येकादशसूत्रैर्वायुः पदवाक्यरूपेण सर्वं प्रकाशयतीत्युक्त्वा अधुना स्वाध्यायविधिमाह । वक्तव्य इति सूत्रशेषः ।

तदुक्तं मनुना—

"ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
क्षरत्यनोङ्कृतं ब्रह्म पुरस्ताच्च विशीर्य्यते ॥" इति ॥

**ओङ्काराथकारौ ॥ १७ ॥**

**(उ० भा०) ओङ्कारोच्चारणं स्वाध्यायादौ प्रतिज्ञातमेव, तत्तुल्यफलोऽथशब्दोऽपीति सूत्रार्थः । तथाचोक्तम्—**

**"ओङ्कारश्चाथकारश्च द्वावेतौ ब्रह्मणः पुरा ।**
**कण्ठं भित्त्वा विनिर्यातौ तेनेमौ मङ्गलावुभौ ॥" इति ॥**

(अ० भा०) ओङ्कारोच्चारणं स्वाध्यायादौ प्रतिज्ञातमेव । तत्तुल्यफलत्वमथशब्दस्य ज्ञापयितुं पुनरोङ्कारग्रहणम् । ओङ्कारफलः अथशब्दोऽपि वक्तव्य इत्यर्थः ।

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिष्क्रान्तौ तेन माङ्गलिकावुभौ ॥"

इति स्मृतिः ॥

ओङ्कारं वेदेषु ॥ १८ ॥

(उ० भा०) एवमधस्तनसूत्रेण ओङ्काराथशब्दयोः स्वाध्यायादावविशेषेणोच्चारणमुक्त्वानेन सूत्रेण व्यवस्था क्रियते—ओङ्कारं वेदेषु। प्रयुञ्जीत इति सूत्रशेषः ॥

(अ० भा०) तयोर्व्यवस्थामाह—ओङ्कारं वेदेषु। प्रयुञ्जीतेति सूत्रशेषः ॥

अथकारं भाष्येषु ॥ १९ ॥

(उ० भा०) भाष्येषु ग्रन्थेषु अथकारं प्रयुञ्जीतेति सूत्रशेषः ॥

(अ० भा०) भाष्यग्रन्थेषु अथकारं प्रयुञ्जीत ॥

प्रयतः ॥ २० ॥

(उ० भा०) प्रयतः शुचिरुच्यते। पादशौचाचमनादिना शुचिरधीयीतेत्यर्थः ॥

(अ० भा०) पादशौचाचमनादिना प्रयतः शुचिरधीयीत ॥

शुचौ ॥ २१ ॥

(उ० भा०) शुचौ विविक्तदेशेऽधीयीत। उक्तञ्च—

"द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥"

(अ० भा०) पवित्रदेशे अधीयीत।

"द्वावेतौ वर्जयेन्नित्यमनध्यायौ प्रयत्नतः।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिर्द्विजः ॥"

इति याज्ञवल्क्योक्तेः ॥

**इष्टम् ॥ २२ ॥**

(उ० भा०) **अभिरुचितमासनमासीनः ॥**

(अ० भा०) अभीष्टमासने आसीत ॥

**ऋतुं प्राप्य ॥ २३ ॥**

(उ० भा०) **हेमन्तमृतुं प्राप्य रात्र्याश्चतुर्थप्रहरेऽधीयीत ॥**

(अ० भा०) हेमन्तमृतुं प्राप्य रात्र्याश्चतुर्थप्रहरेऽधीयीत ॥

**योजनान्न परम् ॥ २४ ॥**

(उ० भा०) **अधीयानो योजनात् परमध्वानं न गच्छेत् ॥**

(अ० भा०) अधीयानो योजनान्न परमध्वानं गच्छेत्। योजनादूर्ध्वं गच्छन्नधीयीतेति वा ॥

**भोजनं मधुरँ स्निग्धम् ॥ २५ ॥**

(उ० भा०) **मधुररसप्रायं घृतप्रायं चान्नं भुञ्जीत ॥**

(अ० भा०) घृतप्रायं मधुरप्रायं चान्नं भुञ्जीत ॥

**वर्णदोषविवेकार्थम् ॥ २६ ॥**

(उ० भा०) **अकारादयो वर्णास्तेषां दोषाः तेषां विवेचनाय नानाकरणाय। तद्यथा—त्रिमात्रिकस्य स्वरस्य द्विमात्रता, द्विमात्रिकस्य मात्राकालता, अनुनासिकस्य स्वरस्यैकदेशरङ्गता। यथा—महाँ इन्द्र इति। तथा व्यञ्जनानामनेकप्रकारा दोषाः सम्भवन्ति। अयमपि वक्ष्यति—"ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः" इति ॥**

(अ० भा०) वर्णा अकारादयः, तेषां दोषाः अस्थानजत्वादयः, तद्विवेकाय ॥

कुत इत्याकाङ्क्षायामाह—

तिङ्कृत्तद्धितचतुष्टयसमासाः शब्दमयम् ॥ २७ ॥

**(उ० भा०) यत्किञ्चिच्छब्दमयमुपलभ्यते त्रयीलक्षणं तत् । तिङ्कृत्तद्धितचतुष्टयसमासाः । तिङ् खलु आख्यातका भवन्ति—पचति, पठतीत्येवमादयः । कृतः–कर्त्ता, कारक इत्येवमादयः । तद्धिताः–आग्नेयः, सारस्वत इत्येवमादयः । चतुष्प्रकाराः समासाः अव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहयः । अव्ययीभावो यथा—समंभूमि, उपरिनाभि । तत्पुरुषो यथा—प्रजापतिः, वृत्रहा । द्वन्द्वो यथा—इन्द्राग्नी, मित्रावरुणौ । बहुव्रीहिर्यथा–शुद्धबालः, सर्वशुद्धबालः ॥**

(अ० भा०) यत्किञ्चिच्छब्दजातिरुपलभ्यते त्रयीलक्षणं तत् तिङ्-कृत्तद्धितचतुःप्रकारसमासात्मकं भवति । तिङ् खलु—"अग्नये जुष्टं निर्वपामि" इत्येवमादि । कृत्–"येषां भागोऽसि" इत्यादि । तद्धितस्तु–"कृष्णग्रीवा आग्नेयाः" इत्येवमादि । चतुःप्रकारसमासाः अव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहयः । तत्राव्ययीभावो यथा—"अहरहरप्रत्तयावं रूपम्" इति । तत्पुरुषो यथा—"प्रजापतिश्चरति गर्भे", "वृत्रहा शतक्रतुः" । द्वन्द्वो यथा—"इन्द्राग्नी मित्रावरुणौ" । बहुव्रीहिर्यथा—"शुद्धबालस्सर्वशुद्ध-बालः" ॥

तां वाचमोङ्कारं पृच्छामः ॥ २८ ॥

**(उ० भा०) तिङ्कृत्तद्धितचतुष्टयसमासलक्षणां तामित्थम्भूतां वाचमोङ्कारं पृच्छामः । ओङ्कारो वाचः पुत्रः, स पृष्टः सन् स्वाध्याया-दावुच्चारणेन स्वां मातरमर्थतो ग्रन्थतश्च कथयिष्यति । अतः स्वाध्यायादौ प्रणवः कार्यः । द्विकर्मा च पृच्छतिर्धातुः । अतो वाक्शब्दे ओङ्कारशब्दे च द्वितीया, माणवकं पन्थानं पृच्छतीति यथा ॥**

(अ० भा०) तां कृत्तद्धितचतुष्टयसमासरूपां वेदवाचमोङ्कारं पृच्छामः। ओङ्कारात् वेदस्वरूपं जानीम इत्यर्थः। ओङ्कारो हि वाचः पुत्रः, सः स्वाध्यायादावुच्चारितः सन् स्वामातरमर्थतो ग्रन्थतश्च कथयिष्यतीति। स्वाध्यायादौ प्रणवो वक्तव्य इत्यभिप्रायः ॥

**अथ शिक्षाविहिताः ॥ २९ ॥**

**(उ० भा०) अथेत्ययं शब्दो विशेषाधिकारार्थः। शिक्षाविहिताः स्थानकरणास्यप्रयत्नादयोऽभिधीयन्ते। इत उत्तरमधिकारद्वयानुवृत्तिर्द्रष्टव्या स्वरसंस्कारानुवृत्तिः शिक्षाविहितानुवृत्तिश्च ॥**

(अ० भा०) अथशब्दोऽधिकारार्थः, शिक्षाभिहिताः स्थानकरणादयोऽधिक्रियन्त इति। इत उत्तरमधिकारद्वयानुवृत्तिर्द्रष्टव्या स्वरसंस्कारानुवृत्तिः शिक्षाविहितानुवृत्तिश्चेति ॥

**सवनक्रमेणोरः-कण्ठ-भ्रूमध्यानि ॥ ३० ॥**

**(उ० भा०) अधस्तादुक्तं स सङ्घातादीन् प्राप्य वाक्, तस्याः 'त्रीणि स्थानानि' इति। ननु कतमानि तानीत्युक्तम्? इह तु शिक्षाप्रक्रमात्तत्पर्यायेणोच्यन्ते—सवनक्रमेणोरः—कण्ठ—भ्रूमध्यानि। प्रातस्सवन—माध्यन्दिनसवन-तृतीयसवनक्रमेण उरः—कण्ठ—भ्रूमध्यानि त्रीणि स्थानानि वायोर्भवन्ति ॥**

(अ० भा०) अधस्तादुक्तं त्रीणि स्थानानीति। तानि स्थानानि अनेन कथ्यन्ते। सवनक्रमेण प्रातस्सवन-माध्यन्दिनसवन-तृतीयसवनक्रमेण उरः-कण्ठ-भ्रूमध्यानीति त्रीणि वायोः स्थानानि भवन्ति ॥

**आयाम-मार्दवा-भिघाताः ॥ ३१ ॥**

(उ० भा०) एवमेतेषु स्थानेषु वर्णेषूच्चार्यमाणेषु त्रयो विकाराः शरीरस्य पर्यायेण भवन्ति—आयाम-मार्दवा-भिघाताः। आयामो नाम ऊर्ध्वगमनं शरीरस्य। मार्दवो नामाधोगमनं गात्राणाम्। अभिघातस्तिर्यग्गमनं गात्राणाम् ॥

(अ० भा०) एवमेतेषु स्थानेषु वर्णेषूच्चार्यमाणेषु त्रयो विकारा आयाम-मार्दवा-भिघाताः शरीरस्य भवन्ति। आयामो नाम शरीरस्योर्ध्वगमनम्, मार्दवो नामाधोगमनम्, अभिघातस्तिर्यग्गमनम् ॥

उच्चनीचविशेषः ॥ ३२ ॥

(उ० भा०) योऽयं नामाभिघातः स्वरितः स उच्चनीचविशेषः उच्चनीचाभ्यामभिनिवर्त्यते। एवं शरीरस्य प्रयत्नेन ये निवर्त्यन्ते तेषामुपरिष्टात् संज्ञां वक्ष्यति "उच्चैरुदात्तः" इत्येवमादिना ॥

(अ० भा०) अभिघात उक्तः, सः उच्चनीचविशेषः उच्चनीचाभ्यामभिनिवर्त्यत इत्यर्थः ॥

अथाख्याः समाम्नायाधिकाः प्राग्रिफितात् ॥ ३३ ॥

(उ० भा०) अथशब्दो मङ्गलार्थः। संज्ञाः समाम्नायाधिकाः, वर्णसमाम्नायं वक्ष्यति—"अथातो वर्णसमाम्नायं व्याख्यास्यामः" इति, तस्मादधिकाः। प्राग्रिफितात् रिफितसंशब्दनात्प्राक्, वक्ष्यति—"विसर्जनीयो रिफितः" इति, तस्मात्प्राक्। उपलक्षणार्थमेतत्। परिभाषाप्यत्र भविष्यति। तद्यथा—"ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात्", "प्रथमग्रहणे वर्गम्" इति ॥

(अ० भा०) अथशब्दो मङ्गलार्थः "मङ्गळवचनानि शास्त्राणि" इति वचनात्। अत ऊर्ध्वं प्राग्रिफितात् "विसर्जनीयो रिफितः" इत्यस्मात् प्राक् आख्याः संज्ञाः उच्यन्ते। कीदृश्यः? समाम्नायाधिकाः, समाम्नायं

वक्ष्यति—"अथातो वर्णसमाम्नायं व्याख्यास्यामः" इति, तस्मादधिकाः। आख्याशब्दस्तु उपलक्षकः। तेनात्र परिभाषा अपि मध्ये उच्यन्ते॥

## उपदिष्टा वर्णाः॥ ३४॥

(उ० भा०) वर्णसमाम्नाये कथिता वर्णाः। तद्यथा—"किति-खितिगितिघितिङिति कवर्गः"। अथवा ये पदेषूपदिष्टा वर्णास्त एव प्रत्येतव्याः। अन्यद्वचनाद्भविष्यति। तद्यथा—"इषे त्वा"। अत्र संहितायामपि न वर्णान्यत्वम्। वचनात्संहितायां विकारा भविष्यन्ति, तांस्तत्रैव वक्ष्यामः। अथवा पदेषु संख्योपदिष्टा वर्णाः कर्त्तव्याः। तद्यथा—"इषे", त्रिवर्णं पदम्, "त्वा" त्रिवर्णं पदम्, "ऊर्ज्जे" पञ्चवर्णं पदम्। उक्तं च—

"स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगार्थ एव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥" इति॥

(अ० भा०) अष्टमाध्याये वर्णा उपदिष्टा एव। अतोऽत्र नोच्यन्ते। यद्वा पदेषु सङ्ख्योपदिष्टा वर्णा वेदितव्याः। तद्यथा—"इषे" इकार-षकार-एकाराः इति त्रिवर्णं पदम्। उक्तं च—

"स्वरो वर्णोऽक्षरं मात्रा तत्प्रयोगार्थ एव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे॥" इति॥

## अन्त्याद्वर्णात्पूर्व उपधा॥ ३५॥

(उ० भा०) अन्ते भवोऽन्त्यो वर्णः ककारादिः, अन्त्याद्वर्णात्पूर्व उपधासंज्ञो भवति। तद्यथा—"महान् इन्द्रः" इति। अत्र नकार-स्थाकार उपधासंज्ञकः। संज्ञाकरणे प्रयोजनं वक्ष्यति—"अनुनासि-कमुपधा प्रागन्तस्थायाः" इति॥

(अ० भा०) अन्ते भवः अन्त्यः। वर्णः अकारादिः। तस्मा-त्पूर्वो वर्ण उपधासंज्ञकः स्यात्। यथा—"महान् इन्द्रः" इत्यत्र नकारात्पूर्व

अकार उपधासंज्ञः । संज्ञाप्रयोजनमुत्तरत्र भविष्यति "अनुनासिकमुपधा प्रागन्तस्थायाः" इत्यादौ । एवमन्यत्रापि संज्ञाकरणे प्रयोजनं द्रष्टव्यम् ॥

**निर्देश इतिना ॥ ३६ ॥**

**(उ० भा०) वर्णानां निर्देश इतिना भवति । तद्यथा—"किति-खितिगितिघितिङिति कवर्गः" इति ॥**

(अ० भा०) वर्णानां निर्देश इतिशब्देन स्यात् । यथा—"किति-खितिगितिघितिङिति कवर्गः" इति ॥

**कारेण च ॥ ३७ ॥**

**(उ० भा०) कारप्रत्ययेन च वर्णानां निर्देशो भवति । तद्यथा—"यकारवकारयोर्जास्पत्ये पदे" इति ॥**

(अ० भा०) चकारो वाशब्दार्थे । कारप्रत्ययेन वा वर्णनिर्देशः स्यात् । यथा—"यकारवकारयोर्जास्पत्ये पदे" इति ॥

**अव्यवहितेन व्यञ्जनस्य ॥ ३८ ॥**

**(उ० भा०) अकारव्यवहितेन कारप्रत्ययेन व्यञ्जनस्य निर्देशो भवति । यथा—"ककार–पकारयोः सकारम्" इति । व्यञ्जनस्येति किम्? अकारः, इकारः, उकारः इति ॥**

(अ० भा०) अकारेण व्यवहितः अव्यवहितः । अकारसहितेन कारप्रत्ययेन व्यञ्जनस्य निर्देशः स्यात् । यथा—"ककारपकारयोः सकारम्" इति । व्यञ्जनस्येति किम्? अकारः, इकारः, उकारः, इत्यत्र मा भूदिति ॥

**रएफेन च ॥ ३९ ॥**

(उ० भा०) रः रेफस्य। एफेन च निर्दिश्यते। यथा—"रेफं स्वरधौ" इति। चशब्दादितिना च। यथा—"यितिरितिलिति-विति"॥

(अ० भा०) रकारस्य एफप्रत्ययेन निर्देशः स्यात्। यथा—"रेफं स्वरधौ" इति। चशब्दात् इतिना च। यथा—"यिति०" इत्यादि॥

स्वैररपि ॥ ४० ॥

(उ० भा०) स्वैररपि व्यञ्जनानां निर्देशो भवति। यथा—"नुः", "चछयोः शम्", "तथयोः सम्" इति॥

(अ० भा०) स्वैररपि व्यञ्जनस्य निर्देशः स्यात्। यथा—"नुः", "चछयोः शम्"॥

नानुस्वार-यम-विसर्जनीय-जिह्वामूलीयो-पध्मानीयाः ॥ ४१ ॥

(उ० भा०) वक्ष्यति—"अं इत्यनुस्वारः"। तथा—"कुँ खुँ गुँ घुँ इति यमाः"। तथा—"अः इति विसर्जनीयः"। तथा—"ᳵक इति जिह्वामूलीयः", "ᳵप इत्युपध्मानीयः"। एते न कारप्रत्ययेन निर्देष्टव्याः। यथा—"अनुस्वारं रोष्मसु मकारः" इति अनुस्वारस्य स्वशब्देनैव निर्देशः। तथा—"ऊष्मभ्यः पञ्चमेषु यमापत्तिदोषः" इति यमस्य स्वशब्देनैवोपादानम्। तथा विसर्जनीयस्य—"विसर्जनीयः" इति। तथा—"जिह्वामूलीयोपध्मानीयौ शाकटायनः" इति॥

(अ० भा०) "अं इत्यनुस्वारः", "अः इति विसर्जनीयः", "कुँ खुँ गुँ घुँ इति यमाः", "ᳵक इति जिह्वामूलीयः", "ᳵप इत्युपध्मानीयः" एते कारप्रत्ययादिना न निर्दिष्टाः। किन्तु स्वशब्दैरेव निर्देष्टव्याः। यथा—"अनुस्वारं रोष्मसु मकारः" इति स्वशब्देनैव निर्देशः। तथा—"ऊष्मभ्यः पञ्चमेषु

यमापत्तिर्दोषः'' इति यमशब्देन निर्देशः । तथा विसर्जनीयस्य—" विसर्जनीयः'' इति, " जिह्वामूलीयोपध्मानीयौ शाकटायनः'' इति ॥

दन्त्यस्य मूर्धन्यापत्तिर्नतिः ॥ ४२ ॥

(उ० भा०) दन्त्यस्य मूर्धन्यभावो नतिरुच्यते । तद्यथा—"परि सिञ्चन्ति > परिषिञ्चन्ति" । संज्ञाकरणे प्रयोजनम्—" स्विति चानतौ" इत्यादि ॥

(अ० भा०) दन्त्यस्य मूर्धन्यभावो नतिसंज्ञः स्यात् । यथा—" परि सिञ्चन्ति > परिषिञ्चन्ति" ॥

समानस्थानकरणास्यप्रयत्नः सवर्णः ॥ ४३ ॥

(उ० भा०) समानमेकं स्थानं करणमास्यप्रयत्नश्च यस्य स एवमुच्यते । यो यस्य वर्णस्य समानस्थानः समानकरणः समानमुखप्रयत्नः स तस्य सवर्णसंज्ञो भवति । तद्यथा—"प्र अर्पयतु > प्रार्पयतु" । "तव अयं > तवायँ सोमः" । "स्रुचि इव > स्रुचीव घृतम्" । "अभि इन्धतां > अभीन्धताम् मुखे" । "अनु उज्जेषं > अनूज्जेषं वाजस्य" । "अनु उज्जायतां > अनूज्जायताम्" । ऋकारऌकारयोरपि सवर्णदीर्घत्वमेव भवति यद्युदाहरणं छन्दसि लभ्यते । संज्ञाकरणे प्रयोजनं वक्ष्यति—"सिँ सवर्णे दीर्घम्" इति ॥

(अ० भा०) समानमेकं स्थानं करणमास्यप्रयत्नश्च यस्य सः सवर्णसंज्ञः स्यात् । यथा—" प्र अर्पयतु > प्रार्पयतु" इत्यादि । प्रयोजनं तु "सिँ सवर्णे दीर्घम्" इति ॥

सिमादितोऽष्टौ स्वराणाम् ॥ ४४ ॥

(उ० भा०) वर्णसमाम्नायस्यादौ अष्टानां स्वराणां सिम् संज्ञा भवति । अष्टाविति विभक्तिव्यत्ययेन षष्ठीबहुवचनं द्रष्टव्यम्, स्वराणामिति

सामानाधिकरण्यात्। यथा—अ आ, इ ई, उ ऊ, ऋ ॠ। वर्णसमाम्नाये त्रिमात्रा अपि वक्ष्यन्ते। इह सन्धौ तु तेषां ग्रहणं न सम्भवति प्रयोजनाभावात्। त्रिमात्रान् हि स्वयमेव वक्ष्यति—"सर्वमग्नाऽ३इ लाजी३ञ्छाची३निति त्रिमात्राणि च" इत्यादिना। सवर्णदीर्घत्वं च संज्ञाकरणे प्रयोजनम्। न च सवर्णदीर्घत्वमुक्तानां प्लुतानां च सम्भवति, अतः प्लुता न गृह्यन्ते। संज्ञाकरणे प्रयोजनं वक्ष्यति—"सिँ सवर्णे दीर्घम्" इति॥

(अ० भा०) वर्णसमाम्नायस्यादौ अ आ, इ ई, उ ऊ, ऋ ॠ इत्येतेषामष्टानां स्वराणां सिमिति संज्ञा स्यात्। अष्टावित्यत्र विभक्तिव्यत्ययेन षष्ठीबहुचनं द्रष्टव्यम्, स्वराणामिति सामानाधिकरण्यात्। स्वराणां मध्ये ये आदित अष्टौ स्वराः ते सिँसंज्ञाः स्युः। समाम्नाये त्रिमात्रा अपि वक्ष्यन्ते। इह तु न ते गृह्यन्ते, प्रयोजनाभावात्॥

सन्ध्यक्षरं परम्॥ ४५ ॥

(उ० भा०) स्वराणामित्यनुवर्त्तते। स्वराणां यत्परमन्त्यमक्षरं तत्सन्ध्यक्षरसंज्ञं भवति। सन्ध्यक्षरमिति जातावेकवचनम्। यथा—पक्वो यव इति। सन्ध्यक्षराणि पराणीत्यर्थः। तानि चत्वारि द्विमात्राणि गृह्यन्ते न प्लुतान्यपि प्रयोजनाभावात्। प्रयोजनार्थं च संज्ञापरिभाषाः क्रियन्ते। अतो द्विमात्राण्येव गृह्यन्ते, न सर्वाणीति। वर्णसमाम्नाये तु सर्वेषां वर्णानां पाठो युक्तरूप एव। तत्र हि एतावन्तो वर्णाः सम्भवन्तीत्येतदेव ख्याप्यते। अतस्तत्र सर्वेषां पाठो युक्तरूप एवेत्यदोषः। इह तु कार्यवन्त एवोपदिश्यन्ते। तद्यथा—ए ऐ, ओ औ। संज्ञायाः प्रयोजनम्—"सन्ध्यक्षरमयवायावम्" इति॥

(अ० भा०) अष्टभ्यः यत् परं ए ऐ ओ औ इत्येतच्चतुष्टयं सन्ध्यक्षरसंज्ञं स्यात्। अत्रापि न त्रिमात्रग्रहणम्, प्रयोजनाभावात्। संज्ञाप्रयोजनम्—"सन्ध्यक्षरमयवायावम्" इति॥

अकण्ठ्यो भावी ॥ ४६ ॥

(उ० भा०) स्वराणामित्येव। कण्ठ्यौ अकाराकारौ वर्जयित्वा स्वराणां भाविसंज्ञा भवति। तद्यथा—इ ई, उ ऊ, ऋ ॠ, ऌ ॡ, ए ऐ, ओ औ। संज्ञाकरणे प्रयोजनं वक्ष्यति—"भाव्युपधश्च रिफिद्विसर्जनीयः" इति ॥

(अ० भा०) स्वरप्रकरणान्नान्यो गृह्यते। कण्ठे भवः कण्ठ्यः अकारः, कण्ठ्यवर्जिताः स्वराः भाविसंज्ञाः स्युः। यथा—इ ई, उ ऊ, ऋ ॠ, ए ऐ, ओ औ इति ॥

व्यञ्जनं कादि ॥ ४७ ॥

(उ० भा०) ककारादि ऊष्मान्तं यद्वर्णजातं तद्व्यञ्जनसंज्ञं भवति। "कितिखितिगितिघितिङिति" इत्यादि "अं इत्यनुस्वारः" इत्येतदन्तम्। संज्ञाकरणे प्रयोजनम्—"व्यञ्जनमर्धमात्रा" इत्यादि ॥

(अ० भा०) ककारादि अनुस्वारान्तवर्णजातं व्यञ्जनसंज्ञं स्यात् ॥

अनन्तरं संयोगः ॥ ४८ ॥

(उ० भा०) अनन्तरमव्यवहितं व्यञ्जनं व्यञ्जनेन सह संयोगसंज्ञं भवति। तद्यथा—पक्कम्—कितिकितिविति। अश्वः-शितिशितिविति। संज्ञाकरणे प्रयोजनं वक्ष्यति—"स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र" इति ॥

(अ० भा०) स्वरेण व्यवहितं व्यञ्जनं व्यञ्जनद्वयादिना संयोगसंज्ञं स्यात्। यथा "स्वात्मन्" इत्यादि ॥

स्पर्शेष्वेव संख्या ॥ ४९ ॥

(उ० भा०) ककारादयः पञ्चवर्गाः पञ्चवर्णाः समाम्नाये स्पर्शसंज्ञा उक्ताः, तेषु वर्गेषु संख्या ज्ञातव्या। वक्ष्यति—"असस्थाने मुदि द्वितीयं शौनकस्य", "पञ्चमे पञ्चमम्" इति। परिभाषासूत्रमेतत् ॥

(अ० भा०) कादयो मावसानाः स्पर्शाः। तेष्वेव संख्या ज्ञातव्या। वक्ष्यति—"असस्थाने मुदि द्वितीयं शौनकस्य", "पञ्चमे पञ्चमम्" इत्यादौ ॥

## द्वौ द्वौ प्रथमौ जित् ॥ ५० ॥

(उ० भा०) "स्पर्शेष्वेव संख्या" इति परिभाषितमेव। अतस्तस्याः परिभाषाया इहोपस्थानम्। द्वौ द्वौ प्रथमौ वर्णौ वर्गे वर्गे जित्संज्ञौ। यथा—क ख, च छ, ट ठ, त थ, प फ। संज्ञाकरणे प्रयोजनम्—"लुङ् मुदि जित्परः" इति ॥

(अ० भा०) "स्पर्शेष्वेव संख्या" इति परिभाषितम्, अतः परिभाषाप्रयोजनमनेनोच्यते। वर्गे वर्गे द्वौ द्वौ प्रथमौ वर्णौ जित्संज्ञकौ स्याताम्। यथा—क ख, च छ, ट ठ, त थ, प फ इत्येतौ ॥

## ऊष्माणश्च हवर्जम् ॥ ५१ ॥

(उ० भा०) ऊष्माणश्च जित्संज्ञका भवन्ति, हकारं वर्जयित्वा। तद्यथा—शषसाः। चशब्दात् द्वौ द्वौ प्रथमौ वर्गे वर्गे—क ख, च छ, ट ठ, त थ, प फ। एते त्रयोदशवर्णा जित्संज्ञा वेदितव्याः ॥

(अ० भा०) हकारवर्जिताः शषसा अपि जित्संज्ञाः स्युः ॥

## मुच्च ॥ ५२ ॥

(उ० भा०) मुत्संज्ञकाः शषसा भवन्ति। चशब्दाज्जित्संज्ञकाश्च। शषसेष्वेव मुत्संज्ञा यथा स्यादिति पृथग्योगकरणम्। संज्ञायाः प्रयोजनम्—"लुङ् मुदि जित्परः" इति ॥

(अ० भा०) शषसा मुत्संज्ञकाः स्युः। शषसेष्वेव मुत्संज्ञा यथा स्यादिति पृथक्सूत्रकरणम्। अन्यथा 'द्वौ द्वौ प्रथमौ जित्', 'ऊष्माणश्च' इत्यवक्ष्यत्॥

धि शेषः ॥ ५३ ॥

(उ० भा०) कृतसंज्ञकेतरवचनः शेषशब्दः। शेषो यो वर्णराशिः स धिसंज्ञो भवति। तद्यथा—वर्गाणामुत्तरास्त्रयो यरलवहकाराश्चेति विंशतिर्वर्णा धिसंज्ञा भवन्ति। संज्ञाकरणे प्रयोजनम्—"रेफँ स्वरधौ" इति॥

(अ० भा०) कृतसंज्ञकेतरवचनः शेषशब्दः, शेषो यो वर्णराशिः धिसंज्ञः स्यात्। स च वर्गाणामुत्तरास्त्रयः यरलवहकाराश्च। एते विंशतिवर्णाः शेषाः॥

द्वितीयचतुर्थाः सोष्माणः ॥ ५४ ॥

(उ० भा०) द्वितीयाः खछठथफाः, चतुर्थाः घझढधभाः, एते दशवर्णाः सोष्मसंज्ञा भवन्ति। इह यासां संज्ञानां शास्त्रे संव्यवहारो नोपलभ्यते पूर्वाचार्यसंज्ञास्ता वेदितव्याः शिष्यसंव्यवहारार्थाः, शिष्या आभिः संव्यवहरेयुरिति पूर्वाचार्यसंज्ञानुकथनमस्मिन् शास्त्रे मङ्गलार्थं च पूर्वाचार्यशास्त्रकीर्त्यपरिणाशार्थं वा। यद्वा यथा एते वर्णा नित्या एवमेता अपि संज्ञा नित्या एव। एवं च कृत्वा सर्वशास्त्रेष्वेता एव संज्ञा उपलभ्यन्ते—द्वितीयचतुर्थाः सोष्माणः, तथा ककारादीनां स्पर्शसंज्ञा, तथा यकारादीनामन्तस्थसंज्ञा। आभिः संज्ञाभिर्व्यवहरतां धर्मो भवति। यद्वा नैव संज्ञा। किन्तर्हि? वर्णस्वरूपमनेन सूत्रेण कथ्यते। ऊष्मा वायुः, ऊष्मणा सह वर्तन्त इति सोष्माणः अतिशयार्थं वचनम्, महाप्राणा इत्यर्थः। अत एवैषां संयोगपीडने वायुर्निर्गच्छति तन्निर्धारयेत्। यथा—"दध्ना"। दकारो धकारप्रकृतिर्यमः नकार इति संयोगः। अत्र धकारप्रकृतित्वात् यमस्य पीडने ऊष्मा निष्क्रामति,

तं सन्धारयेत् तदात्मकत्वात्तस्य वर्णस्य । आचार्योऽपि यमस्य स्फोटने दोषं वक्ष्यति—"ऊष्मभ्यः पञ्चमेषु यमापत्तिर्दोषः" इति, "स्फोटनं च ककारवर्गे वा स्पर्शात्" इति ॥

(अ० भा०) द्वितीयाः खछठथफाः, चतुर्थाः घझढधभाश्च सोष्मसंज्ञाः स्युः, इदं पूर्वोक्तबाह्यप्रयत्नविवरणमिति द्रष्टव्यम् । यस्याश्शास्त्रसंव्यवहारो नास्ति सा संज्ञा पूर्वाचार्यकृता मङ्गलार्थं वेदितव्या ॥

अमात्रस्वरो ह्रस्वः ॥ ५५ ॥

(उ० भा०) अकारमात्रस्वरो ह्रस्वसंज्ञो भवति। तद्यथा–अ इ उ ऋ ऌ । संज्ञाकरणे प्रयोजनं वक्ष्यति—"अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्द्धमात्रा" इति ॥

(अ० भा०) अ इत्येवमुच्चारणकालः स्वरः ह्रस्वसंज्ञः स्यात् । यथा–अ इ उ ऋ ऌ । ह्रस्वस्य मात्रेत्यपि संज्ञा ज्ञेया ॥

मात्रा च ॥ ५६ ॥

(उ० भा०) मात्रा च यत्र श्रूयते तत्र अकारकालो मात्रावरः प्रत्येतव्यः। ह्रस्वो मात्रेति पर्यायावित्यर्थः ॥

(अ० भा०) मात्राश्च यत्र श्रूयन्ते तत्र अकारकालमात्रस्वरो वेदितव्यः । ह्रस्वो मात्रेति पर्याय इत्यर्थः ॥

द्विस्तावान् दीर्घः ॥ ५७ ॥

(उ० भा०) ह्रस्वात् द्विगुणकालो वर्णो दीर्घसंज्ञो भवति। यथा—आ ई ऊ ॠ ॡ ए ऐ ओ औ इति। संज्ञाकरणे प्रयोजनम्—"दीर्घादर्धमात्रा पूर्वा चाध्यर्धा" इति ॥

(अ० भा०) ह्रस्वाद्द्विगुणोच्चारणकालस्वरः दीर्घसंज्ञः स्यात् ॥

प्लुतस्त्रिः ॥ ५८ ॥

(उ० भा०) ह्रस्वत्रिगुणकालः प्लुतसंज्ञो भवतीति। यथा— आ३ ई३ ऊ३ ऋ३ ऌ३ ए३ ऐ३ ओ३ औ३। संज्ञाकरणे प्रयोजनम्— "प्लुतमितौ" इत्यादि ॥

(अ० भा०) ह्रस्वत्रिमात्रोच्चारणकालस्वरः प्लुतसंज्ञः स्यात्। यथा— आ३ ई३ ऊ३ ऋ३ ऌ३ ए३ ऐ३ ओ३ औ३ इति ॥

व्यञ्जनमर्धमात्रा ॥ ५९ ॥

(उ० भा०) कादीनां व्यञ्जनसंज्ञा कृता—"व्यञ्जनं कादि" इति। अधुना तस्यार्धमात्राकालतोच्यते। यथा—प्राङ्, प्रत्यङ्। ङकारावर्धमात्रौ ॥

(अ० भा०) "व्यञ्जनं कादि" इत्युक्तम्। तदर्धमात्रसंज्ञं स्यात्। यथा—प्राङ्, प्रत्यङ् ॥

तदर्धमणु ॥ ६० ॥

(उ० भा०) अर्धमात्रार्धमणुसंज्ञं भवति। संज्ञाकरणे प्रयोजनम्— "मात्रार्धमात्राणुमात्रा वर्णापत्तीनाम्" इति ॥

(अ० भा०) व्यञ्जनादर्धमात्रमणुसंज्ञं स्यात्। संज्ञाप्रयोजनम्— "मात्रर्धमात्राणुमात्रा वर्णापत्तीनाम्" इति ॥

परमाण्वर्धाणुमात्रा ॥ ६१ ॥

(उ० भा०) अर्धाणुमात्रा परमाणुसंज्ञं भवति ॥

(अ० भा०) अर्धाणुमात्रा परमाणुसंज्ञा स्यात् ॥

**स्थाने ॥ ६२ ॥**

(उ० भा०) **अधिकरणं वर्णानां स्थानशब्देनोच्यते। यदित ऊर्ध्वमनुक्रमिष्यामः स्थाने इत्येवं तद्वेदितव्यम्। अधिकारसूत्रमेतत् ॥**

(अ० भा०) अधिकरणं वर्णानां स्थानशब्देनोच्यते। यदित ऊर्ध्वमनुक्रमिष्यामः तत् स्थाने इति वेदितव्यम्। अधिकारसूत्रमेतत् ॥

**ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् ॥ ६३ ॥**

(उ० भा०) **ह्रस्वस्य वर्णस्य ग्रहणे दीर्घप्लुतावपि वर्णौ गृहीतौ द्रष्टव्यौ। परिभाषेयं स्थानाधिकारार्था ॥**

(अ० भा०) अत्र शास्त्रे ह्रस्वग्रहणे दीर्घप्लुतावपि ग्राह्यौ। परिभाषासूत्रमेतत् ॥

**प्रथमग्रहणे वर्गम् ॥ ६४ ॥**

(उ० भा०) **वर्गादौ प्रथमवर्णग्रहणे वर्गं जानीयात्। परिभाषेयम् ॥**

(अ० भा०) वर्गस्य प्रथमाक्षरग्रहणे सम्पूर्णो वर्गः प्रत्येतव्यः। परिभाषेयम् ॥

स्थाने इत्युक्तम्। तद्विवृणोति—

**ॠऌकौ जिह्वामूले ॥ ६५ ॥**

(उ० भा०) **ऋ ॠ ऋ३ इति त्रयः, जिह्वामूलीयः, कवर्गः, इत्येते नव वर्णा जिह्वामूलस्थानाः ॥**

(अ० भा०) ऋ ॠ ॠ३, कवर्गः, जिह्वामूलीयश्च, जिह्वामूलस्थानाः स्युः ॥

इचशेयास्तालौ ॥ ६६ ॥

(उ० भा०) इ ई ई३ इति त्रयः, चवर्गः, शकारः, एकारः, यकारः, इत्येते एकादशवर्णास्तालुस्थानाः ॥

(अ० भा०) "ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात्" इत्युक्तत्वात् प्रकृते इकारग्रहणं दीर्घप्लुतयोरपि ग्राहकम् । तेन इ ई ई३ इति त्रयो वर्णाः, चवर्गः, शकारः, एकारश्च, तालुस्थानाः स्युः ॥

षटौ मूर्धनि ॥ ६७ ॥

(उ० भा०) षकारः टवर्ग इत्येते षड्वर्णा मूर्धन्या द्रष्टव्याः ॥

(अ० भा०) षकारः टवर्गः इति षड्वर्णा मूर्धन्यस्थानाः स्युः ॥

रो दन्तमूले ॥ ६८ ॥

(उ० भा०) रेफो दन्तमूलस्थानः प्रत्येतव्यः ॥

(अ० भा०) रेफो दन्तमूलस्थानः स्यात् ॥

ऌलसिता दन्ते ॥ ६९ ॥

(उ० भा०) ऌ ॡ ॡ३ एते त्रयः, लकारः, सकारः, तवर्गः, इत्येते दश वर्णा दन्त्याः ॥

(अ० भा०) ऌ ऌ ॡ३ लकारः सकारः तवर्गश्च दन्तस्थानाः स्युः ।

उवोपोपध्मा ओष्ठे ॥ ७० ॥

(उ० भा०) उ ऊ ऊ३ एते त्रयः, वकारः, ओकारः, उपध्मानीयः, पवर्गः, एते एकादशवर्णा ओष्ठ्याः ॥

(अ० भा०) उ ऊ ऊ३, वकारः, ओकारः, पवर्गश्च, उपध्मानीयश्च, एते ओष्ठस्थानाः स्युः ॥

अहविसर्जनीयाः कण्ठे ॥ ७१ ॥

(उ० भा०) अकारो मात्रिको द्विमात्रिकस्त्रिमात्रिक इत्येते त्रयः, हकार-विसर्जनीयौ, इत्येते पञ्च वर्णाः कण्ठ्याः प्रत्येतव्याः ॥

(अ० भा०) अ आ आ३, हकारः, विसर्गश्च, एते कण्ठस्थानाः स्युः ॥

सवर्णवच्च ॥ ७२ ॥

(उ० भा०) "अहविसर्जनीयाः कण्ठे" इति अकारस्य मात्रिकस्य द्विमात्रिकस्य त्रिमात्रिकस्य च कण्ठस्थानता उक्ता। यथा— "कण्ठ्या मध्येन" इति समानकरणता त्रयाणामपि। आस्यप्रयत्नस्तु भिद्यते। कोऽसावास्यप्रयत्नो नाम? संवृतता विवृतता च, अस्पृष्टता स्पृष्टता च, ईषत्स्पृष्टता अर्धस्पृष्टता च, इत्यास्यप्रयत्नः। तद्यथा—संवृतास्यप्रयत्न अकारः, विवृतास्यप्रयत्ना इतरे स्वराः। यथा अस्पृष्टास्यप्रयत्नाः स्वराः स्पृष्टास्यप्रयत्नाः स्पर्शाः तथा ईषत्स्पृष्टास्यप्रयत्ना अन्तस्थाः अर्धस्पृष्टास्यप्रयत्ना ऊष्माण अनुस्वारश्च। अयमास्यप्रयत्नः शिक्षाविद्भिरुक्त इह गृह्यते। अत्रोकारस्य मात्रिकस्य संवृतास्यप्रयत्नस्य इतरयोश्च विवृतास्यप्रयत्नयोर्द्विमात्रिक-त्रिमात्रिकयोः सह सावर्ण्यं तुल्यं न सम्भवतीति तदर्थमिदमारभ्यते—सवर्णवच्च कार्यं भवति, सवर्णदीर्घत्वं भवतीत्यर्थः। तद्यथा—"सोमा भूयो भर", "मा त्वा अग्निः > मा त्वाग्निर्ध्वनयीत्"। एवमन्यत्रापि सवर्णवत्कार्यं द्रष्टव्यम् ॥

(अ० भा०) संवृतप्रयत्न अकारः विवृतप्रयत्नयोर्दीर्घप्लुतयोः अवर्णयोः सवर्णवत् स्यात्। स्पृष्टं प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्टमन्तस्थानाम्। विवृतप्रयत्नमूष्मणां स्वराणां च। दीर्घप्लुतयोरवर्णयोः विवृतत्वम्। संवृतं ह्रस्वस्येति भिन्नप्रयत्नत्वेन दीर्घादीनां सावर्ण्याभावात् वचनेन सावर्ण्यमभिहितम्।

अतिदेशप्रयोजनं तु "सोमा भूयो भर" इत्यादौ ह्रस्वस्य दीर्घपरे सवर्णदीर्घत्वं द्रष्टव्यम् ॥

ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्वोष्ठ्योरुत्तरा ॥ ७३ ॥

(उ० भा०) ऐकारस्य औकारस्य च कण्ठ्या पूर्वा मात्रा अकारमात्रा उभयोरपि पूर्वा, उत्तरा प्रथमस्य तालुस्थाना एकार इत्यर्थः । तद्यथा–अ ए > ऐ इति । द्वितीयस्योत्तरा ओष्ठस्थाना ओकार इत्यर्थः । तद्यथा–अ ओ > औ इति । अत्र केचिदाहुः---अकारस्यार्धमात्रा एकारस्याध्यर्धा ऐकारे । अकारस्यार्धमात्रा ओकारस्याध्यर्धा औकारे इति । तथाचोक्तम्—

"अर्धमात्रा तु कण्ठ्यस्य ऐकारौकारयोर्भवेत् ।" इति ।

अनेनैव क्रमेण एकारौकारौ व्याख्यातौ ॥

(अ० भा०) ऐकारस्य च औकारस्य च पूर्वा अकारमात्रा कण्ठ्या कण्ठस्थाना प्रथमस्य, उत्तरा एकाररूपा तालुस्थाना । द्वितीयस्योत्तरा ओकाररूपा ओष्ठस्थाना । अत्र केचिदाहुः—अकरास्यार्धमात्रा, एकारस्य अध्यर्धमात्रा ऐकारौकाराविति ।

"अर्धमात्रा तु कण्ठ्यस्य द्वयोरध्यर्धमात्रता ।"

इति वचनात् । अध्यर्धमात्रा सार्धमात्रेत्यर्थः ॥

यमानुस्वारनासिक्यानां नासिके ॥ ७४ ॥

(उ० भा०) चत्वारो यमाः, अनुस्वारनासिक्यौ चेति षड्वर्णा नासिकास्थाना इति ॥

(अ० भा०) चत्वारो यमाः, अनुस्वारानुनासिक्यौ, एते नासिकास्थानाः स्युः ॥

मुखनासिकाकरणोऽनुनासिकः ॥ ७५ ॥

(उ० भा०) मुखसहितया नासिकया क्रियत इति मुखनासिकाकरणः। मुखनासिकाकरणो वर्णोऽनुनासिकसंज्ञो भवति। जातावेकवचनम्। स्वराणामयं वैकल्पिको धर्मः, अन्तस्थानां रेफवर्जितानां च वाचनिकश्चायं धर्मः। तद्यथा—"अनुनासिकमुपधा प्रागन्तस्थायाः" यथा—"महाँ इन्द्रः"। "उन्नयामि स्वाँ अहम्"। "ये वा वनस्पतीं रनु"। "अग्ने क्रत्वा क्रतूँ रनु"। अन्तस्थासु भवति। वक्ष्यति—"अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम्"। "सँय्यौमि सँव्वपामि तँल्लोकम्पुण्यं प्रज्ञेषमिति"। इत उत्तरं करणाधिकारो भविष्यति॥

(अ० भा०) मुखसहितया नासिकया क्रियते उच्चार्यत इति मुखनासिकाकरणः, सोऽनुनासिकसंज्ञः स्यात्। स्वराणां वैकल्पिकोऽयं धर्मः, रेफवर्जितानामन्तस्थानां वाचनिकोऽयं धर्म इति विवेकः। "तं यज्ञं सँव्वपामीति", "तं लोकम्"॥

इत ऊर्ध्वं करणमुच्यते—

**दन्त्या जिह्वाग्रकरणाः॥ ७६॥**

(उ० भा०) दन्त्या जिह्वाग्रेण क्रियन्ते तद्यथा तथेति॥

**रश्च॥ ७७॥**

(उ० भा०) रेफश्च जिह्वाग्रेण क्रियते अन्यस्थानोऽपि॥

**मूर्धन्याः प्रतिवेष्ट्याग्रम्॥ ७८॥**

(उ० भा०) मूर्धन्याः षकारटवर्गौ एतौ प्रतिवेष्ट्य जिह्वाग्रेण क्रियन्ते॥

(अ० भा०) मूर्धन्याः षकारादयः प्रतिवेष्ट्य जिह्वाग्रकरणाः स्युः॥

**तालुस्थाना मध्येन॥ ७९॥**

(उ० भा०) तालुस्थाना इचशेयाः। एते जिह्वामध्येन क्रियन्ते ॥

(अ० भा०) जिह्वेत्यनुवर्त्तते । तालुस्थाना इकारादयः जिह्वामध्यकरणाः स्युः ॥

समानस्थानकरणा नासिक्यौष्ठ्याः ॥ ८० ॥

(उ० भा०) हुँकारो नासिक्यः, स च नासिकास्थानः। "उवोपोपध्मा ओष्ठे" इत्योष्ठस्थानाः। एतेषां यदेव स्थानं तदेव करणम् ॥

(अ० भा०) हुंकारो नासिक्यः, ओष्ठ्या उकारादयश्च समानस्थानकरणाः स्युः। एतेषां यदेव स्थानं तदेव करणमित्यर्थः ॥

वो दन्ताग्रैः ॥ ८१ ॥

(उ० भा०) वकारस्तु ओष्ठ्योऽपि दन्ताग्रैः क्रियते ॥

(अ० भा०) वकार ओष्ठ्योऽपि दन्ताग्रकरणः स्यात् ॥

नासिकामूलेन यमाः ॥ ८२ ॥

(उ० भा०) यमाश्चत्वारो नासिकामूलेन क्रियन्ते। यथा—"यज्ञः", "याँश्च", "रुक्मः" इति ॥

(अ० भा०) यमाः नासिकामूलकरणाः स्युः। यथा—"यज्ञः", "यांश्च", "रुक्मम्" इत्यादि ॥

जिह्वामूलीयानुस्वारा हनुमूलेन ॥ ८३ ॥

(उ० भा०) जिह्वामूलस्थाना अनुस्वारश्च हनुमूलेन क्रियन्ते। यथा—"ऋक्सामयोः", "अँशुना ते अँशुः" ॥

(अ० भा०) जिह्वामूलीयादयः हनुमूलकरणाः स्युः ॥

कण्ठ्या मध्येन ॥ ८४ ॥

(उ० भा०) कण्ठ्या वर्णा मध्येन हन्वोरेव क्रियन्ते। यथा—"अहः" इति ॥

(अ० भा०) अकारादयो हनुमध्यकरणाः स्युः ॥

प्रथमोत्तमाः पदान्तीया अच्ञौ ॥ ८५ ॥

(उ० भा०) एवं तावदधस्तनेन वर्णानां स्थानानि करणानि चोक्तानि। आस्यप्रयत्नस्तु शिक्षान्तराद् गृह्यते सवर्णसंज्ञाङ्गभूतत्वात्। अधुना पदान्तीयवर्णनिरूपणायाह—प्रथमोत्तमाः पदान्तीया भवन्ति चकारञकारौ वर्जयित्वा। प्रथमा यथा—प्राक्, अपाक्, विराट्, सम्राट्, यत्, तत्, त्रिष्टुप्, अनुष्टुप्। उत्तमा यथा—प्राङ्, प्रत्यङ्, त्रीन्, समुद्रान्, तं यज्ञम् ॥

(अ० भा०) एवं वर्णानां स्थानं करणं चोक्त्वा अधुना पदान्तीयवर्णानाह—वर्गप्रथमोत्तमाः पदान्तीयसंज्ञाः स्युः चकारञकारौ वर्जयित्वा। प्रथमा यथा—प्राक्, अपाक्, विराट्, यत्, अनुष्टुप्, इत्यादि। यथा उत्तमाः—प्राङ्, प्रत्यङ्, त्रीन्, समुद्रान्, तं यज्ञम् ॥

विसर्जनीयः ॥ ८६ ॥

(उ० भा०) विसर्जनीयः पदान्तीयो भवति। यथा—अग्निः, घर्मः ॥

(अ० भा०) विसर्जनीयोऽपि पदान्तसंज्ञः स्यात्। अग्निः, घर्मः। "विष्णोः क्रमोऽसि"। "ततः खनेम" ॥

स्वराश्च ऌकारवर्जम् ॥ ८७ ॥

(उ० भा०) स्वराश्च पदान्तीया भवन्ति ऌकारं वर्जयित्वा। यथा—द्वीप्याय, नीप्याय, अश्विना, मित्रावरुणा, स्रुचि, इन्द्राग्नी, मधु, अनु, वृषण्वसू, चमू, द्वे, विरूपे, पृथिव्यै, भूम्यै, इन्दो, अश्विनौ, एतानि स्वरान्तान्युदाहरणानि ॥

(अ० भा०) ऌकारवर्जाः स्वरा अपि एतत्संज्ञाः स्युः। यथा—ज्येष्ठाय, कनिष्ठाय, अश्विना, मित्रावरुणा, अभि, इन्द्राग्नी, मधु, वृषण्वसू, द्वे, विरूपे, पृथिव्यै, अश्विनौ ॥

णकारर्कारावकवग्रहे ॥ ८८ ॥

(उ० भा०) "प्रथमोत्तमाः पदान्तीया०" इत्यनेन णकारः पदान्तीयः प्राप्तः। "स्वराश्च ऌकारवर्जम्" इत्यनेन ऋकारश्च पदान्तीयः प्राप्तः। अतस्तावुभौ पदान्तीयावापद्येते अवग्रह एव स्थाप्येते। यथा—पूषण्वान्, वृषण्वसू, पितृसदनाः, पितृसदनम् ॥

(अ० भा०) णकारऋकारौ पदमध्ये पदान्तीयसंज्ञौ स्तः। "स्वराश्च ऌकारवर्जम्", "प्रथमोत्तमाः पदान्तीयाः०" इति ऋकारणकारयोः पदान्तीयत्वे प्राप्तेऽपि पुनर्वचनमवग्रहे यथा स्यादिति। यथा—पूषण्वान्, वृषण्वसू, पितृषदनाः ॥

अनुनासिकाश्चोत्तमाः ॥ ८९ ॥

(उ० भा०) वर्गोत्तमाः ङञणनमा अनुनासिका भवन्ति। चकारात् स्वस्वस्थानाद्यपरित्यागद्वारेण। नासिकास्थानं द्वितीयमेषामित्यर्थः। वर्णस्वरूपज्ञापनार्थमिदम्, संज्ञार्थमित्यपरे ॥

(अ० भा०) वर्ग्यान्ता ङ-ञ-ण-न-माः अनुनासिकसंज्ञाः स्युः। चशब्दात् स्वस्थानादिपूर्वसंज्ञाद्यपरित्यागेन ॥

स्पर्शान्तस्य स्थानकरणविमोक्षः ॥ ९० ॥

(उ० भा०) स्पर्शान्तस्य पदस्य स्थानकरणविमोक्षः कर्तव्यः। अन्येन प्रयत्नेनान्यत् पदमारब्धव्यम्। अन्यथा पदादेर्द्वित्वं भवति। तद्यथा—"तत् नः > तन्नो मित्रो वरुणः", "सम् यौमि > सँय्यौमीदमग्नेः" ॥

(अ० भा०) स्पर्शान्तस्य पदस्य नासिकाकरणयोः परित्यागः स्यात्। पदस्यान्यप्रयत्नारभ्यत्वात्। अन्यथा पूर्वपदादेर्द्वित्वम्। पदानां स्थानकरणविमोक्षः स्यात्। यथा—"तत् नः > तन्नो मित्रः", "सम् यौमि > सँय्यौमि" ॥

अवसाने च ॥ ९१ ॥

(उ० भा०) समाप्तौ च अर्धर्चादौ स्वरान्तानामपि पदानां स्थानकरणविमोक्षः कर्त्तव्यः। यथा—"संमधुमतीर्मधुमतीभिः पृच्यन्ताम्", "शुक्रन्दुदुह्रे अह्रयः" ॥

(अ० भा०) समाप्तौ अर्धर्चादौ पदानां स्वरान्तानामपि पदानां स्थानकरणविमोक्षः स्यात्। यथा—"संमधुमतीर्मधुमतीभिः पृच्यन्ताम्", "शुक्रं दुदुह्रे अह्रयः" ॥

प्रगृह्यम् ॥ ९२ ॥

(उ० भा०) प्रगृह्यमित्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः प्रगृह्यमिति तद्वेदितव्यम्। प्रगृह्यसंज्ञायाः प्रयोजनम् "प्रगृह्यँ स्वरे" इत्यादि ॥

(अ० भा०) इत ऊर्ध्वं यदनुक्रमिष्यामः तत् प्रगृह्यसंज्ञं स्यात्। अधिकारसूत्रमेतत्। प्रयोजनम्—"प्रगृह्यँ स्वरे" इत्यादि ॥

एकारेकारोकारा द्विवचनान्ताः ॥ ९३ ॥

(उ० भा०) एकार ईकार ऊकार एते द्विवचनप्रातिपदिकाः सन्तः प्रगृह्यसंज्ञा भवन्ति। यथा एकारस्य भवति—"द्वे इति", "शीर्षे इति"। यथा ऊकारान्तस्य भवति—"अध्वर्यू इति", "बाहू इति"॥

(अ० भा०) एकारान्तं ईकारान्तं ऊकारान्तं च द्विवचनं प्रगृह्यसंज्ञं स्यात्। संज्ञाप्रयोजनमुत्तरत्र भविष्यति। अन्तरशब्दो भिन्नक्रमो व्याख्येयः। अन्यथा 'कुमार्योरगारम् > कुमार्यगारम्' इत्यत्रापि संज्ञाप्राप्त्याऽसन्धिः प्रसज्येत। एतस्य वैदिकमात्रविषयत्वाद्यथाश्रितं व्याख्येयम्। प्रयोजनम्—"प्रकृतिभावात्" इति। यथा—"द्वे इति", "हरी इति", "अध्वर्यू इति"॥

ओकारश्च पदान्तेऽनवग्रहः ॥ ९४ ॥

(उ० भा०) ओकारश्च पदान्ते वर्त्तमानोऽवग्रहवर्जितः प्रगृह्यसंज्ञो भवति। यथा—"अध्वर्यो अद्रिभिः", "चित्रभानो इति", "इन्द्रायाहि चित्रभानो सुताः"। अनवग्रह इति किम्? "गोव्यच्छमिति गो—व्यच्छम्", "गोघातमिति गो—घातम्"॥

(अ० भा०) ओकारश्च पदान्ते वर्त्तमानोऽवग्रहवर्जितः प्रगृह्यं स्यात्। ओ यथा—"चित्रभानो इति", "अध्वर्यो अद्रिभिः"। अनवग्रह इति किम्? "गविष्टा इति गो इष्टौ"। अत्राप्रगृह्यत्वात् अवादेशः। अत्रान्यो विशेषः "प्रगृह्यं स्वरे" इति चतुर्थाध्याये वक्ष्यते॥

उकारोऽपृक्तः ॥ ९५ ॥

(उ० भा०) उकारोऽपृक्तः प्रगृह्यसंज्ञो भवति। "उकारोऽपृक्तो दीर्घमनुनासिकम्" इति वक्ष्यति। एतेनेत्थं रूपं भवति। यथा—"ऊँ मन्वेतवा उ नवा उ एतत्"। अपृक्त इति किम्? "नु इन्द्र > योजान्विन्द्र ते"॥

(अ० भा०) अपृक्त उकारोऽपि प्रगृह्यं स्यात्। यथा—"न वा उ एतत्", "अस्मां उ देवाः"। प्रयोजनम्—"उकारोऽपृक्तो दीर्घमनुनासिकम्" इति वक्ष्यति। अपृक्त इति किम्? "नु इन्द्र > न्विन्द्र"

## चमू अस्मे त्वे ॥ ९६ ॥

(उ० भा०) चमू अस्मे त्वे एतानि पदानि प्रगृह्यसंज्ञकानि भवन्ति। यथा—"चमू इति चमू", "सोममिन्द्र चमूसुतम्", "अस्मे इत्यस्मे इन्द्रो अस्मे आरात्", "त्वे इति-त्वे बन्धुस्त्वे शयः" ॥

(अ० भा०) एतानि पदानि प्रगृह्यसंज्ञानि स्युः। अद्विवचनार्थोऽयमारम्भः। यथा—"चमू इति", "सोममिन्द्र चमूसुतम्"। अत्र चमूशब्दः सप्तम्यर्थतः। "अस्मे इति", "त्वे इति" ॥

## मे उदात्तम् ॥ ९७ ॥

(उ० भा०) मे इत्येतत्पदमुदात्तं चेत्प्रगृह्यसंज्ञं भवति। यथा—"मे इति मे", "मे रायो मा व्वयम्"। उदात्त इति किम्? "इमम्मे वरुण" ॥

(अ० भा०) मे इत्येतत्पदमुदात्तं चेत् प्रगृह्यसंज्ञं स्यात्। "मे इति मे"। उदात्तमिति किम्? "इमं मे वरुण" ॥

## अमी पदम् ॥ ९८ ॥

(उ० भा०) अमी इत्येतत् पदं चेत् प्रगृह्यसंज्ञं भवति। यथा—"अमी इत्यमी", "एष वोऽमी राजा", "ये वामी शोचने दिवः"। पदमिति किम्? पदावयवस्य मा भूत्। "अमीषाश्चित्तम्" ॥

(अ० भा०) अमी इत्येतत्पदं प्रगृह्यं स्यात्। यथा—"अमी इति", "अमी अन्यः"। पदग्रहणं पदावयवस्य मा भूदिति। यथा—"अमीषां चित्तम्" ॥

स्वरोऽक्षरम् ॥ ९९ ॥

(उ० भा०) स्वरोऽक्षरसंज्ञो भवति। यथा—अइति इइति। अक्षरसंज्ञायाः प्रयोजनम्—"प्रागुवर्णादक्षराणामेकीभावः" इति वक्ष्यति। तथा चोक्तम्—

"सव्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम्।" इति ॥

(अ० भा०) स्वरोऽक्षरसंज्ञः स्यात्। संज्ञाप्रयोजनम्—"प्रागुवर्णादक्षराणामेकीभावः" इत्यादि ॥

महाद्यैर्व्यञ्जनैः ॥ १०० ॥

(उ० भा०) आद्यैर्व्यञ्जनैः सहितः स्वरोऽक्षरं प्रत्येतव्यम्। यथा—'मो', ओकारसहितोऽक्षरं प्रत्येतव्यम्। यथा—"द्रु अन्नः > द्रवन्नः"। उकारो दकाररेफसहितोऽक्षरम् ॥

(अ० भा०) आद्यैर्व्यञ्जनैः सहितः स्वरः अक्षरं स्यात्।

"सव्यञ्जनः सानुस्वारः शुध्दो वापि स्वरोऽक्षरम्"।

इति। यथा—मोच इत्यत्र ओकारमकारावक्षरं स्यात्। यथा—वाक्, प्राङ्, प्रत्यङ्। वर्णानां पूर्वाङ्गपराङ्गनिरूपणायेदमारभ्यते ॥

उत्तरैश्चावसितैः ॥ १०१ ॥

(उ० भा०) आद्यैर्व्यञ्जनैः उत्तरैश्चावसानगतैः सहितः स्वरोऽक्षरम्। यथा—वाक्। वकारककारसहित आकारोऽक्षरम्। प्राङ् पकाररेफङकारसहित आकारोऽक्षरम्। एवं तावद्यद्येकः स्वरो भवति तदधस्तनान्युपरितनानि च व्यञ्जनानि तदङ्गानि भवन्तीत्येतत् प्रतिपादितम् ॥

अधुना स्वरयोर्मध्ये द्विप्रभृतीनां व्यञ्जनानामङ्गत्वनिरूपणायाह—

## सँय्योगादिः पूर्वस्य ॥ १०२ ॥

(उ० भा०) संयोगादिभूतो वर्णः पूर्वस्य स्वरस्याङ्गं भवति। यथा—अश्श्वः <अश्-श्वः, द्वौ शकारौ वकारश्च संयोगः। तत्र 'संयोगादिः पूर्वस्य' इति कृत्वा पूर्वः शकारः पूर्वस्य स्वरस्याङ्गम्। उत्तरशकारवकारावुत्तरस्य स्वरस्याङ्गम्। यथा—हव्व्यम् <हव्-व्यम्। द्वौ वकारौ यकारश्च सँयोगः। तत्रैको वकारः 'सँय्योगादिः पूर्वस्य' इति कृत्वा पूर्वस्याङ्गम्, वकारयकारावुत्तरस्य ॥

(अ० भा०) संयोगस्यादिभूतो वर्णः पूर्वस्याङ्गं स्यात्। यथा—"अश्श्वस्तूपरः" इत्यत्र द्वौ शकारौ वकारश्च संयोगसंज्ञः स्यात्। तत्र 'संयोगादिः पूर्वस्य' इत्युक्तेः पूर्वः शकारः पूर्वस्याङ्गम्, शकारवकारावुत्तरस्याङ्गम् ॥

## यमाश्च ॥ १०३ ॥

(उ० भा०) यमः पूर्वस्याङ्गं भवति। चशब्दात् पूर्ववर्णसहितः। यथा—"रुक्क्मम्"। ककारद्वययममकाराः सँय्योगः। तत्र ककारयमौ पूर्वस्य, मकार उत्तरस्य ॥

(अ० भा०) पूर्वाङ्गं स्यात्। चशब्दात् पूर्ववर्णसहितः। यथा- "तं यज्ञम्" इत्यत्र ॥

## क्रमजं च ॥ १०४ ॥

(उ० भा०) क्रमाज्जातं क्रमजम्। यत् सँय्योगादेः परस्य वर्णस्य द्विरुक्त्या जायते तत् क्रमजमित्युच्यते। यथा—"पार्श्श्व्यम्"। रेफो द्वौ शकारौ वकारो यकारश्च सँय्योगः। तत्र रेफः संयोगादिः क्रमजश्च प्रथमः शकारः पूर्वाङ्गम्, द्वितीयः शकारो वकारो यकारश्चोत्तराङ्गम्। वर्ष्य्याय। रेफो द्वौ षकारौ यकारश्च सँय्योगः। तत्र रेफः सँय्योगादिः पूर्वषकारः क्रमजः, एतौ पूर्वाङ्गम्, अपरः षकारो यकारश्चोत्तराङ्गम् ॥

(अ० भा०) क्रमाज्जातं क्रमजम्। यत्संयोगादेः परस्य वर्णस्य द्विरुक्त्या जायते तत् क्रमजमित्युच्यते। यथा—"अन्तःपाश्श्व्यम्" इत्यत्र रेफः शकारद्वयं वकारो यकारश्च संयोगः। तत्र रेफः संयोगादिः, क्रमजश्च प्रथमः शकारः, एतौ पूर्वाङ्गम्; द्वितीयशकारः वकारयकारौ चोत्तराङ्गम्। प्रयोजनमुत्तरत्र भविष्यति स्वरविचारे॥

**तस्माच्चोत्तरँ स्पर्शे॥ १०५॥**

**(उ० भा०) तस्मात् क्रमजाद्यदुत्तरं व्यञ्जनं तत्पूर्वाङ्गं भवति स्पर्शे परभूते। यथा—"पार्ष्ण्ण्यां"। रेफषकारौ द्वौ णकारौ यकारश्च सँय्योगः। तत्र रेफः संयोगादिरिति कृत्वा, षकारः क्रमजमिति कृत्वा, "तस्माच्चोत्तरँ स्पर्शे" इतिकृत्वा पूर्वणकारश्च, एते पूर्वाङ्गम्। द्वितीयणकारो यकारश्चोत्तरस्य स्वरस्याङ्गम्॥**

(अ० भा०) तस्मात् क्रमजात् उत्तरं व्यञ्जनं पूर्वाङ्गं स्यात् स्पर्शे परे। यथा—"पार्ष्ण्ण्यां" इत्यत्र रेफषकारौ द्वौ णकारौ यकारश्च संयोगः, तत्र रेफस्य संयोगादित्वात् पूर्वाङ्गत्वम्; प्रथमषकारः क्रमज इति कृत्वा पूर्वाङ्गमेव; "तस्माच्चोत्तरं स्पर्शे" इति कृत्वा पूर्वणकारः पूर्वाङ्गम्। द्वितीयणकारो यकारश्च उत्तराङ्गं भवति॥

**अवसितं च॥ १०६॥**

**(उ० भा०) अवसानगतं पूर्वाङ्गं भवति। यथा—वाक्। ककारोऽवसितः। ऊर्क्। अत्र रेफककारयोः संयोगः। रेफः संयोगादिः, ककारोऽवसितः, एतौ पूर्वस्य स्वरस्याङ्गम्।**

**पूर्वाङ्गपराङ्गचिन्तायाः प्रयोजनमाह—**

(अ० भा०) अवसानगतं व्यञ्जनं पूर्वाङ्गं स्यात्। यथा—वाक्। ककारोऽवसितः पूर्वाङ्गम्। ऊर्क्। अत्र रेफः ककारश्च पूर्वाङ्गम्।

पूर्वाङ्गपराङ्गचिन्तायाः प्रयोजनमाह—

व्यञ्जनँ स्वरेण सस्वरम् ॥ १०७ ॥

(उ० भा०) व्यञ्जनं यद्यस्य स्वरस्याङ्गं तत्तेनैव स्वरेण समानस्वरं भवति। अधस्तनान्येवोदाहरणानि। तथाचोक्तम्—

"स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च।
स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥" इति ॥

"अथ शिक्षाविहिताः" इत्युपक्रम्य "उरःकण्ठभ्रूमध्यानि" प्रातस्सवन-माध्यन्दिनसवन-तृतीयसवनेषु यथाक्रमं स्थानानि भवन्तीति प्रतिपादितम्। तत एकस्मिन् स्थाने वर्णेषूच्चार्यमाणेषु त्रयो विकाराः शरीरस्य भवन्ति। पर्यायेण ते प्रतिपादिता एव "आयाम-मार्दवा-भिघाताः" इत्यनेन सूत्रेण। अधुना तेषु शरीरविकारेषु सत्सु ये स्वरा निष्पद्यन्ते तन्निरूपणायाह—

(अ० भा०) व्यञ्जनं यस्य स्वरस्याङ्गं तेन समानस्वरं स्यात्। अधस्तनान्येवोदाहरणानि। उक्तं च—

"स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च।
स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम् ॥"

इति। त्रयः स्वराः समाहृता इति त्रैस्वर्यमित्यर्थः।

आयाममार्दवाभिघाता इति शरीरस्य त्रयो विकारा उक्ताः। अधुना तेषु विकारेषु सत्सु ये स्वरा निष्पद्यन्ते तानाह—

उच्चैरुदात्तः ॥ १०८ ॥

(उ० भा०) आयामेनोर्ध्वगमनेन गात्राणां यः स्वरो निष्पद्यते स उदात्तसंज्ञो भवति। यथा—"अग्ना३इ", "लाजी३न्"। उदात्तप्रदेशाः "उदात्तवानुदात्तः" इत्येवमादयः ॥

(अ० भा०) उच्चैः गात्राणामूर्ध्वगमनेन यः स्वरो निष्पद्यते स उदात्तसंज्ञः स्यात्। यथा—"लाजी३न्", "शाची३न्"। उदात्तप्रदेशाः "उदात्तवानुदात्तः" इत्येवमादयः ॥

**नीचैरनुदात्तः ॥ १०९ ॥**

(उ० भा०) नीचैर्मार्दवेणाधोगमनेन गात्राणां यः स्वरो निष्पद्यते सोऽनुदात्तसंज्ञो भवति। यथा—"आर्षेय ऋषीणाम्"। अनुदात्तप्रदेशाः "उदात्ताच्चानुदात्तँ स्वरितम्" इत्येवमादयः॥

(अ० भा०) नीचैः गात्राणामधोगमनेन यः स्वरो निष्पद्यते सोऽनुदात्तसंज्ञः स्यात्। यथा—"ऋषे आर्षेय ऋषीणां नपादवृणीत" इति। अनुदात्तप्रदेशाः "उदात्ताच्चानुदात्तँ स्वरितम्" इत्यादयः॥

**उभयवान्त्स्वरितः ॥ ११० ॥**

(उ० भा०) उदात्तस्योर्ध्वगमनं गात्राणां प्रयत्नः, अनुदात्तस्याधोगमनं गात्राणां प्रयत्नः। आभ्यां प्रयत्नाभ्यां समाहारीभूताभ्यां यः स्वर उच्चार्यते सः स्वरितसंज्ञो भवति। यथा—"धान्यमसि", "वैष्णव्यौ स्थः"॥

(अ० भा०) उदात्तानुदात्तोभयप्रयत्ननिष्पाद्यः स्वरितसंज्ञः स्यात्। यथा धातुद्वयेन त्रपुसीसादि निष्पद्यते तथोभयप्रयत्ननिर्वर्त्यः स्वरितस्वरो भिन्न एव। यथा—"धान्यम्", "वैष्णव्यौ स्थः"॥

**एकपदे नीचपूर्वः सयवो जात्यः ॥ १११ ॥**

(उ० भा०) एकस्मिन् पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वकारेण सहितो जात्यः स्वरः प्रत्येतव्यः। नीचपूर्व इति सम्भवद्विशेषणम्। अपूर्वोऽपि भवति। नीचपूर्वो यथा—"कन्न्या४ इव", "धान्न्य४मसि"। अपूर्वो यथा—"स्वर्देवेषु"॥

(अ० भा०) नीचशब्दः अनुदात्तवाची। एकस्मिन् पदे नीचपूर्वः अनुदात्तपूर्वः यकारेण वकारेण वा सहितः स्वरितः जात्यस्वरसंज्ञः स्यात्।

यथा—“ धान्यम् ”, “ कन्या इव ”, “ तन्वम् ” । नीचपूर्व इति सम्भवद्वि-शेषणम् । तेनानीचपूर्वोऽपि जात्यः स्यात् । यथा—“ स्वः ” ॥

## उदात्तादयः परे सप्त ॥ ११२ ॥

(उ० भा०) उदात्तादयः परे सप्त स्वराः प्रत्येतव्याः । यथा—अभिनिहित-क्षैप्र-प्रश्लिष्ट-तैरोव्यञ्जन-तैरोविराम-पादवृत्त-ताथाभाव्याः ॥

(अ० भा०) उदात्त आदिः येषां स्वरितानां ते उदात्तादयः परे अन्ये सप्तस्वराः वेदितव्याः । ते च अभिनिहत-क्षैप्र-प्रश्लिष्ट-तैरोव्यञ्जन-तैरोविराम-पादवृत्त-ताथाभाव्याः ॥

क्रमेण तेषां लक्षणमाह—

## त्रयो नीचस्वरपराः ॥ ११३ ॥

(उ० भा०) त्रयो नीचस्वरपरा ज्ञेयाः अभिनिहित-क्षैप्र-प्रश्लिष्टाः ॥

(अ० भा०) अभिनिहत-क्षैप्र-प्रश्लिष्टा एते त्रयो नीचस्वरपरा ज्ञेयाः ॥

एतेषामवान्तरविशेषमाह—

## एदोद्भ्यामकारो लुगभिनिहितः ॥ ११४ ॥

(उ० भा०) एकारौकाराभ्यामुदात्ताभ्यामकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति । यथा एकारस्य भवति—ते अप्सरसाम् > “ ते४ऽप्सरसाम् ”, ते अवन्तु > “ ते४ऽवन्त्वस्मान् ” । ओकारस्य भवति यथा—वेदः असि > “ वेदो४ऽसि ”, तुथः असि > “ तुथो४ऽसि ” ॥

(अ० भा०) एकारौकाराभ्यामुदात्ताभ्यां पर अकारः यत्र लुप्यते तत्र अभिनिहतस्वरः स्यात् । यथा—ते अप्सरसाम् > “ तेऽप्सरसाम् ”, ते अवन्तु > “ तेऽवन्तु ”, वेदः असि > “ वेदोऽसि ”, “ तुथोऽसि ” ॥

युवर्णौ यवौ क्षैप्रः ॥ ११५ ॥

(उ० भा०) इश्च उश्च यू, युवर्णौ उदात्तावनुदात्तस्वरोदयौ यकार-वकाराभ्यां यथासंख्येन युक्तौ यदा तदा क्षैप्रसंज्ञः स्वरो भवति। इवर्णस्य यथा—त्रि अम्बकम् > "त्र्यम्बकँ यजामहे", वाजी अर्वन् > "वाज्य४र्वन्"। उवर्णस्य यथा—नु इन्द्र > "योजान्वि४न्द्र ते हरी", द्रु अन्नः > "द्र्वन्नः सर्पिः" ॥

(अ० भा०) इवर्णोवर्णौ उदात्तावनुदात्तस्वरोदयौ यकारवकाराभ्यां यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रसंज्ञः स्वरितः स्यात्। यथा—त्रि अम्बकम् > "त्र्यम्बकम्", वाजी अर्वन् > "वाज्यर्वन्", नु इन्द्र > "न्विन्द्र", द्रु अन्नः > "द्र्वन्नः", अप्सु अप्सु जाः > "अप्स्वप्सुजाः" ॥

इवर्ण उभयतोह्रस्वः प्रश्लिष्टः ॥ ११६ ॥

(उ० भा०) पूर्वो ह्रस्व इकार उदात्तः परश्च ह्रस्व इकारोऽनु-दात्तस्तयोः परस्परप्रश्लिष्टे प्रश्लिष्टः स्वरो भवति। यथा—अभि इन्धताम् > "अभी४न्धताम्", स्रुचि इव > "स्रुची४व घृतम्" ॥

(अ० भा०) ह्रस्व इकारः पूर्व उदात्तः, परश्च इकारोऽनुदात्तः, तयोः परस्परप्रश्लेषे सति प्रश्लिष्टसंज्ञः स्वरः स्यात्। यथा—अभि इन्धताम् > "अभीन्धताम्"। स्रुचि इव > "स्रुचीव"। उदात्तपूर्व इति किम्? चम्वी इव > "चम्वीव" ॥

स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः ॥ ११७ ॥

(उ० भा०) उदात्तात् पूर्वस्मात् परो यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जनसंज्ञकः स्वरो भवति। यथा—"इडे रन्ते हव्ये काम्ये" ॥

(अ० भा०) उदात्तात्परो यः स्वरः व्यञ्जनयुतः स तैरोव्यञ्जनसंज्ञः स्यात्। यथा—"हव्ये काम्ये इडे रन्ते चन्द्रे ज्योते अदिते सरस्वति" इत्यादि ॥

उदवग्रहस्तैरोविरामः ॥ ११८ ॥

(उ० भा०) उदात्तावग्रहस्तैरोविरामसंज्ञकः स्वरो भवति। अयं च समस्तपदेषु भवति अवग्रहवचनात्। अवग्रहाभावे तु तैरोव्यञ्जन एव। यथा—"गोपताविति गो-पतौ", "यज्ञपतिमिति यज्ञ-पतिम्" ॥

(अ० भा०) उच्चशब्द उदात्तवाचि। उदात्तोऽवग्रहः तत उत्तरः तैरोविरामसंज्ञः स्यात्। अयं च पदकाल एव भवति अवग्रहवचनात्। अवग्रहाभावे तु तैरोव्यञ्जन एव। यथा—"गोपता इति गो-पतौ"। "यज्ञपतिमिति यज्ञ—पतिम्" ॥

विवृत्तिलक्षणः पादवृत्तः ॥ ११९ ॥

(उ० भा०) स्वरयोरन्तरयोरन्तरं विवृत्तिरुच्यते, तया लक्ष्यत इति विवृत्तिलक्षणः। स पादवृत्तसंज्ञः स्वरो भवति। विवृत्या व्यवहित इत्यर्थः। यथा—"ध्रुवा असदन्नृतस्य"। का ईम् > "का ईमरे पिशङ्गिला" ॥

(अ० भा०) स्वरयोरन्तरयोरन्तरं विवृत्तिरुच्यते। विवृत्या लक्ष्यत इति विवृत्तिलक्षणः। विवृत्या सहित इत्यर्थः। स पादवृत्तसंज्ञः स्वरः स्यात्। +++ ॥

उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः ॥ १२० ॥

(उ० भा०) उदात्तादिरुदात्तान्तो नीचावग्रहस्ताथाभाव्यसंज्ञः स्वरो भवति। यथा—"तनूनप्त्र इति तनु—नप्त्रे"। "तनून-

पादिति तनू–नपात्"। अयं तु स्वरितानां मध्ये पठ्यते। नत्विह माध्यन्दिनानां स्वरित उपलभ्यते। उदात्तानुदात्तौ तु पृथग्भूतावुपलभ्येते। स्वरितश्चोदात्तानुदात्तयोरेकीभावे सति। तस्मिँश्च तिर्यग्गमनं गात्राणां भवति। न च तदिह किञ्चिदुपलभ्यते। अतो माध्यन्दिनानां पदकाले ताथाभाव्यसंज्ञकः कम्पो भवति। तथाचोक्तमौज्जिहायनकैर्माध्यन्दिनमतानुसारिभिः—

"अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित्।
ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥"

इति। यस्तु ताथाभाव्यस्य स्वरितानां मध्ये पाठः, अयमन्येषामाचार्याणां मतेन। तेषां हि मतेन तनूशब्दः संहितावद्भवति। अतोऽसौ स्वरितो भवति। तदभिप्रायेण स्वरितानां मध्ये पाठः। अयमपि चोपरिष्टाद्वक्ष्यति — "निहितमुदात्तस्वरितपरम्", "अनवग्रहे"। "स्वरितस्य चोत्तरो देशः प्रणिहन्यते" इति तदभिप्रायेण वक्ष्यति ॥

एवमुदात्तानुदात्तस्वरितलक्षणविधानानन्तरं हस्तलक्षणमाह—

(अ० भा०) +++। यथा—"तनूनप्त्र इति तनू–नप्त्रे"। "तनूनपादिति तनू–नपात्"। यद्यप्ययं न स्वरितः तथापि गात्राणां कम्पेन निष्पन्नत्वात् स्वरितमध्ये ज्ञेयः। तदुक्तं याज्ञवल्क्यशिक्षायां औज्जिहायनकैर्माध्यन्दिनमतानुसारिभिः—

"अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित्।
ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् ॥"

इति। यद्वा आपस्तम्बादीनामत्र पदकाले स्वरितपाठात् तदभिप्रायमिदं प्रसङ्गादुक्तमित्यवधेयम् ॥

**हस्तेन ते ॥ १२१ ॥**

(उ० भा०) अनेन प्रकारेण हस्तेन ते स्वराः प्रदर्श्यन्ते। तत्रोदात्ते ऊर्ध्वगमनं हस्तस्य, अनुदात्तेऽधोगमनं हस्तस्य। एतत्सर्वेषामाचार्याणां मतेन स्थितम्। स्वरिते तु विप्रतिपद्यन्ते। तत्प्रकाशनार्थमिदमाह—

(अ० भा०) ते पूर्वोक्ता उदात्तादयः स्वरा हस्तेन प्रदर्शनीयाः । तत्र ऊर्ध्वगमनं हस्तस्योदात्ते, अनुदात्तेऽधोगमनम्, स्वरिते तिर्यग्गमनम् । उक्तं हि—

"ऋचो यजूँषि सामानि हस्तहीनानि यः पठेत् ।
अनर्हो ब्राह्मणस्तावत् यावत्स्वारं न विन्दति ॥"

यद्वा—

"उदात्ते तर्जनी स्पृश्याऽनुदात्ते तु कनिष्ठिका ।
स्वरितेऽनामिका स्पृश्या प्रचये मध्यमा तथा ॥" इति ॥

स्वरिते विशेषमाह—

**चत्वारस्तिर्यक्स्वरिताः ॥ १२२ ॥**

**(उ० भा०) जात्या-भिनिहित-क्षैप्र-प्रश्लिष्टा एते चत्वारस्तिर्यग्घस्तं कृत्वा स्वरणीयाः, पितृदानवद्धस्तं कृत्वेत्यर्थः ॥**

(अ० भा०) जात्या-भिनिहित-क्षैप्र-प्रश्लिष्टाश्चत्वारस्तिर्यग्घस्तं कृत्वा प्रदर्शनीयाः, पितृदानवद्धस्तं कृत्वेत्यर्थः । तिर्यग्घस्तकरणं माध्यन्दिनीयानामेव । सूत्रकारस्य बहुशाखोपरि तन्त्रेण प्रवृत्तत्वात् ॥

काण्वानां विशेषमाह—

**अनुदात्तं चेत् पूर्वं तिर्यङ् निहत्य काण्वस्य ॥ १२३ ॥**

**(उ० भा०) एतेषां चतुर्णां जात्यादीनां यद्यनुदात्तं पूर्वं भवति तदा तिर्यग्घस्तं कृत्वा स्वरयितव्याः काण्वाचार्यस्य मतेन। उदात्तपूर्वे अपूर्वे च न भवति। अनुदात्तपूर्वो यथा—"वैष्णव्यौ"। "धान्य४-मसि"। "स्तुपोऽसि"। "वेदो४ऽसि"। "अभ्य४र्षत"। "योजान्वि४न्द्र ते"। "अभी४न्धतामुखे"। "स्रुची४व घृतम्" एतेषु तिर्यग्घस्तः क्रियते। उदात्तपूर्वेष्वपूर्वेषु च जात्यादिषु तैरोव्यञ्जनव-**

द्धस्तः क्रियते। उदात्तपूर्वो भवति यथा—"पञ्चदशो व्योम"। "कतिधा व्यकल्पयन्"। अपूर्वो भवति यथा—"त्र्यम्बकम्"। "द्रुवन्नः सर्पिरासुतिः"॥

(अ० भा०) एतेषां चतुर्णां जात्यादीनां यद्यनुदात्तं पूर्वं भवति तदैव तिर्यग्घस्तं कृत्वा स्वराः प्रदर्शनीयाः स्युः काण्वाचार्यमतेन। यथा—"वैष्णव्यौ"। "धान्यम्"। "तुथोऽसि"। "वेदोऽसि"। "अभ्यर्षत"। "योजान्विन्द्र"। "अभीन्धताम्"। "स्रुचीव"। एतेषु तिर्यग्घस्तः कार्यः। अनुदात्तं चेत् पूर्वमिति किम्? "पञ्चदशो व्योमा सप्तदशः" "कतिधा व्यकल्पयन्"। "त्र्यम्बकम्"। "द्रुवन्नः"॥

ऋजुन्निहत्य प्रणिहन्यते उदात्ते॥ १२४॥

(उ० भा०) ऋजुन्निहत्य हस्तमनुदात्तवत् ततः प्रकर्षेण निहन्यते नीचीक्रियते जात्या-भिनिहित-क्षैप्र-प्रश्लिष्टाः। उदात्ते परभूते यथा—"भूबर्भुवः स्व३र्द्यौरिव"। "देवस्य त्वा सवितुः प्रसवे३ऽश्विनोर्बाहुब्भ्याम्"। "यासद्विश्श्वन्न्यत्रिणम्"। "स्रुची३वेति"। उदात्त इति कस्मात्? "धान्य४मसि धिनुहि देवान्"। "पवित्रे स्थो वैष्णव्यौ"॥

(अ० भा०) जात्यादिचत्वार उदात्ते परभूते सति हस्तं ऋजुं कृत्वा प्रदर्शनीयाः। ऋजुत्वं च मनुष्यदानवद्धस्तस्य। यथा—"भूर्भुवस्वर्द्यौरिव"। "देवस्य त्वा सवितुः प्रसवेऽश्विनोः"। "यासद्विश्वन्यत्रिणम्"। अत्रापि काण्वस्येत्यनुवृत्तिः। तेनापस्तम्बादीनामिदं न। उदात्ते पर इति किम्? "धान्यमसि"। "वैष्णव्यौ"॥

तीक्ष्णोऽभिनिहितः परम्परं मृदुस्त्वन्यः॥ १२५॥

(उ० भा०) तीक्ष्ण उच्चारणतो हस्तेन चाभिनिहितः स्वरो भवति। ततोऽन्यो मृदुप्रयत्नो भवति। किमविशेषेणेत्याह—परम्परंशब्दोऽव्ययम्।

**पूर्वमपेक्ष्य परः परमपेक्ष्य पर इत्येवम्। यथा अभिनिहितमपेक्ष्य क्षैप्रः क्षैप्रमपेक्ष्य प्रश्लिष्टः। क्षैप्रे जात्यस्यान्तर्भावो द्रष्टव्यः। तथाचोक्तम्—**

**"सर्वतीक्ष्णोऽभिनिहितः प्रश्लिष्टस्तदनन्तरम्।**
**ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ॥**
**ततो मृदुतरः स्वारस्तैरोव्यञ्जन उच्यते।**
**पादवृत्तो मृदुतमस्त्वेतत् स्वारबलाबलम्॥" इति॥**

(अ० भा०) तीक्ष्ण उच्चारणतो ह्रस्तस्य अभिनिहतस्वरः स्यात्। ततोऽन्यो मृदुप्रयत्नः स्यात्। परंपरशब्दोऽव्ययम्। पूर्वं पूर्वमपेक्ष्य पर इत्यर्थः। यथा अभिनिहतमपेक्ष्य क्षैप्रः। उक्तं च—

"सर्वतीक्ष्णोऽभिनिहतः प्रश्लिष्टस्तदनन्तरम्।
ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौ स्मृतौ॥
ततो मृदुतरः स्वारस्तैरोव्यञ्जन उच्यते।
पादवृत्तो मृदुतमस्त्वेतत् स्वारबलाबलम्॥" इति।

उक्तान्येवोदाहरणानि॥

## तस्यादित उदात्तँ स्वरार्धमात्रम्॥ १२६॥

(उ० भा०) **स्वरितस्य स्वरस्यादावुदात्तं ज्ञातव्यम्। तच्च स्वरार्धमात्राकालम्। यद्येकमात्रो यदि द्विमात्रो यदि त्रिमात्रः स्वरस्तथाप्यर्धमुदात्तं परमनुदात्तम्। अयं तु स्वरिते उदात्तानुदात्तप्रविभागो द्रष्टव्यः। स्वरितशब्देनोदात्तानुदात्तं निर्वर्त्य पृथक्श्रुति स्वरान्तरमभिधीयते। यथा त्रपुताम्रयोः संयोगे धात्वन्तरस्य कांस्यस्योत्पत्तिः, यथा च गुडदध्नोरेकीभावे मार्जिकोत्पत्तिः, एवमुदात्तानुदात्तसंयोगे स्वरितोत्पत्तिः॥**

(अ० भा०) तस्य स्वरितस्यादावुदात्तं ज्ञेयम्। तच्चार्धमात्राकालम्। यद्येकमात्रो यदि द्विमात्रो यदि त्रिमात्रः स्वरितस्तथापि स्वरितस्यादावर्धमुदात्तम्। अयं विभागः स्वरित एव। तस्यैवोदात्तानुदात्तोभयप्रयत्ननिष्पन्नत्वात्। स्वरितस्वर एव उदात्तानुदात्ते निवृत्य पृथक्स्वरो भवति। यथा त्रपुताम्रयोः

संयोगे धात्वन्तरं कांस्यं भवति। यथा "धान्यम्" इत्यत्र पूर्वार्धमात्रा उदात्तः, उत्तरानुदात्ता सार्धा। "कन्या" इत्यत्रापि पूर्वा अर्धमात्रा, अपरा अध्यर्धमात्रा। एवं प्लुतेऽपि ॥

**सप्त ॥ १२७ ॥**

(उ० भा०) सामसु सप्त स्वरानाहुः षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादान्। ननु यजुर्वेदलक्षणप्रक्रमे एवमुदात्तानुदात्त-सँय्योगे स्वरितोत्पत्तौ कः सामलक्षणप्रसङ्गः? उच्यते—अग्नौ यजुर्वेदे अध्वर्योः सामगानं विहितम्—"नान्योऽध्वर्योर्गायेदिष्टका वा एता विहितचितो हस्याद्यदन्योऽध्वर्योर्गायेत्" इति शातपथे सञ्चितिकाण्डे। अतोऽध्वर्युकर्तृकमिति कृत्वा कश्चिल्लक्षणांशः कृतः सामसु। अपरे त्वाहुः—जात्या-भिनिहित-क्षैप्र-प्रश्लिष्ट-तैरोव्यञ्जन-तैरोविराम-पादवृत्ताः सप्त स्वरा अत्रावधार्यन्ते। ताथाभाव्यस्तु वाजसनेयिनां निवार्यते ॥

(अ० भा०) समासु सप्त स्वराः स्युः। ते च षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाः। ननु यजुर्वेदलक्षणप्रक्रमे कः सामवेदलक्षणस्य प्रसङ्ग इति चेत्। श्रृणु—चयने यजुर्वेदे अध्वर्योस्सामगानं विहितम्। "नान्योऽध्वर्योर्गायेदिष्टका वा एताः" इति। यद्वा स्वरितस्वरस्य सप्त भेदा जात्यादय एवात्रोच्यन्त इति। ताथाभाव्यस्तु वाजसनेयिनां निवार्यते ॥

**त्रीन् ॥ १२८ ॥**

(उ० भा०) उदात्ता-नुदात्त-स्वरितान् यजुर्वेदे त्रीन् स्वरानाहुः। तथाच उक्ता एव सन्तोऽनूद्यन्त एवेदानीमपवादार्थम् ॥

(अ० भा०) यजुर्वेदे उदात्ता-नुदात्त-स्वरितस्वरास्त्रय एवेत्येके मन्यन्ते ॥

**द्वौ ॥ १२९ ॥**

(उ० भा०) किमविशेषेण यजुर्वेदे त्रीन् स्वरानाहुः। नेत्युच्यते। द्वौ स्वरावुदात्तानुदात्तौ भाषिकलक्षितौ शतपथब्राह्मणे आहुः। पारिशेष्यान्मन्त्रेषु त्रैस्वर्यम् ॥

(अ० भा०) उदात्तानुदात्तलक्षणौ द्वावेव स्वरौ यजुर्वेद इत्यन्ये। यद्वा मन्त्रे त्रीन्, शतपथब्राह्मणे भाषिकलक्षणे उदात्तानुदात्तौ द्वावेव स्वरौ ॥

एकम् ॥ १३० ॥

(उ० भा०) तानलक्षणमेकं स्वरमाहुर्यज्ञकर्मणि ॥

(अ० भा०) तानस्वरलक्षणमेकमेव स्वरं मन्यन्ते केचित्। यद्वा यज्ञकर्मणि तानलक्षणमेकं स्वरमाहुः ॥

एवमविशेषेण यज्ञकर्मण्येकस्वरप्राप्तौ विशेषमाह यज्ञकर्मणि—

सामजपन्न्यूँखवर्जम् ॥ १३१ ॥

(उ० भा०) प्रगीतं मन्त्रवाक्यं सामशब्देनोच्यते; "विश्वेदेवाः श्रृणुत" इति जपः; न्यूँखो बह्वृचि प्रसिद्धः; एतानि वर्जयित्वा यज्ञकर्मण्येकः स्वरो भवति तानलक्षणः ॥

(अ० भा०) प्रगीतं मन्त्रवाक्यं सामशब्देनोच्यते। "विश्वेदेवाः श्रृणुत" इत्यादिजपविधिप्राप्तो जपः। न्यूङ्खस्तु आश्वलायनाचार्येण श्रौतसूत्रे अष्टमाध्याये "चतुर्थेऽहनि०" इति सलक्षण उक्तः। तथाहि— "चतुर्थेऽहनि प्रातरनुवाकप्रतिपाद्योर्ध्वोडानूङ्खो द्वितीयं स्वरमोङ्कारं त्रिमात्रमुदात्तं त्रिस्तस्य तस्य चोपरिष्टात् अपरिमितान्यं च वार्धौ कराननुदात्तानुत्तमस्य तु त्रो (त्री) न् पूर्वमक्षरं निहन्यते"। न्यूङ्खमाने तदपि निर्देशनायोदाहरिष्यामः— "आपो नु ओ ओ ओ ओ ओ ओ ओ ओ ओ ओ ओ ओ ओ"। तेषु प्रथम-सप्तम-त्रयोदशास्त्रय उदात्तास्त्रिमात्राः। इतरे द्वादशानुदात्ता अर्धौकारा द्रष्टव्याः। अन्त्यस्त्वनुदात्तस्त्रिमात्र इति विवेकः। एतानि सामजपन्यूङ्खानि वर्जयित्वाऽन्यत्र तानस्वरो यज्ञकर्मणि स्यात् ॥

**प्रावचनो वा यजुषि ॥ १३२ ॥**

**(उ० भा०) प्रवचनशब्देनार्षपाठ उच्यते। तत्र भवः स्वरः प्रावचनः, स च यजुषि भवति। वा तान इति विकल्पः। स च त्रैस्वर्यलक्षण एव भवति। "प्रगृह्यं चर्चायामितिना पदेषु" इत्यनेनैकस्मात् पर आर्ष इति ॥**

(अ० भा०) प्रवचनशब्देनार्षपाठ उच्यते, तत्र भवः स्वरः प्रावचनः, स वा यजुर्वेदे स्यात्। स च त्रैस्वर्यलक्षण एव। तानो वा यज्ञकर्मणीति विकल्पः ॥

एवं स्वरमुक्त्वा परिभाषामाह—

**तमिति विकारः ॥ १३३ ॥**

**(उ० भा०) तमित्युत्सृष्टसर्वनामिका द्वितीयाविभक्तिर्गृह्यते। द्वितीयया यो निर्दिश्यते स विकारः प्रत्येतव्यः। यथा—"अनुस्वारँ रोष्मसु मकारः" इति मकारोऽनुस्वारविकारमापद्यते। "भाविभ्यः सः षँ समानपदे" इति सकारः षकारविकारमापद्यते ॥**

(अ० भा०) अस्मिन् शास्त्रे द्वितीयया यो निर्दिश्यते स विकारः स्यात्। यथा—"अनुस्वारँ रोष्मसु मकारः" इत्यादि ॥

**तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ १३४ ॥**

**(उ० भा०) तस्मिन्निति सप्तम्यन्तं परिगृह्यते। सप्तम्या निर्दिष्टे पूर्वस्य कार्यं वेदितव्यम्। पूर्वस्य पदान्तस्य विधिः प्रत्येतव्यः। यथा—"ककारपकारयोः सकारम्" इति। "तथयोः सम्" इति ॥**

(अ० भा०) सप्तम्या निर्दिष्टे पूर्वपदान्तस्य विधिर्ज्ञातव्यः। यथा—"तथयोस्सम्" इत्यादि। सप्तम्या निर्देशे कृते सति पूर्वोत्तरपदयोरन्तरेणाव्यवहितस्य पूर्वपदस्य विधिः—"शर्मान्यवधूतम्" इति। अव्यवहितस्येति किम्? "महित्रीणाम्" इत्यादि ॥

तस्मादित्युत्तरस्यादेः ॥ १३५ ॥

(उ० भा०) तस्मादिति पञ्चमीनिर्दिष्टात्परस्य कार्यं वेदितव्यम् । यथा—"ओकारात्सु", "परेश्च सिश्चतेः" ॥

(अ० भा०) तस्मादिति पञ्चमीनिर्देशेन परस्यादेः कार्यं स्यात् । यथा—"ओकारात्सु" ॥

षष्ठी स्थानेयोगा ॥ १३६ ॥

(उ० भा०) षष्ठीविभक्तिः स्थानेयोगिनी वेदितव्या । षष्ठ्यन्तस्य कार्यं भवतीत्यर्थः । यथा—"यवयोः पदान्तयोः स्वरमध्ये लोपः", "ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा तालव्योष्ठ्योरुत्तरा" इति ॥

(अ० भा०) षष्ठीविभक्तिः स्थानेयोगिनी, तत्र षष्ठ्यन्तस्य कार्यं स्यात् । यथा—"यवयोः पदान्तयोः स्वरमध्ये लोपः" इति ॥

तेनेत्यागमः ॥ १३७ ॥

(उ० भा०) तेनेति तृतीयाग्रहणम् । तृतीयया यो निर्दिश्यते स आगमः प्रत्येतव्यः । यथा—"ङ्नौ क्ताभ्याँ सकारे", "प्रगृह्यं चर्चायामितिना पदेषु" इति ॥

(अ० भा०) तृतीयया यो निर्दिश्यते स आगम इति ज्ञातव्यः । यथा—"ङ्नौ क्ताभ्याँ सकारे" इति ॥

अन्तरेण पर्वणी ॥ १३८ ॥

(उ० भा०) पर्वशब्देन पदमुच्यते । पदयोर्मध्ये आगमो भवति । यथा—प्राङ् सोमः > "प्राङ्क्सोमः" । प्रत्यङ् सोमः > "प्रत्यङ्क्सोमः" । त्रीन् समुद्रान > "त्रीन्त्समुद्रान" । अस्मान् सीते > "अस्मान्त्सीते" ॥

(अ० भा०) पर्वशब्देन पदमुच्यते। आगमः पदयोर्मध्ये स्यात्। यथा—प्राङ् सोमः > “प्राङ्क्सोमः”। त्रीन् समुद्रान् > “त्रीन्त्समुद्रान्”॥

**पर एकस्मात् ॥ १३९ ॥**

**(उ० भा०) एकस्य पदस्य मध्ये य आगमो विधीयते स परो भवति। यथा—“द्वे इति द्वे”, “शीर्षे इति शीर्षे”। “प्रगृह्यँ चर्चाया-मितिना पदेषु” इत्यनेन एकस्मात् पदात् पर इतिकार आगमो विधीयत इति॥**

(अ० भा०) यत्रैकस्य पदस्य आगमो विधीयते तत्र परः स्यात्। “द्वे इति द्वे”। “शीर्षे इति शीर्षे”। अत्र “प्रगृह्यं चर्चायामितिना पदेषु” इति इतिशब्दो विधीयते। स च एकस्मात्पदात्परो भवति॥

**उभयोर्विकारः ॥ १४० ॥**

**(उ० भा०) द्वितीयया निर्दिष्टो विकार इत्यधस्तादुक्तम्। स उभयोर्भवति अन्तरेण पर्वणी च पदान्तपदाद्योरित्यर्थः। एकस्य वा वर्णस्य निर्दिश्यते। यथ—आ इदम् > “एदम्”। इह ऊर्जम् > “इहोर्जन्दधातन”। एकवर्णस्य भवति यथा—मो सु नः > “मोषूण इन्द्रात्र”। सु साव > “सुषाव सोमम्”॥**

(अ० भा०) विकार उभयोर्भवति पूवपरयोः स्यादित्यर्थः। यथा—आ इदम् > “एदम्”। इह ऊर्जम् > “इहोर्जम्”। उभयोरिति सम्भवाभि-प्रायेण। तेन कुत्रचिदेकस्यापि भवति। यथा—मो सु नः > “मोषुणः”। सु साव > “सुषाव सोमम्”॥

**वर्णस्यादर्शनं लोपः ॥ १४१ ॥**

(उ० भा०) दृशिरुपलब्धिवचनः। अनुपलब्धिरदर्शनं वर्णस्य लोप इत्युच्यते। वक्ष्यति "लोपं धौ" इति। यथा—अयक्ष्माः मा > "अयक्ष्मा मावस्ते नः"। सत्याः नः > "सत्या नः सन्त्वाशिषः"॥

(अ० भा०) दृशिधातुरुपलब्धिवचनः। अनुपलब्धिरदर्शनं वर्णस्य लोपसंज्ञं स्यात्। यथा—अयक्ष्माः मा > "अयक्ष्मा मा", सत्याः नः सन्तु > "सत्या नस्सन्तु"। "रेफँ स्वरधौ" इति विसर्जनीयलोप इति॥

## विकारी यथासन्नम् ॥ १४२ ॥

(उ० भा०) विकारोऽस्यास्तीति विकारी। विकारी वर्णोऽवचने यथासन्नं यो य आसन्नस्तं तमापद्यते। वक्ष्यति–"स्वरे भाव्यन्तस्थाम्"। यथा—त्रि अम्बकम् > "त्र्यम्बकम्"। द्रु अन्नः > "द्र्वन्नः"। वचनादन्यदपि भवति। यथा—"अनसो वाहौ सकारो डकारम्" इति वचनात् सकारस्य डकारः—अनड्वान्। परिभाषासूत्रमेतत्॥

(अ० भा०) विकारोऽस्यास्तीति विकारी। विकारी वर्णः वचने यो य आसन्नस्तं तमाप्नेति। यथा—त्रि अम्बकम् > "त्र्यम्बकम्"। द्रु अन्नः > "द्र्वन्नः"। अत्र वक्ष्यति–"स्वरे भाव्यन्तस्थाम्" इति। चर्चा तु अन्यद्रूपमापद्यते—"अनसो वाहौ सकारो डकारम्" इति। अनड्वान्। अनः वहतीति विग्रहः। वचनादन्यतो डकारः॥

## सङ्ख्यातानामनूद्देशो यथासङ्ख्यम् ॥ १४३ ॥

(उ० भा०) समानसङ्ख्यानां यः पश्चादुद्देशः स यथासङ्ख्यं भवति। यस्य या सङ्ख्या प्रथमस्य प्रथमः द्वितीयस्य द्वितीयः तृतीयस्य तृतीय इत्यर्थः। वक्ष्यति—"सदो द्यौर्नमस्कृतं पिता पथेषु"। यथा—सदः कृतम् > "सदस्कृतम्"। द्यौः पिता > "द्यौष्पितोपमाम्"। नमः पथे > "शर्म सप्रथा नमस्पथे"। परिभाषासूत्रमेतत्॥

( अ० भा० ) समानसङ्ख्यानामादेशादयो यथासङ्ख्यं स्युः । यथा— " सदो द्यौर्नमस्कृतं पितापथेषु " सकार इति । " सदस्कृतम् " । " द्यौष्पिता " । " नमस्पथे " ॥

**सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टस्य ॥ १४४ ॥**

(उ० भा०) यत्रोदाहरणसंशयः तत्रेयं परिभाषोच्यते । सन्निकृष्ट-विप्रकृष्टयोरुदाहरणयोः सन्निकृष्टस्यैवोदाहरणस्य कार्यं प्रत्येतव्यम्, न तु विप्रकृष्टस्य । यथा—"असि शिवा सुषदा०" इत्येवमादिषु परभूतेषु असिशब्द आद्युदात्त उक्तः । तत्र सन्देहः, किं "सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा" इत्यत्रासिशब्द आद्युदात्तो भवति, उत "स्योना चासि सुषदा" इति । उभयोरप्यसिशब्दः परभूतः । तत्रानेनाव-धारणं क्रियते । यत्रान्यत्रापि सन्निकृष्टानि पदानि भवन्ति तत्र कार्यं भवति । तद्यथा—"असि शिवा सुषदा पयस्वती" इत्यत्र पयस्वतीसन्नि-धानात् "सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा" इत्ययमेवाद्यु-दात्तो भवति न तु "स्योना सुषदा" इति, विप्रकृष्टत्वात् ॥

( अ० भा० ) यत्रोदाहरणसंशयः तत्रेयं परिभाषा उच्यते । सन्निहित-दूरस्थयोर्मध्ये सन्निहितस्य कार्यं स्यात्, नतु विप्रकृष्टस्य । यथा—" असि शिवा सुषदा " इत्येवमादिषु परेषु असिशब्द आद्युदात्तः । तत्र सन्देहः किमु " सुक्ष्मा चासि शिवा चासि स्योना चासि सुषदा चासि " इत्यत्र असिशब्द आद्युदात्तः, उत " स्योनासि सुषदासि " इत्यत्र " योनिरसि" इत्यसिशब्दोऽपि । उभयोरप्यसिशब्दयोः सुषदाशब्दः परभूतोऽस्तीति सन्देहः । तत्रावधार्यते— सन्निहितपदे कार्यं स्यादिति । सन्निहितम् " सुक्ष्मा चासि " इत्यादि । " असि शिवा सुषदा पयस्वती " इत्यादिसूत्रे पयस्वतीशब्दसमभिव्याहारात् । न तु " स्योनासि सुषदासि " इत्यादावसीति, विप्रकर्षात् । अत एव तत्र सर्वानुदात्तं पदम् । यद्वा " शिवा चासि स्योना चासि सुषदा " इत्यत्रैव नियम्यते, यथा अत्र सुषदाशब्दात् पूर्वमसिशब्दद्वयं श्रूयते । तत्र यस्य सुषदाशब्दः साक्षात्परभूतः स एवाद्युदात्तः, न तु पूर्वोऽसिशब्दः, स्योनाशब्देन व्यवहितत्वात् । एवमन्यत्रापि योज्यम् ॥

पूर्वोत्तरयोरुत्तरस्य ॥ १४५ ॥

(उ० भा०) यत्र पूर्वस्योत्तरस्य च युगपत् कार्यं प्राप्नोति तत्रोत्तरस्यैव भवति नतु पूर्वस्य। मृग्यमुदाहरणम्। "आ च॒ शास्स्वा च"। अत्र स्वरिताकार उदात्तः। तत्र युगपत्कार्यमुभयोः सन्धावुदात्त एव। स्वरविषयकं चैतत्सूत्रम् ॥

(अ० भा०) यत्र पूर्वस्योत्तरस्य च युगपत्कार्यं प्राप्नोति तत्र उत्तरस्यैव न तु पूर्वस्य। यथा—"आ च शास्वा च" ॥

द्विरुक्तमाम्रेडितं पदम् ॥ १४६ ॥

(उ० भा०) द्विरभ्यस्तं पदमाम्रेडितसंज्ञं भवति। यथा—"यज्ञायज्ञा वो अग्नये"। तत्र आम्रेडितसंज्ञायाः प्रयोजनम्—"आम्रेडितं चोत्तरम्" इत्यादि ॥

(अ० भा०) द्विरुक्तं पदमाम्रेडितसंज्ञं स्यात्। यथा—"यज्ञा यज्ञा वो अग्नये"। प्रयोजनम्—"आम्रेडितं चोत्तरम्" इति स्वरचिन्तायां भविष्यति ॥

सँहितँ स्थितोपस्थितम् ॥ १४७ ॥

(उ० भा०) इत उत्तरं पदसंहिता वर्त्तिष्यते। द्विरुक्तमित्यनुवर्तते। द्विरुक्तं यत्पदमितिकरणेन मध्यस्थितेन आद्यन्तसंहितेन पूर्वमादिसंहितमुत्तरपदमन्तसंहितं स्थितोपस्थितसंज्ञं भवति। यथा—"द्वे इति द्वे", "शीर्षे इति शीर्षे", "पुनरिति पुनः", "वह्नितममिति वह्नि—तमम्", "सस्नितममिति सस्नि—तमम्", "पप्रितममिति पप्रि—तमम्।" तथाचोक्तम्—

"उपस्थितं सेतिकारं केवळं तु पदं स्थितम्।
तत् स्थितोपस्थितं नाम यत्रोभे आह संहिते ॥"

अस्यार्थः—इतिकरणसहितमुपस्थितसंज्ञं पदं भवति । केवलमितिकरणसहितं स्थितसंज्ञं भवति । यत्र पदान्तपदादी इतिकरणेन सहितात्राह तत् स्थितोपस्थितपदमुच्यते । स्थितोपस्थितप्रदेशः—"पूर्वोत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य" इति ॥

स्थितोपस्थितस्यैव सावग्रहस्य स्वरविशेषविधानार्थमाह—

(अ० भा०) इत उत्तरं पदसंहिता उच्यते । द्विरुक्तमिति पदमनुवर्त्तते । द्विरुक्तं पदमितिकरणेन मध्यस्थितेन सहितं सेतिकरणम् । "द्वे इति द्वे" । "शीर्षे इति शीर्षे" । तथाचोक्तम्—

"उपस्थितं सेतिकरणं केवलं तु पदं स्थितम् ।
तत् स्थितोपस्थितं नाम यत्रोभे आह संहिते ॥"

अस्यार्थः—इतिकरणसहितं पदं उपस्थितसंज्ञं स्यात् । केवलमितिकरणरहितं पदं स्थितसंज्ञं स्यात् । तत्र प्रथमं ऋग्वेदिनामेव, द्वे इति तेषां पाठात् । इतरत्तु सर्वेषाम् । प्रयोजनं तु—"पूर्वस्योत्तरसंहितस्य स्थितोपस्थितमवगृह्यस्य" इति भविष्यतीति ॥

स्थितोपस्थितस्यैव विशेषमाह—

**सँहितावदवग्रहः स्वरविधौ परं च सर्वं चेदनुदात्तम् ॥ १४८ ॥**

(उ० भा०) अवग्रहशब्देन सावग्रहस्य पदस्य पूर्वपदमभिधीयते । अवग्रहः स्वरविधौ स्वरचिन्तायां संहितावत् स्वरं लभते । इतिकरणेन सह सन्धौ तस्मिंश्च सावग्रहे पदे द्वे भवतः । तत्र पूर्वपदं तावदितिकरणेन सह सन्धौ संहितावत् स्वरं लभते । परं च अवग्रहात् परं पदं संहितावत् स्वरं लभते । यदि तत्सर्वमनुदात्तं भवति, तदा स्वकीयया प्रकृत्या भवति । यथा—"वह्नितममिति वह्नि—तमम्", "गृहपत इति गृह—पते", "प्रजावतीरिति प्रजा—वतीः ।" परं च सर्वं चेदनुदात्तमिति कस्मात्? "ऊर्णासूत्रेणेत्यूर्णा—सूत्रेण", "विरुरुचुरिति वि—रुरुचुः", "द्रोणकलश

इति द्रोण—कलशः"—उदात्तोदाहरणम्। "राजस्व इति राज–स्व"। —स्वरितपदोदाहरणम्। स्वरविधाविति किम्? वर्णविधौ संहितावन्न भवति। "मह‌द्भ्य इति महत्—भ्यः", "तिष्ठ‌द्भ्य इति तिष्ठत्–भ्यः", "धाव‌द्भ्य इति धावत्—भ्यः" ॥

(अ० भा०) अवग्रहशब्देन सावग्रहपदस्य पूर्वपदमभिधीयते। अवग्रहः स्वरचिन्तायां संहितावत् स्वरं लभते। इतिकरणेन सह सन्धौ तस्मिंश्च सावग्रहे पदे द्वे द्वे पदे स्तः। तत्र पूर्वपदं इतिकरणेन सहितं संहितास्वरं स्यात्। अवग्रहात् परमपि पदं संहितास्वरमेव यदि चेत् तत्सर्वमनुदात्तं भवति। यदि तत्र किञ्चिदक्षरं उदात्तं वा भवति तदा स्वकीयया प्रकृत्या भवति। यथा—"वह्नितममिति वह्नि—तमम्", "गृहपत इति गृह—पते", "प्रजा पतिरिति प्रजा—पतिः।" परं च सर्वं चेदनुदात्तं किम्? "ऊर्णा सूत्रेणेत्यूर्णा— सूत्रेण", "विरुरुचुरिति वि—रुरुचुः", "द्रोणकलश इति द्रोण—कलशः।" इति उदात्तोदाहरणानि। "राजस्व इति राज—स्वः" इति स्वरितोदाहरणम्। अवग्रह इति किम्? "सुसावेति सुसाव", "अहोरात्रे इत्यहोरात्रे"। स्वर-विधाविति किम्? वर्णविधौ संहितावन्न भवति। "महद्भ्य इति महत्—भ्यः", "तिष्ठद्भ्य इति तिष्ठत्—भ्यः"। अत्र दत्वं नेत्यर्थः।

## इतिपरस्तिर्यङ्नीचोऽन्तोदात्ते मध्योदात्ते पर्वणि काण्वस्य वा ॥ १४९ ॥

(उ० भा०) इतिपरस्तिर्यङ्नीचो भवति अनुदात्तो भवतीत्यर्थः, अन्तोदात्ते मध्योदात्ते वा पदे वाशब्दो भिन्नक्रमो विकल्पार्थः काण्वस्याचार्यस्य मतेन। "ऊर्णासूत्रेणेत्यूर्णा—सूत्रेणं", "द्रोणकलशं इति द्रोण–कलशः" ॥

(अ० भा०) इतिशब्दात् परः इतिशब्दपरः तिर्यङ्नीचः स्यात् अनुदात्तः स्यादित्यर्थः। अन्तोदात्ते मध्योदात्ते वा पदे परे वाशब्दो विकल्पे

काण्वाचार्यमतेन । यथा—“ द्रोणकलश इति द्रोण—कलशः”, “ ऊर्णासूत्रेणे-त्यूर्णा—सूत्रेण ” ॥

## उदात्तमयोऽन्यत्र नीच एव ॥ १५० ॥

(उ० भा०) काण्वस्येति वर्त्तते । अन्तोदात्त-मध्योदात्तयोः पर्वणोरन्यत्र इतिकरणात् परो नीच उदात्तमय एव भवति, प्रचित एव भवतीत्यर्थः । यथा—“सोमगोपा इति सोम—गोपाः”, “सस्नितममिति सस्नि—तमम्”, “ पप्रितममिति पप्रि— तमम्” ॥

(अ० भा०) काण्वस्य मतेनेति वर्त्तते । अन्यत्र अन्त्योदात्त-मध्योदात्तपदानि वर्जयित्वा अस्मिन् पदे इतिकरणात्परः नीचः उदात्तमयः स्यात्, प्रचित एव भवतीत्यर्थः । यथा—“ सोमगोपा इति सोम—गोपाः ” । “ सस्नितममिति सस्नि—तमम् ”, “ पप्रितममिति पप्रि—तमम्” । काण्वस्येति किम्? आपस्तम्बादेर्मा भूदिति । तेषां तदनुदात्तमेव ॥

## एकवर्णः पदमपृक्तम् ॥ १५१ ॥

(उ० भा०) एकवर्णस्यापृक्तसंज्ञा विधीयते पदस्य । यथा— “आ ”, “ उ ” । अपृक्तसंज्ञायाः प्रयोजनम्— “अपृक्तमध्यानि त्रीणि स त्रिक्रमः” ॥

(अ० भा०) एकवर्णात्मकं पदं अपृक्तसंज्ञं स्यात् । “आ सुव ”, “ उदु तिष्ठ ”, “ आ प्यायध्वम् ” । संज्ञाप्रयोजनम्— “ अपृक्तमध्यानि त्रीणि स त्रिक्रमः ” इत्यादि ॥

## स एवादिरन्तश्च ॥ १५२ ॥

(उ० भा०) स एवैको वर्णः पदसंज्ञः सन् पदादिसम्बन्धीनि पदान्तसम्बन्धीनि च कार्याणि लभते । यथा—इन्द्र आ इहि > “इन्द्रेहि” ॥

(अ० भा०) स एको वर्णः अपृक्तः पदसंज्ञः पदादिसम्बद्धं पदान्तसम्बद्धं च कार्यं प्राप्नोति। यथा—इन्द्र आ एहि > "इन्द्रेहि"। अत्र पदादिकार्यं पररूपं [पदान्तरूपकार्यत्वम्] ॥

**अवग्रहः पदान्तवत् ॥ १५३ ॥**

**(उ० भा०) अवग्रहशब्देन पूर्वपदमिहाभिधीयते। अवग्रहः पदान्तसम्बन्धीनि कार्याणि लभते वर्णविधौ। स्वरविधौ तु अस्मादुक्तम् "संहितावदवग्रहः स्वरविधौ" इति। यथा—"भरद्वाज इति भरत्—वाजः", "तिष्ठद्भ्य इति तिष्ठत्—भ्यः"।**

(अ० भा०) अवग्रहशब्देन समासपूर्वपदमभिधीयते। अवग्रहः पूर्वपदं पदान्तसम्बद्धं कार्यं लभते वर्णविधौ। स्वरसन्धौ तूक्तम्—"संहितावदवग्रहः स्वरविधौ" इति। यथा—"भरद्वाज इति भरत्—वाजः", 'तिष्ठद्भ्य इति तिष्ठत्—भ्यः", दस्य तत्वं कार्यम् ॥

**न त्विति करणम् ॥ १५४ ॥**

**(उ० भा०) "अवग्रहः पदान्तवत्" इत्युपदेशात् इतिकरणमपि प्राप्नोति। तन्निषिध्यते। यथा—"अन्तः श्लेष इत्यन्तः—श्लेषः"। "रिफितं च संहितायामनिरुक्तम्" इत्यनेनेतिकरणमपि प्राप्नोति। तन्निषिध्यते ॥**

(अ० भा०) अवग्रहपदस्य पदान्तत्वेन इतिकरणं प्राप्तं पदकाले तन्निषिध्यते। यथा—"अन्तःश्लेष इत्यन्तः—श्लेषः"। "रिफितं च संहितायामनिरुक्तम्" इतीतिकरणप्राप्तिः ॥

**पूर्वेणोत्तरः सँहितः ॥ १५५ ॥**

(उ० भा०) इत उत्तरं संहितोच्यते। पूर्वेण पदान्तेन उत्तरः पदादिः संहिता यदा क्रियते स्वरतो वर्णतश्च तदा द्विपदसंहितोच्यते। यथा—"इषे त्वा त्वोर्जे"। क्रमसंहितेयम् ॥

(अ० भा०) इत उत्तरं द्विपदसंहितोच्यते। यथा—"इषे त्वा त्वोर्जे ऊर्जे त्वा"। क्रमसंहितेयम्। उत्तरं पदस्य द्वित्वादि ॥

पदविच्छेदोऽसँहितः ॥ १५६ ॥

(उ० भा०) पदे पदे विच्छेदः पदविच्छेदः। पदविच्छेदो यदा क्रियते तदा असंहितः पाठः। यथा—"इषे त्वा ऊर्जे त्वा"॥

(अ० भा०) [पदविच्छेदपादविच्छेदः] स +++ [द्विक्त्विय] संहितोच्यते। पूर्वेण पदान्तेन उत्तरः पदादिः संहिता न क्रियते। तदा असंहितः पदपाठो ज्ञेयः। यथा—"इषे त्वा ऊर्जे त्वा"॥

एकपद-द्विपद-त्रिपद-चतुष्पदा-नेकपदाः पादाः ॥ १५७ ॥

(उ० भा०) एकं पदं यस्मिन् पादे स एकपदः पादः, सा च पदसंहितोच्यते छन्दसः पादपरिज्ञानार्थम्। एकपदः पादो यथा—"हृदिस्पृशम्"। द्विपदः पादो यथा—क्रतोः भद्रस्य > "क्रतोर्भद्रस्य"। त्रिपदः पादो यथा—अग्ने तम् अद्य > "अग्ने तमद्य"। चतुष्पदः पदो यथा—"अग्ने विश्वेभिः सुमना अनीकैः"। अनेकपदः पादो यथा—विधूमम् अग्ने अरुषम् मियेध्य > "विधूममग्ने अरुषम्मियेध्य"॥

(अ० भा०) एकं पदं यस्मिन् सः एकपदः पादः स्यात्। एकं द्विपदादिः एकपदः पादः। यथा—"हृदिस्पृशम्"। द्विपदो यथा—"क्रतोर्भद्रस्य"। त्रिपदो यथा—"अग्ने तमद्य"। चतुष्पदो यथा—"अग्ने वश्वेभिः सुमना अनीकैः"। अनेकपदो यथा—"विधूममग्ने अरुषं मियेध्य"। इयं पादसंहिता छन्दसः पादपरिज्ञानाध्यापनादिप्रयोजनमुच्यते ॥

वर्णानामेकप्राणयोगः सँहिता ॥ १५८ ॥

(उ० भा०) एवं तावत् पादसंहिता ऋक्षु कर्त्तव्या, यजुष्षु त्वयं विधिः वर्णानामेकोच्छ्वासोच्चारणयोगः पदे वा वाक्ये विश्रामः सा च प्राणसंहिता। यत्र भूयांसि पदानि अतिक्रम्यावसानं भवति न त्वेकेन प्रणेन तान्व्याप्तुं शक्यन्ते तत्रायं विधिः। यथा—"त्वामग्न ऋष आर्षेय ऋषीणान्नपादवृणीतायं यजमानः"। यत्र त्ववसानं शक्यते व्याप्तुं तत्रावसान एव विरतिः कर्त्तव्या। यथा—"इन्द्रो विश्वस्य राजति"॥

(अ० भा०) पूर्वसूत्रेण पादसंहिता कार्येत्युक्तम्। यजुष्षु त्वयं विधिः, तत्र पादनियमाभावात्। वर्णानामेकोच्छ्वासयोगपदे वाक्ये तत्र यजुष्वयं विधिः। यथा—"त्वामग्न ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानः"। यत्र त्ववसानं शक्येत व्याप्तुं तत्रावसाने विरतिः कार्या। यथा—"इन्द्रो विश्वस्य राजति" इति॥

विप्रतिषेध उत्तरं बलवदलोपे ॥ १५९ ॥

(उ० भा०) शास्त्रद्वयमन्यत्र चरितार्थमेकस्मिन्नर्थे सङ्गच्छते यत्र स तुल्यबलविरोधो विप्रतिषेध उक्तः, तत्रोत्तरं शास्त्रं बलवद् भवति लोपं वर्जयित्वा। लोपे तु यतो लोपस्तदेव शास्त्रं बलवद् भवति। यथा—"स्वरितवान्त्स्वरितः" इत्यस्यावकाशः। अनुदात्तस्वरितसन्धौस्वरितो भवति। यथा—स्वाहा अवक्रन्दाय > "स्वाहावक्रन्दाय"। तथाच वक्ष्यति—"उदात्तवानुदात्तः"। अस्यावकाशः उदात्तानुदात्तसन्धौ उदात्तो भवति। यथा—सुक्ष्मा च असि > "सुक्ष्मा चासि"। स्वरितोदात्तसन्धौ परत्वादुदात्त एव भवति। यथा—सुप्वा इति > "सुप्वेति"। रात्र्या इन्द्रवत्या > "रात्र्येन्द्रवत्या"। अलोप इति किम्? "स्य एष च" इत्यनेन शास्त्रेण स्यशब्दस्य विसर्जनीयो व्यञ्जने परतो लुप्यते। यथा—"एषः। स्यः। वाजी"। एतच्च पूर्वं शास्त्रम्। अतोऽन्यद्भवति। "रेफे लुप्यते दीर्घं चोपधा"

**इत्यनेन शास्त्रेण रेफे परभूते लुप्यते विसर्जनीयः, उपधा च दीर्घमापद्यते। एतच्च परं शास्त्रम्। ततो लोपस्य बलीयस्त्वाल्लोप एव भवति नोपधादीर्घत्वम्। यथा—एषः स्यः राथ्यः > "एष स्य राथ्यो वृषा"। एषः छागः > "एष छागः"। विसर्जनीयलोपः। "चछयोः शम्" इति न शकारः॥**

(अ० भा०) शास्त्रद्वयमन्यत्र चरीतार्थं सत् यत्रैकस्मिन्नुदाहरणे सङ्गच्छते स तुल्यबलविरोधः विप्रतिषेधः। तत्र उत्तरं बलवत् स्याल्लोपं वर्जयित्वा। लोपे तु लोपविधायकं पूर्वशास्त्रं बलवत्। यथा—"स्वरितवान् स्वरितः" इत्यवकाशः स्वरितानुदात्तसन्धौ। यथा—स्वाहा अवक्रन्दाय > "स्वाहावक्रन्दाय"। "उदात्तानुदात्तः" इत्यवकाशस्तु उदात्तानुदात्तसन्धौ। यथा—सुक्ष्मा च असि > "सुक्ष्मा चासि"। एवमन्यत्र सावकाशमिदं द्वयं यत्र युगपत्प्राप्नोति तत्र स्वरितोदात्तसन्धौ परत्वादुदात्त एव स्यात्। यथा—राव्या इन्द्रवत्या > "राव्येन्द्रवत्या"। लोपे तु "स्य एष च" इत्यनेन पूर्वशास्त्रेण स्यशब्दात्परः विसर्गस्य लोपो विधीयते। स एव बलवत् स्यात् नोत्तरः। "रेफे लुप्यते दीर्घं चोपधा" इति रेफे परभूते विसर्जनीयलोपः। उपधादीर्घः। ततो बलीयस्त्वाल्लोपस्य नोपधादीर्घत्वम्। यथा—"एष स्य राथ्यः"। तथा—"एष च्छागः।" विसर्जनीयलोपः पूर्वोऽपि। तथा एष च्छाग इत्यत्र विसर्जनीयलोप एव। "चछयोः शम्" इति न शकार उत्तरोऽपि॥

## विसर्जनीयो रिफितः॥ १६०॥

**(उ० भा०) इत उत्तरमकारोपध आकारोपधश्च विसर्जनीयो रिफितसंज्ञो भवति। वक्ष्यति—"करमनुदात्तम्।" यथा—"अच्छिद्रा गात्राण्यसिना मिथू कः"। संज्ञाकरणे प्रयोजनम्—"भाव्युपधश्च रिद्विसर्जनीयः" इति। "करिति कः"॥**

(अ० भा०) इत ऊर्ध्वं अकारोपध आकारोपधश्च विसर्जनीयो रिफितसंज्ञो वेदितव्यः। अधिकारसूत्रमेवैतत्। प्रयोजनम्—"भाव्युपधश्च रिद्विसर्जनीयः" इत्यादि॥

करमनुदात्तम् ॥ १६१ ॥

(उ० भा०) करित्येतत्पदमनुदात्तं चेद्रिफितसंज्ञं भवति। अधिकारसूत्रमेतत्। यथा—"महि पाथः पूर्व्यं सध्र्यक्" । अनुदात्तमिति किम्? "को अस्य वेद भुवनस्य नाभिम्" ॥

(अ० भा०) करित्येतत् पदं अनुदात्तं चेत्तदा रिफितसंज्ञं स्यात्। यथा—"महि पाथः पूर्व्यं सध्र्यक्" । अनुदात्तमिति किम्? "को अस्य वेद" ॥

अन्तरनाद्युदात्तम् ॥ १६२ ॥

(उ० भा०) अन्तरित्येतत्पदं रिफितसंज्ञं भवति आद्युदात्तं चेन्न भवति। "अन्तरित्यन्तः," "अन्तस्ते द्यावापृथिवी"। अनाद्युदात्तमिति किम्? "समुद्रं च मध्यं चान्तश्च" "इयं वेदिः परो अन्तः" ॥

(अ० भा०) अन्तरित्येतत्पदं रिफितसंज्ञं स्यात् आद्युदात्तं चेन्न भवति। "अन्तस्ते द्यावापृथिवि"। अनाद्युदात्तमिति किम्? "समुद्रं च मध्यं चान्तश्च पराधश्च"। "इयं वेदिः परो अन्तः" ॥

अहरभकारपरम् ॥ १६३ ॥

(उ० भा०) अहरित्येतत्पदं रिफितसंज्ञं भवति भकारपरं चेन्न भवति। यथा—"प्रवयाह्नाहर्जिन्व," "अहरहरित्यहः। अहः। अहरहरप्रयावम्"। अभकारपरमिति किम्? "तत्ते शुध्यतु शमहोभ्यः," "द्युभिरह्णोभिरक्तुभिर्व्यक्तम्" ॥

(अ० भा०) अहरित्येदत्पदं रिफितसंज्ञं स्याद् भकारपरं चेन्न भवति। यथा—"प्रवयाह्नाहर्जिन्व"। "अहरहरप्रयावम्"। अत्र रिफितसंज्ञा-

प्रयोजनं रेफे द्विरूपं च । "अहरहरित्यहः अहः ।" अभकारपरं किम्? "तत्ते शुध्यतु शमहोभ्यः" । "द्युभिरहोभिः" ॥

आववैरिति समानर्चि ॥ १६४ ॥

(उ० भा०) आवः वः इत्येते पदे रिफिते भवतः उभे अप्येकस्यामृचि यदि भवतः । यथा—"आवरित्यावः । विसीमतः सुरुचो वेन आवः । वरिति वः । सतश्च योनिमसतश्च विवः" । समानर्चीति किम्? "आवो देवास ईमहे" । "नमो वः किरिकेभ्यः" । "अस्मे वो अस्त्विन्द्रियम्" ॥

(अ० भा०) आवः, वः इति पदद्वयं रिफितसंज्ञं स्यात् द्वयमपि यद्येकस्यां ऋचि भवति । यथा—"आवरित्यावः । सुरुचो वेन आवः । वरिति वः । सतश्च योनिमसतश्च विवः" । समानर्चीति किम्? "आवो देवास ईमहे" । "नमो वः किरिकेभ्यो देवानाम्" । "अस्मे वः" ॥

स्तोत-र्वस्तः सनुत-रभा-र्वाद्वाः ॥ १६५ ॥

(उ० भा०) स्तोतः, वस्तः, सनुतः, अभाः, वाः, द्वाः एतानि पदानि रिफितसंज्ञकानि भवन्ति । यथा—"एतँ स्तोतरनेन" "दोषावस्तर्धिया वयम्" । "आराच्चिद्द्वेषः सनुतर्युयोतु" । अग्निं स्वे योनावभारुषा" । "इदमहन्तप्तं वार्बहिर्धा" । "द्वार्भ्यः स्वाहा" ॥

(अ० भा०) एतान्यपि षट् रिफितसंज्ञकानी स्युः । यथा—"एतँ स्तोतरनेन" । "दोषावस्तर्धिया" । "आराच्चिद्द्वेषस्सनुतर्युयोतु" । "अग्निं स्वे योनावभारुषा" । "तप्तं वार्बहिर्धा" । "द्वार्भ्यः स्वाहा" ॥

स्वःपदमनरणे ॥ १६६ ॥

(उ० भा०) स्वरित्येतत्पदं रिफितसंज्ञं भवति, अरणशब्दो यदि परो न भवति । यथा—स्वः न > "स्वर्ण घर्मः" । स्वः अभि विख्येषम्

> "स्वरभि विरूव्येषम्"। पदमिति किम्? पदावयवस्य रिफितसंज्ञा मा भूत्। "राजस्व इति राज। स्वः। सोमस्य दात्रमसि स्वाहा राजस्वः"। अनरण इति किम्? "स्वाय चारणाय च"। "पदादिश्चाजित्परः" इति वक्ष्यति। तस्यायं पुरस्तादपवादः॥

(अ० भा०) स्व इत्येतत्पदं रिफितसंज्ञं स्यादरणशब्दो यदि परो न भवति। "स्वः न स्वर्ण घर्मः"। "स्वरभि विरूव्येषम्"। पदग्रहणं पदावयवे रिफितसंज्ञा मा भूदिति। यथा—"राज स्व इति राज। स्वः"। अरण इति किम्? "स्वाय चारणाय च"। उत्तरस्य सूत्रस्यापवादोऽयम्॥

पदादिश्चाजित्परः॥ १६७॥

(उ० भा०) पदादिश्च यदि स्वश्शब्दो भवति तदा रिफितसंज्ञो भवति जित्परश्चेन्न स्यात् "द्वौ द्वौ प्रथमौ जित्", "ऊष्माणश्च हवर्जम्" जिदित्युक्तम्। "स्वर्ग्यायेति स्वः। ग्याय। स्वर्ग्याय शक्त्या"। पदादिरिति किम्? "स्वाहा राजस्वः"। आजित्परमिति किम्? "स्वर्षाम्"। पदसंहितोदाहरणम्॥

(अ० भा०) पदादिः स्वशब्दः रिफितसंज्ञः स्याद्यदि जित्परो न स्यात्। "द्वौ द्वौ प्रथमौ जित्", "ऊष्माणश्च हवर्जम्" इत्युक्तम्। यथा—"स्वर्ग्यायेति स्वः। ग्याय"। "स्वर्ग्यामिति स्वः। ग्याम्"। पदादिः किम्? "स्वाहा। राजस्वः" इति। अजित्पर इति किम्? "स्वः स्वर्षामिति स्वः। साम्"॥

ह्वाः सवितः पुनस्त्वष्टर्नेष्टरकर्होतर्मातः प्रातर्जामातरजीगः प्रणेतरिति च॥ १६८॥

(उ० भा०) ह्वाः, सवितः, पुनः, त्वष्टः, नेष्टः, अकः, होतः, मातः, प्रातः, जामातः, अजीगः, प्रणेतः, एतेषां पदानां विसर्जनीयो रिफितसंज्ञो भवति। यथा—"मा ह्वार्मा ते"। "देवसवितरिति सवितः"।

"पुनर्मनः"। "देव त्वष्टर्भूरि ते" "ग्रावो नेष्टः पिब"। "सरस्वति तमिह धातवेऽकः"। "सोमँ होतर्यज"। "पृथिवि मातर्मा मा हिंसीः"। "इन्द्र प्रातर्जुषस्व नः"। "त्वष्टुर्जामातरद्भुत"। "आदिद्ग्रसिष्ठ ओषधीरजीगः"। "भग प्रणेतर्भग सत्यराधः"॥

(अ० भा०) द्वाः, सवितः, पुनः, त्वष्टः, नेष्टः, अकः, होतः, मातः, प्रातः, जामातः, अजीगः, प्रणेत , एषां द्वादशपदानां विसर्गः रिफितसंज्ञः स्यात्। उदाहरणानि यथा—"द्वार्मा ते यज्ञपति"। "देवसवितरिति सवितः"। "पुनर्मनः"। "देवत्वष्टर्भूरि ते"। "ग्रावो नेष्टः पिब"। इदं माध्यन्दिनीयानामुदाहरणम्। "सरस्वति तमिह धातवेऽकः"। "सोमं होतर्यज"। "पृथिवि मातर्मा मा"। "इन्द्र प्रातर्जुषस्व नः"। "त्वष्टुर्जामातरद्भुत"। "आदिद्ग्रसिष्ठ ओषधीरजीगः"। "भगप्रणेतर्भग सत्यराधः"। इदमपि माध्यन्दिनीयानामुदाहरणम्। द्वास्सवितरिति पदमात्रग्रहणात् यत्र यत्रैतान्युपलभ्यन्ते तत्राप्येवमेव रिफितसंज्ञा द्रष्टव्या॥

वृद्धं वृद्धिः॥ १६९॥

(उ० भा०) वृद्धमिदं शास्त्रमन्यानि शास्त्राण्यपेक्ष्य, शिक्षाविहितं व्याकरणविहितं चास्मिन् शास्त्रे उभयं यतः प्रक्रियते। अत एव हेतोः शिष्याणामेतच्छास्त्रश्राविणां वृद्धिर्भवति॥

इत्यानन्दपुरवास्तव्यश्रीवज्रटसुतोव्वटकृतौ
प्रातिशाख्यसूत्रभाष्ये प्रथमोऽध्यायः॥

(अ० भा०) वृद्धमिदं शास्त्रं अन्यशास्त्रापेक्षया, यतः शिक्षाविहितं व्याकरणविहितं चोभयमस्मिन् शास्त्रेऽभिधीयते। अतएव हेतोः एतत्पठतां शिष्याणां वृद्धिः ज्ञानाभिवृद्धिर्भवतीति॥

श्रीमत्प्रथमाख्यनागदेवभट्टात्मजेन विरचिते
कात्यायनप्रातिशाख्यसूत्रभाष्ये
प्रथमाध्यायः समाप्तः॥

---

## अथ द्वितीयोऽध्यायः ॥

---

### स्वरितवर्जमेकोदात्तं पदम् ॥ १ ॥

(उव्वटभाष्यम्)

संज्ञाः परिभाषाश्च प्रथमाध्याये शास्त्रसंव्यवहारार्थमुक्ताः। इदानीं "स्वरसंस्कारयोश्छन्दसि नियमः" इति प्रतिज्ञातौ स्वरसंस्कारावारभ्येते। तत्र च प्रथमं स्वरः प्रतिज्ञात इत्यतः स्वर एव प्रथममारभ्यते। एकं स्वरितं प्रथमं वर्जयित्वा एकोदात्तं पदं भवति, सर्वस्मिन्नेव पदे एकमक्षरं स्वरितमुदात्तं च भवति, अन्यान्यक्षराण्यनुदात्तानीति सूत्रार्थः। तत्र स्वरितस्य चत्वारो भेदा भवन्ति। तद्यथा—आदिस्वरित-मध्यस्वरिता-न्तस्वरित-सर्वस्वरितानि पदानि भवन्ति। आदिस्वरितं यथा—"व्युप्तकेशायेति व्युप्त केशाय"। मध्यस्वरितं यथा—"मनुष्याणाम्। स्वर्ग्याय"। अन्तस्वरितं यथा—"वैष्णव्यौ"। "धान्यम्"। सर्वस्वरितं यथा—"स्वः"। उदात्तस्य चत्वारो भेदा भवन्ति तद्यथा आद्युदात्त-मध्योदात्तान्तोदात्त-सर्वोदात्तानि पदानि भवन्ति। आद्युदात्तं यथा—"अश्वः"। "स्वाहा"। मध्योदात्तं यथा—"त्रिताय द्विताय"। अन्तोदात्तं यथा—"इषे ऊर्जे रय्यै"। सर्वोदात्तं यथा—"प्र तत्"। एता अष्टौ पदभक्तयोऽनेन सूत्रेणोक्ताः। आद्युदात्त-द्व्युदात्त-सर्वोदात्तानि वक्ष्यति। एवमेता एकादश पदभक्तयो भवन्ति सर्ववेदेषु॥

(अनन्तभट्टभाष्यम्)

हरिः ओम्। संज्ञाः परिभाषाश्च प्रथमाध्यायेऽभिहिताः। द्वितीयाध्याये तु "स्वरसंस्कारयोश्छन्दसि नियमः" इति पूर्वं प्रतिज्ञातौ स्वरसंस्कारावारभ्येते। तत्र प्रथमं स्वरप्रतिज्ञानात् स एवाभिधीयते। एकं स्वरितं वर्जयित्वा पदं एकोदात्तं स्यात्। सर्वस्मिन्नेव पदे एकमक्षरं स्वरितं वा उदात्तं वा भवति। तं त्यक्त्वा अन्यान्यक्षराणि अनुदात्तानीति सूत्रार्थः। तत्र स्वरितं चतुर्धा भिद्यते—आदि-

स्वरितं मध्यस्वरितं अन्त्यस्वरितं सर्वस्वरितं पदमिति। आदिस्वरितं यथा— "व्युप्तकेशाय"। मध्यस्वरितं यथा—"मनुष्याणाम्"। अन्त्यस्वरितं यथा— "वैष्णव्यौ"। सर्वस्वरितं यथा—"स्वः"। उदात्तमप्युक्तभेदेन चतुर्धा भिद्यते। तत्र आद्युदात्तं यथा—"अश्वः", "स्वाहा"। मध्योदात्तं यथा—"त्रिताय", "द्विताय"। अन्त्योदात्तं यथा—"इषे", "ऊर्जे"। सर्वोदात्तं यथा— "प्र"। "नु"। एते अष्टौ पदप्रकाराः अनेन सूत्रेणोक्ताः। >द्युदात्त-त्रयुदात्त-सर्वानुदात्तानि तु वक्ष्यति। एवमुत्तरैस्सह एकादशभेदा पदभक्तयो भवन्ति सर्ववेदेषु॥

## अनुदात्तम् ॥ २॥

(उ० भा०) स्वरितादक्षरादुदात्ताद्वा यदवशिष्टं तदनुदात्तं भवति। उक्तान्येवोदाहरणानि। अधिकारार्थमेतत्॥

(अ० भा०) स्वरितादक्षरादुदात्ताद्वा अवशिष्टं पदेऽनुदात्तं स्यात्। उक्तान्येवोदाहरणानि। अधिकारसूत्रमेतत्॥

## नो नौ मे मदर्थे त्रिद्व्येकेषु ॥ ३॥

(उ० भा०) अनुदात्तमित्यनुवर्त्तते। नः नौ मे एतानि मदर्थे वर्तमानानि अस्मदर्थं यदि ब्रुवन्ति, बहुवचनद्विवचनैकवचनाभिधायकानि च यदि भवन्ति तदा यथासङ्ख्यं वर्तमानानि अनुदात्तानि भवन्ति। नः यथा—"शन्न इन्द्राग्नी"। "स्वस्ति न इन्द्रः"। नौ यथा— "अस्थूरि णौ गार्हपत्यानि सन्तु"। मे यथा—"इमा मे अग्न इष्टका धेनवः"। "इमं मे वरुण"॥

(अ० भा) एतानि पदानि अस्मदर्थानि क्रमेण बहुवचनद्विवचनैकवचनाभिधायकानि अनुदात्तानि स्युः। नः यथा—"शन्न इन्द्राग्नी भवताम्" इत्यादि। नै यथा—"सह नौ व्रतपते"। मे यथा—"इमा मे अग्न इष्टका धेनवः"। नो नौ मे इतीयतापि सूत्रेण कार्यसिद्धौ यत् "मदर्थे त्रिद्व्येकेषु"

इति तत् अतिस्पष्टार्थमेव व्यावर्त्याभावादिति ज्ञेयम्। उत्तरसूत्रानुवृत्त्यर्थं वेति द्रष्टव्यम् ॥

**मा च ॥ ४ ॥**

**(उ० भा०) मा इत्येतच्च पदमनुदात्तं भवति। अस्मदर्थे चेद्वर्तते। यथा—"आ मा गन्ताम्पितरा मातरा च"। मदर्थ इति किम्? "मापा मौषधीर्हिंसीः"॥**

(अ० भा०) मा इत्येतत्पदं मदर्थे वर्तमानं अनुदात्तं स्यात्। यथा—"आमागन्ताम् पितरा मातरा"। मदर्थे किम्? निषेधार्थकस्य मा भूदिति। "मापा मौषधीर्हिंसीः"॥

**वो वान्ते त्वदर्थे ॥ ५ ॥**

**(उ० भा०) वः वां ते एतानि पदानि युष्मदर्थे वर्तमानानि बहुवचन-द्विवचनै-कवचनेषु यथासङ्ख्यं वर्तमानानि अनुदात्तानि भवन्ति। वः यथा—"तं वो दस्मम्"। "आ वो देवास ईमहे"। वां यथा—"अयं वां मित्रावरुणा सुतः"। "या वां कशा मधुमती"। ते यथा—"एष ते रुद्रभागः"। "अयं ते योनिः"॥**

(अ० भा०) त्रीणि पदानि युष्मदर्थकानि बहुवचन-द्विवचन-एकवचनान्यनुदात्तानि स्युः। "मा च" इति सूत्रेण व्यवधानेऽपि मण्डूकप्लुतिन्यायेन त्रिद्व्येकेष्विति पदमनुवर्त्तते। क्रमेणोदाहरणानि—"तं वो गृह्णाम्युत्तमम्"। "आ वो देवास ईमहे"। "अयं वां मित्रावरुणा"। "या वां कशा"। "एष ते रुद्रभागः"। "अयं ते योनिः"। युष्मदर्थकानीति किम्? "ते नोऽवन्तु ते नः पान्तु"॥

**त्वा च ॥ ६ ॥**

**(उ० भा०) त्वा इत्येतच्च पदं युष्मदर्थे वर्त्तमानमनुदात्तं भवति।**

यथा—"मा त्वाग्निर्ध्वनयीद्धूमगन्धिः"। "तन्त्वा शोचिष्ठ दीदिवः"। नो नौ म इति यथाश्रुतेन सिद्धे यन्मदर्थ इति त्रिद्व्येकेष्विति च वदति तच्छिष्यव्युत्पादनार्थम्। मा इत्येतस्य तु पदस्य मदर्थ इति विशेषणं कर्त्तव्यम्। प्रतिषेधार्थीयस्यापि सम्भवात्। वो वां ते त्वा एतेषां च पदानां त्वदर्थ इति विशेषणं शिष्यव्युत्पादनार्थमेव, अन्यार्थस्याव्यभिचारात्॥

(अ० भा०) त्वेति पदं युष्मदर्थकं अनुदात्तं स्यात्। यथा—"मा त्वाग्निः"। "तन्त्वा शोचिष्ठ दीदिवः"। त्वेति किम्? "त्वामद्य"॥

पूर्ववाननुदेशः॥ ७॥

(उ० भा०) पूर्वैः पदैः प्रज्ञापितस्यार्थस्य यत्पश्चात् अस्मै एषां अस्मिन्नित्यादि सर्वनामपदं तस्यैवार्थस्याभिधायकं भवति तदनुदेशशब्देनोच्यते। तदनुदात्तं भवति। अस्मै यथा—"भरन्तोऽश्वायेव तिष्ठते घासमस्मै"। एषां यथा—इहेहैषां कृणुहि भोजनानि"। अस्मिन् यथा—"आस्मिन् हव्या जुहोतन"। पूर्ववानिति किम्? "सोमः पवतेऽस्मै ब्रह्मणे"। "आसां प्रजानामेषां पशूनाम्"॥

(अ० भा०) पूर्वैः पदैः प्रज्ञापितस्यार्थस्य यत्पश्चादस्मिन् अस्मै एषां इत्यादि सर्वनामपदं तस्यैवार्थस्य वाचकं भवति तदनुदेशशब्देनाभिधीयते। तदनुदात्तं स्यात्। यथा—"अश्वायेव तिष्ठते घासमस्मै"। "इहेहैषां कृणुहि भोजनानि।" "आस्मिन् हव्या जुहोतन"। तत्र पूर्वपदैर्ज्ञापितत्वं अर्थपर्यालोचनया ज्ञेयम्। पूर्ववानिति किम्? "सोमः पवते सोमः पवते। अस्मै ब्रह्मणे। आसां प्रजानामेषां पशूनाम्"। अत्र पूर्वपदज्ञापितार्थस्याभिधायकत्वाभावात् न सर्वानुदात्तम्॥

असि॥ ८॥

(उ० भा०) असीत्येतत्पदमनुदात्तं भवति। "कृष्णोऽस्याखरेष्ठः

वेदिरसि बर्हिषि"। अख्यातमसिशब्दः, तस्य वक्ष्यमाणोऽनुदात्तस्वरः प्राप्त एव। इह यद्ग्रहणं तदाख्यातपदानभिज्ञस्यापि ज्ञानार्थम् ॥

(अ० भा०) असीति पदमनुदात्तं स्यात्। यथा—"वेदोऽसि"। "कृष्णोऽसि"। असिशब्दः आख्यातः। तस्य आख्यातत्वेन वक्ष्यमाणस्वरः प्राप्त एव। इह पृथक् यत् ग्रहणं तदाख्यातपदानभिज्ञज्ञापनार्थम्। तद्वा असीति शब्दस्यानेकस्वरदर्शनात् सामान्यतः अनुदात्तत्वज्ञापनाय पृथक्करणमित्यवधेयम् ॥

यथा गृभोभुवोऽग्निभ्यः ॥ ९ ॥

(उ० भा०) यथाशब्दो गृभोभुवोऽग्निशब्देभ्यः परोऽनुदात्तो भवति। गृभः यथा—"पुरा जीवगृभो यथा"। भुवः यथा—"सत्यस्याक्षिभुवो यथा"। अग्निर्यथा—"भ्राजन्तो अग्नयो यथा" एतेभ्यः किम्? "यथा नो वस्यसस्करत्" ॥

(अ० भा०) एभ्यः परः यथाशब्दः अनुदात्तं स्यात्। क्रमेणोदाहरणानि—"पुरा जीवगृभो यथा"। "सत्यस्याक्षिभुवो यथा"। "भ्राजन्तो अग्नयो यथा"। गृभोभुवोग्निभ्य इति किम्? "यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात्" इत्यादि ॥

गिर्वणः ॥ १० ॥

(उ० भा०) गिर्वण इत्येतत्पदमनुदात्तं भवति। "परि त्वा गिर्वणो गिरः"। एतच्चामन्त्रितत्वादेवानुदात्तं प्राप्तम्। यत्पुनरुच्यते तदामन्त्रितानभिज्ञस्यापि प्रत्ययार्थम् ॥

(अ० भा०) एतत्पदमनुदात्तं स्यात्। यथा—"परि त्वा गिर्वणो गिरः"। इदमप्यामन्त्रितत्वादेवानुदात्तं प्राप्तम्। यत्पुनरुच्यते तदामन्त्रितपदानभिज्ञप्रज्ञापनार्थम् ॥

**अग्ने घृतेनेति च ॥ ११ ॥**

(उ० भा०) अग्नेपूर्वं घृतेनेत्येतत्पदमनुदात्तं भवति। यथा— "अग्ने घृतेनाहुत"। अग्नेपूर्वमिति किम्?। "अङ्गिरो घृतेन वर्द्धयामसि" ॥

(अ० भा०) अग्नेपूर्वं घृतेनेति पदमनुदात्तं स्यात्। "अग्ने घृतेनाहुत"। अग्नेपूर्वमिति किम्? "अङ्गिरो घृतेन वर्धयामसि" ॥

**प्रचिकितश्च ॥ १२ ॥**

(उ० भा०) प्रपूर्वं चिकित इत्येतत्पदमनुदात्तं भवति। यथा— "त्वं सोम प्रचिकितो मनीषा"। प्रपूर्वमिति किम्? अन्यपदपूर्वमनुदात्तं न भवति। एतदप्यामन्त्रितत्वादेवानुदात्तं मन्दधीप्रतिपत्त्यर्थमुच्यते ॥

(अ० भा०) प्रपूर्वः चिकितशब्द अनुदात्तः स्यात्। यथा—"त्वं सोम प्रचिकितो मनीषा"। प्रपूर्वमिति किम्? "आ च वह मित्रमहश्चिकित्वात्"। एतदप्यामन्त्रितत्वात् अनुदात्तम्। सिद्धे पृथक्सूत्रकरणं मन्दधीप्रज्ञापनार्थमिति केचित्॥ वस्तुतस्तु प्रचिकितः प्रकृष्टचेतनावांस्त्वं इति युष्मदो विशेषणत्वेन स्वरान्तरे प्राप्ते इदं सूत्रम् ॥

**एनोऽपापे ॥ १३ ॥**

(उ० भा०) एन इत्येतत्पदमपापे वाच्येऽनुदात्तं भवति। अविशिष्टं चैतत्प्रातिपदिकमात्रं सर्वलिङ्गं गृह्यते। पुल्लिङ्गं भवति यथा—"उदेनमुत्तरान्नय"। स्त्रीलिङ्गं भवति यथा—"मैनान्तपसा मार्चिषाभि शोचीः"। नपुंसकलिङ्गं भवति यथा—"मातेव पुत्रं बिभृताप्स्वेनत्"। अपाप इति किम्? "देवकृतस्यैनसोऽवयजनमसि"। "यदेनश्चकृमा वयम्" ॥

(अ० भा०) एन इत्येतत्पदं अपापवाचि अनुदात्तं स्यात्। अविशेषाच्चैतत् सर्वलिङ्गं गृह्यते। तत्र पुल्लिङ्गे यथा—"उदेनमुत्तरां नयाग्ने"। "मैनं

हिंसीः"। स्त्रीलिङ्गे यथा—"मैनां तपसा"। नपुंसके यथा—"मातेव पुत्रं विभृताप्स्वेनत्"। अपाप इति किम्? "यदेनश्चकृमा वयम्"॥

## इहपूर्वं श्रुतम् ॥ १४ ॥

(उ० भा०) इहपूर्वं श्रुतमित्येतदनुदात्तं भवति। यथा—"ममे—दिह श्रुतं हवम्"। इहपूर्वमिति किम्? "श्रुतं मे मित्रावरुणा हवेमा"। एतद्व्याख्यातत्वादनुदात्तं मन्दधीप्रतिपत्त्यर्थमुच्यते॥

(अ० भा०) इहपूर्वं श्रुतं इति पदं अनुदात्तं भवति। विशिष्टप्रयोजनमन्यत्र निवृत्तिः। यथा—"ममेदिह श्रुतं हवम्"। इह पूर्वमिति किम्? "आ मा जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेम"। श्रुतं श्रुणुतमित्यर्थः। एतद्व्याख्यातत्वात् अनुदात्तं तथापि मन्दधीप्रतिपत्त्यर्थं तथा गृहीतम्॥

## मन्ये पदपूर्वं सर्वत्र ॥ १५ ॥

(उ० भा०) मन्ये इत्येतत्पदं पदपूर्वं अनुदात्तं भवति सर्वत्र। यथा—"अग्निं होतारं मन्ये दास्वन्तम्"। आख्यातत्वादाख्यातवद्यद्योगादिभिः स्वरविकारो यः प्राप्तः सोऽनेन सर्वत्रग्रहणेन निषिध्यते, अपदपूर्वस्य स्थाप्यते॥

(अ० भा०) पदं पूर्वं यस्य तत् पदपूर्वम्। मन्ये इति पदं अनुदात्तं स्यात् सर्वत्र संहितायाम्। "अग्निं होतारं मन्ये"। यच्छब्दयोगादिभिर्यत् निषिद्धं तस्य प्रतिप्रसवार्थं सर्वत्रग्रहणमिति द्रष्टव्यम्। पदपूर्वं किम्? "मन्ये त्वा जातवेदसम्"॥

## वाचकमुचित्समस्मात् घहस्मत्व ईम्मर्या अरेस्विन्निपाताश्चेत्॥१६॥

(उ० भा०) वा, च, कम्, उ, चित्, समस्मात्, घ, ह, स्म, त्व, ईम्, मर्याः, अरे, स्वित्, एतानि पदानि अनुदात्तानि भवन्ति यदि

निपातानि भवन्ति। असत्ववचनानि भवन्तीत्यर्थः। वा यथा—"वातो वा मनो वा"। च यथा—"अग्निश्च पृथिवी च सन्नते"। कं यथा—"इमानु कं भुवना सीषधाम"। उ यथा—"य उ संभूत्यां रताः"। चिद्यथा—"उतापवक्ता हृदयाविधश्चित्"। समस्माद्यथा—"उरुष्या णो अघायतः समस्मात्"। घ यथा—"आ घा ये अग्निमिन्धते"। ह यथा—"दधे ह गर्भमृत्वियम्"। स्म यथा—"अस्ति हि ष्मा ते शुष्मिन्नवयाः"। त्वो यथा—"पीयति त्वो अनु त्वो गृणाति"। ईं यथा—"का ईमरे पिशङ्गिला"। मर्य्याः यथा—"आविर्मर्या आवित्तो अग्निर्गृहपतिः"। अरे यथा—"अजारे पिशङ्गिला"। स्विद्यथा—"अधः स्विदासी३दुपरि स्विदासी३त्"। निपाता इति किम्? "चिदसि मनासि"॥

(अ० भा०) एतानि चतुर्दश पदानि अनुदात्तानि स्युः यदि निपातानि असत्ववचनानि। निपातसंज्ञा तु चादयोऽसत्वे इति पाणिनीयसूत्रात् ज्ञेया। यथाक्रमेणोदाहरणानि—"वातो वा मनो वा"। "ह्नदो वा मनसो वा चक्षुषो वा"। "वाजश्च पृथिवी च"। "इमा नुकं भुवना"। य उ सम्भूत्यां रताः"। "हृदयाविधश्चित्"। "उरुष्याणो अघायतस्समस्मात्"। "आ घा ये अग्निमिन्धते"। "दधे ह गर्भमृत्वियम्"। देवैरस्ति हि ष्मा ते"। "पीयति त्वो अनु त्वो गृणाति"। "का ईमरे"। "आविर्मर्या आवित्तः"। "अजारे"। "कास्विदासीत्"। "अधस्विदासोदुपरि स्विदासीत्"। निपाता इति किम्? "चिदसि तया"॥

पदपूर्वमामन्त्रितमनानार्थेऽपादादौ ॥ १७ ॥

(उ० भा०) पदपूर्वमामन्त्रितं यत्पदं तदनुदात्तं भवति, यदि तन्नानाभूतस्यार्थस्याभिधायकं न भवति, यदि तत् द्विवचनबहुवचनेनारभ्यत इत्यर्थः। यदि च पादादौ न भवति। पदपूर्वं भवति यथा—"त्वमग्ने व्रतपा असि"। "वयं सोम व्रते तव"। अनानार्थे इति किम्? "मित्रस्य मा चक्षुषेक्षध्वमग्नयः"। "आदित्यानां पत्वा-

न्विहि देवाः"। अपादादाविति किम्? "या वां कशा मधुमत्यश्विना"। "संसमिद्युवसे वृषन्नग्ने"॥

(अ० भा०) पदं पूर्वं यस्येति विग्रहे पदपूर्वं अपादादौ वर्तमानमामन्त्रितपदं अनुदात्तं स्यात्। यद्यनेकार्थं न भवति, यदि तत्प्रभृति अन्यद्वाक्यं नारभ्यते॥ ………………… अत्रायं भावः—पदपूर्वत्वमनानार्थत्वं अपादादित्वं चेति त्रीणि विशेषणानि आमन्त्रितस्य दृश्यते। तत्र पदादित्वरूपं विशेषणं ऋचामन्त्रितस्यानियताक्षराया ऋचः पादबद्धत्वेनेतद्व्यावृत्तिसम्भवात्। अनानार्थत्वरूपविशेषणमुभयगतामन्त्रितस्य अनियताक्षरयजुषः पादबद्धत्वाभावेनापादादित्वव्यावृत्यसम्भवेऽपि नानार्थत्वव्यावृत्तिसम्भवात्। अत्र अनानार्थत्वं नाम वाक्यस्यादावेव विद्यमानत्वं विवक्षितमर्थान्तराभावात्। पादादित्वरूपविशेषणं तु द्वयोरपि सम्बध्यते। तत्र उदाहरणम्—"त्वमग्ने व्रतपा असि", "वयं सोम व्रते तव"। "उभा वामिन्द्राग्नी", "अस्यां उ देवाः"। पदपूर्वं किम्? "अग्ने नय", "इन्द्राग्नी आगतम्"। "आपो हि ष्ठा"। अपादादौ किम्? "वृषन्", "अग्ने संसमिद्युवसे वृषन्नग्ने विश्वानि", यजुरुदाहरणं यथा—"धृष्टिरस्यपाग्ने। आप्यायध्वमघ्निया:", "नमो वः पितरः शुष्माय"। इत्यादि। अनानार्थं किम्? "मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्"। अत्र सर्वाणि भूतानीत्यसम्बन्धप्रथमाविभक्तौ च समानरूपत्वान्नानार्थता। आमन्त्रितं पदपूर्वमिति किम्? "अग्ने नय सुपथा राये", "अग्नेऽदब्धायो", "अग्ने व्रतपते"। अपदादाविति किम्? "अग्ने विश्वान्यर्थ आ"॥

## तेनानन्तरा षष्ठ्येकपदवत्॥ १८॥

(उ० भा०) तेनामन्त्रितेनाव्यवहिता षष्ठ्येकपदवद्भवति। आनन्तर्यं चेह देशकृतमर्थकृतं च गृह्यते। देशकृतं पुरस्तादुपरिष्टाद्वा षष्ठ्यन्तं पदमामन्त्रितस्य। अर्थकृतमेकार्थीभावः। एतदुक्तं भवति—यदि तत् षष्ठ्यन्तमामन्त्रितस्य विशेषणं भवति तदैकपदवत्स्वरो भवति। यदि षष्ठ्यन्तं वाक्यादौ पादादौ वा न भवति पदपूर्वं भवति तदा तदप्यनुदात्तं भवति। अतोन्यथात्वे आद्युदात्तं

भवति। यथा—"अपान्नपात्"। "देवीरापो अपान्नपात्"। ऋषीणान्नपात् यथा—"ऋषीणान्नपादवृणीत"। "विश्वासां भुवां पते" "उत्तिष्ठ ब्रह्मणस्पते"। अनन्तरेति किम्? "ब्रह्मणस्पते त्वमस्य" इत्यत्र एकपदवदिति च वदिति व्युपदेशादन्यत्राद्युदात्तत्वं षष्ठया-भवति। यथा—"ऊर्जो नपाज्जातवेद" इत्यत्र ऊर्क्शब्दस्य षष्ठ्यन्तस्य "तेनानन्तरा षष्ठ्येकपदवत्" इत्यनेन सूत्रेणामन्त्रितस्यानन्तरा षष्ठ्येक-पदवत् स्वरं लभते इत्येतदुक्तं भवति। अधुना आमन्त्रितेन सह षष्ठ्या यत्रैकार्थीभावो न भवति तत्प्रत्युदाहरणभूतं सूत्रं शिष्यभ्रान्तिव्युदासार्थं स्वयमेव सूत्रकारः पठति ॥

(आ० भा०) तेन आमन्त्रितेन अव्यवहिता षष्ठी। षष्ठ्यन्तं पदमेकपदवत् स्यात्। अव्यवधानं चेह देशकृतं अर्थकृतं च ग्राह्यम्। तत्र देशकृतं पूर्वकृतं परकृतं वा ज्ञेयम्। अर्थकृतं त्वेकार्थरूपम्। एतदुक्तं भवति। यदि तत् षष्ठ्यन्तमामन्त्रितस्य विशेषणं भवति तदैकपदवत्स्वरो भवति। यदि षष्ठ्यन्तं वाक्यादौ पादादौ वर्त्तमानं न भवति तदा अनुदात्तं भवतीत्यर्थः। अतोऽन्यथात्वे आद्युदात्तं भवति। यथा—अपाम्। नपात्—"देवीरापो अपान्नपात्"। आर्षेय—"ऋषीणां नपादवृणीत"। भुवां पते—"विश्वासां भुवां पते"। ब्रह्मणः पते—"उत्तिष्ठ ब्रह्मणस्पते"। वाक्यपादाद्यावर्त्तनं किम्? "अपां नपात्," "अग्नेरनीकमप आविवेशा अपां नपात्"। "ब्रह्मणस्पते त्वमस्य यत्ता"। एकपदवदित्युपदेशादन्य-त्राद्युदात्तत्वं षष्ठ्या भवति। "ऊर्जो नपात्"। प्रत्युदाहरणमेतत्। इत्यादिदेशकृतार्थकृतानन्तर्योदाहरणम्। अधुना आमन्त्रितेन सह षष्ठ्यादेशकृ-तानन्तर्यसत्वेऽपि यत्रैकार्थभावः न भवति तत्प्रत्युदाहरणभूतं सूत्रं शिष्याणां शीघ्रबोधार्थं स्वयमेवाह कात्यायनः—

**न पृथिविदेवयजन्योषध्या देवभूरेः पवित्रपते पवित्रपूतस्या-पान्नपान्नृपान्नृपते सोमाग्नेः सोमेन्द्रस्य सोमसुवीर्यस्य सोम विश्वेषां देवानां प्रजापते यस्य यस्य देवाग्ने तवाग्ने वाज-**

स्याग्ने वरुणस्यापो अस्माकम् ॥ १९ ॥

(उ० भा०) पृथिवि देवयजन्योषध्याः देवभूरेः पवित्रपते पवित्रपूतस्य अपान्नपात् नृपान्नृपते सोमाग्नेः सोमेन्द्रस्य सोमसुवीर्यस्य सोम विश्वेषां देवानां प्रजापते यस्य यस्य देव अग्ने तव अग्ने वाजस्य अग्ने वरुणस्य आपो अस्माकम् । एतेषामामन्त्रितानां यानन्तरा षष्ठी सानेकार्थीभावान्नैकपदवत्स्वरं लभते । यथा— "पृथिवि देवयजनि," "पृथिवि देवयजन्त्योषध्यास्ते"। देवभूरेर्यथा—"वामस्य हि क्षयस्य देवभूरेः"। पवित्रपते पवित्रपूतस्य यथा—"तस्य ते पवित्रपते पवित्रपूतस्य"। अपान्नपाद्यथा—"अपान्नपात्प्रतिरक्षन्नसुम्"। नृपान्नृपते यथा—"त्वन्नृणान्नृपते जायसे शुचिः"। सोमाग्नेर्यथा—"उशिक्त्वं देव सोमाग्नेः"। सोमेन्द्रस्य यथा—"वशी त्वं देव सोमेन्द्रस्य"। सोम सुवीर्यस्य यथा— "अच्छिन्नस्य ते देव सोम सुवीर्यस्य"। सोम विश्वेषां देवानां यथा— "अस्मत्सखा त्वं देव सोम विश्वेषां देवानाम्"। प्रजापते यस्य यथा— "स नो भुवनस्य पते प्रजापते यस्य"। यस्य देव यथा—"यस्य देव दधिषे पूर्वपेयम्"। अग्ने तव यथा—"अग्ने तव श्रवो वयः" । अग्ने वाजस्य यथा—"अग्ने वाजस्य गोमतः"। अग्ने वरुणस्य यथा— "त्वन्नो अग्ने वरुणस्य विद्वान्"। आपो अस्माकं यथा—"आपो अस्माकमन्तरुदरे सुशेवाः"। एवमादीन्यन्यान्यपि प्रत्युदाहरणानि द्रष्टव्यानि। यथा— "यस्यौषधीः प्रसर्पथ" ॥

(आ० भा०) एतेषां पदानां विशेषणाभावादित्यर्थः । आमन्त्रितानां या अनन्तरा षष्ठी सानेकार्थीभावान्नैकपदवत् स्वरं लभते । क्रमेणोदाहरणानि । "पृथिवि देवयजन्योषध्यास्ते मूलम्"। "वामस्य हि क्षयस्य देवभूरेः"। "तस्य ते पवित्रपते पवित्रपूतस्य"। "अपां नपात्प्रतिरक्षन्नसु सूर्यम्"। "त्वं नृणां नृपते जायसे शुचिः"। "उशिक्त्वं देव सोमाग्नेः"। "वशी त्वं देव सोमेन्द्रस्य"। "अच्छिन्नस्य ते देवसोम सुवीर्यस्य"। "असत्सरवा त्वं देव सोम विश्वेषाम्"। "स नो भुवनस्य पते प्रजापते यस्य"। "यस्य देव दधिषे पूर्वपेयम्"। "अग्ने तव श्रवो वयः"। "त्वं नो अग्ने तव"।

" अग्ने वाजस्य गोमतः " । " त्वन्नो अग्ने वरुणस्य विद्वान् " । " यूयमापो अस्माकमन्तरुदरे सुशेवाः " । अत्र सर्वत्र ओषध्या इत्यादि षष्ठ्यन्तं पदं स्वसन्निहितामन्त्रितपदस्य विशेषणत्वाभावान्न सर्वत्रानुदात्तमिति भावः । आमन्त्रितस्य विशेषणाभावात्तु तदन्वयो द्रष्टव्यः । एवमन्यदपि प्रत्युदाहरणं द्रष्टव्यम् । सूत्रोक्तस्योपलक्षणत्वात् । यथा—" यस्यौषधीः प्रसर्पथ " इति ॥

सुमङ्गल सत्यराजन्विकिरिद्र विलोहित दरिद्र नीललोहित श्रेयस्कर भूयस्कराम्बेऽम्बिकेऽम्बालिके शख्ये ब्रह्म संशिते मरुतो अश्विना यव्ये गव्ये द्यावापृथिवी उरोऽग्ना३इ पत्नीवंल्लाजी३च्छाची३न्मीढुष्टम शिवतम सहस्राक्ष शतेषुधे वसुपते वसुदावन् ॥ २० ॥

(उ० भा०) सुमङ्गल सत्यराजन्, विकिरिद्र विलोहित, दरिद्र नीललोहित, श्रेयस्कर, भूयस्कर, अम्बेऽम्बिकेऽम्बालिके, शख्ये ब्रह्म संशिते, मरुतो अश्विना, यव्ये गव्ये, द्यावापृथिवी उरो, अग्ना३इ पत्नीवन्, लाजी३न्, शाची३न, मीढुष्टम शिवतम, सहस्राक्ष शतेषुधे, वसुपते वसुदावन्, एतान्यामन्त्रितानि नानुदात्तानि भवन्ति । पदपूर्वमित्यस्यापवादः । सुमङ्गल सत्यराजन्यथा—" सुश्लोक सुमङ्गल सत्यराजन् " । विकिरिद्र विलोहित यथा—" विकिरिद्र विलोहित नमस्ते " । दरिद्र नीललोहित यथा—" अन्धसस्पते दरिद्र नीललोहित " । अत्र सुमङ्गलविकिरिद्रशब्दस्य पादादित्वादाद्युदात्तत्वं सिद्धमेवेति तद्विशेषणार्थं द्वितीयपदस्योच्यते । एवं सर्वत्रैतज्जातीयकेषु द्विपदेषु प्रयोजनं द्रष्टव्यम् । श्रेयस्कर भूयस्कर यथा—" बहुकार श्रेयस्कर भूयस्कर " । अम्बेऽम्बिके यथा—" अम्बेऽम्बिकेऽम्बालिके न मानयति कश्चन " । शख्ये ब्रह्म संशिते यथा—" परापत शख्ये ब्रह्म संशिते " । मरुतो अश्विना यथा—" इता मरुतो अश्विना " ।

यव्ये गव्ये यथा—" यव्ये गव्य एतदन्नमत्त देवाः "। द्यावापृथिवी उरो यथा—" द्यावापृथिवी उरो अन्तरीक्ष "। अग्ना३इ पत्नीवन्यथा— " अग्ना३इ पत्नीवन् सजूः "। लाजी३न् शाची३न् यथा—" भूर्भुवः स्वर्लाजी३ञ्छाची३न् "। मीढुष्टम शिवतम यथा—" मीढुष्टम शिवतम शिवो नः " सहस्राक्ष शतेषुधे यथा—" धनुष्ट्वं सहस्राक्ष शतेषुधे "। वसुपते वसुदावन् यथा—" मघवा वसुपते वसुदावन् "॥

( अ० भा० ) सुमङ्गळेत्यादीन्येकोनत्रिंशत्पदानि आमान्त्रितान्याद्युदात्तानि स्युः, नानुदात्तानि। पदपूर्वमामान्त्रितस्यापवादः। उदाहरणानि क्रमेण यथा— " सुश्लोक सुमङ्गल सत्यराजन् " " विकिरद्र " इत्यस्य पदादित्वादाद्युदात्तं सिद्ध-मेव विशेषणार्थं ग्रहणम्। द्वितीयस्य पदस्य एवम्। अन्यत्राप्येवंजातीयकोदाहरणेषु द्रष्टव्यम्। " विकिरिद्र विलोहित " " दरिद्र नीललोहित "। " प्रियङ्कर श्रेयस्कर भूयस्कर "। " अम्बे अम्बिके अम्बालिके " " शल्ये ब्रह्मसंशिते "। " इतो मरुता अश्विना "। " यव्ये गव्ये "। " द्यावापृथिवी उरो अन्तरिक्ष "। " अग्नाइ पत्नीवन् " इति माध्यान्दिनीयानामुदाहरणम्। अत्र काण्वानां " द्यावापृथिवी उर्वन्तरिक्ष "। " अग्ने वाक्पत्नी " इति पाठः। तत्रोरुशब्दस्य गुणाभावेऽपि सम्बोधनान्तत्वम्। तथा " अग्ने वाक्पत्नी " इत्यत्रापि। अत्र उभयसूत्रस्योपलक्षणत्वात्। आद्युदात्तत्वं यथा—" द्यावापृथिवी उर्वन्तरिक्ष "। " अग्ने वाक्पत्नी "। " भूर्भुवस्वर्लाजी३ञ्छाची३न् "। सम्बोधनमेतत्। " मीळ्हुष्टम शिवतम शिवो नः "। " त्वं सहस्राक्ष शतेषुधे "। " मघवा वसुपते वसुदावन् " इति॥

**इडोत्तराणि नव स्वानोत्तराणि षडग्न्युत्तराणि चत्वारि भगोत्त-राणि चेन्द्रोत्तरमेकं सिनीवाल्युत्तरं च प्रजापतये ब्रह्म-न्निति च ॥ २१ ॥**

( उ० भा० ) इडोत्तराणि नवामन्त्रितानि पदानि आद्युदात्तानि भवन्ति। यथा—इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते अदिति

सरस्वति, महि विश्रुति। स्वानोत्तराणि षडामन्त्रितानि पदान्याद्युदात्तानि भवन्ति। यथा—स्वान भ्राज अङ्घारे बम्भारे हस्त सुहस्त कृशानो। अग्न्युत्तराणि चत्वार्यामन्त्रितानि पदान्याद्युदात्तानि भवन्ति। यथा—अग्ने इन्द्र वरुण मित्र देवाः। भगोत्तराणि च। चशब्दाच्चत्वार्येवामन्त्रितानि आद्युदात्तानि भवन्ति। यथा—भग प्रणेतः भग सत्यराधः भग। इन्द्रोत्तरमेकं पदमाद्युदात्तं भवति। यथा—इन्द्र गोमन्। सिनीवाल्युत्तरं च। चशब्दादेकमेवामन्त्रितमाद्युदात्तं भवति। यथा—सिनीवालि पृथुष्टके। प्रजापतये ब्रह्मन्निति च। अत्र ब्रह्मन्नित्यामन्त्रितमाद्युदात्तं भवति। यथा—"प्रजापतये ब्रह्मन्नश्वम्"॥

(अ० भा०) इडोत्तराणि नवामन्त्रितपदानि। इडोत्तराणि इति माध्यन्दिनशाखाभिप्रायेणोक्तम् काण्वशाखिनाम् हव्योत्तराणि द्रष्टव्यम्, सूचकत्वेनोपलक्षणत्वात् सूत्रस्य। न वेति [संखण] शब्देन ज्ञापितत्वात्। तेन हव्योत्तराणि नवामन्त्रितपदानि, स्वानोत्तराणि षडामन्त्रितानि, अग्न्युत्तराणि चत्वारि, चशब्दात् भगोत्तराण्यपि चत्वारि, इन्द्रोत्तरमेकम्, सिनीवाल्युत्तरं चैकम्, प्रजापतये ब्रह्मन्निति चैकम्, एतानि सर्वाण्याद्युदात्तानि स्युः। यथाक्रमेणोदाहरणानि—इडे रन्ते हव्ये। काम्ये चन्द्रे ज्योते अदिते सरस्वति महि विश्रुतीति स्वान भ्राज अङ्घारे बम्भारे हस्त सुहस्त कृशानो इति। अग्ने इन्द्र वरुण मित्र देवाः। भग प्रणेतः भग सत्यराधः भग। एतानि माध्यन्दिनीयोदाहरणानि। इन्द्र गोमन्। सिनीवालि पृथुष्टके। प्रजापतये ब्रह्मन्। केचित् ब्रह्मन्नित्यत्र आद्युदात्तत्वं सूचितमिति वदन्ति। तन्न, नेदमामन्त्रितम् किन्तु सप्तम्यन्तम्। "नि शब्दो बहुळम्" इति तद्रूपसम्भवात्। ब्रह्मणः ब्रह्मविषये "ब्रह्मवर्चसी जायताम्" इत्यर्थसम्भवात्। "आ राष्ट्रे राजन्यः" इत्युत्तरवाक्याच्चेति ज्ञेयम्। हव्याद्यादिपदानि पादाद्यामान्त्रितत्वात् आद्युदात्तानि॥

भूतिराद्युदात्तम्॥ २२॥

(उ० भा०) अनुदात्ताधिकारो निवृत्तः। इत उत्तरमाद्युदात्ताधि-

**कारः प्रवृत्तः। भूतिरित्येतत्पदमाद्युदात्तं भवति। यथा—"भूत्यै जागरणम्"। "नमो भूत्यै येदम्"। भूतिरिति किम्? "भूतं च मे भविष्यच्च मे"॥**

(अ० भा०) अनुदात्ताधिकारो निवृत्तः। इत उत्तरमाद्युदात्ताधिकारः प्रस्तूयते। तत्र भूतिरिति पदं आद्युदात्तम्। यथा—"भूत्यै जागरणम्", "नमो भूत्यै"। भूतिः किम्? "भूतं च मे भविष्यच्च मे"॥

## कदा नरिष्येमपूर्वम्॥ २३॥

**(उ० भा०) कदेत्येतत्पदमाद्युदात्तं भवति, नरिष्येमपूर्वं चेद्भवति। यथा—"न रिष्येम कदाचन"। नरिष्येमपूर्वमिति किम्? "कदाचन स्तरीरसि"॥**

(अ० भा०) कदापदमाद्युदात्तं स्यात् नरिष्येमपूर्वं चेद्भवति। यथा—"न रिष्येम कदाचन"। नरिष्येमपूर्वमिति किम्? "कदाचन स्तरीरसि"॥

## आमन्त्रितं च॥ २४॥

**(उ० भा०) आमन्त्रितमाद्युदात्तं भवति। यस्यामन्त्रितस्याधस्तात् स्वरो न विहितः। कस्य चाधस्तात् स्वरो न विहितः? पदपूर्वं यन्न भवति। पादादौ वाक्यादौ वा यद्भवति तदाद्युदात्तं भवति। अपदपूर्वं भवति यथा—"अग्ने गृहपते"। वाक्यादौ भवति यथा—"अग्नयः सगराः"। "देवा आशापालाः"। पादादौ भवति यथा—"या वाङ्कशा मधुमत्यश्विना"। "विश्वेभिः सोम्यं मध्वग्ने"। सुमङ्गलादि तु निपातितमेव॥**

(अ० भा०) अपदपूर्वमामन्त्रितं पादादौ वाक्यादौ विद्यमानमाद्युदात्तं यत् पदपूर्वं न भवति। पादादौ वाक्यादौ विद्यमानं चेत् भवतीत्यर्थः। यथा—"अग्ने गृहपते"। अपदपूर्वस्योदाहरणमिदम्। वाक्यादौ यथा—

"अग्नयस्सगराः"। "देवा आशापालाः"। पादादौ यथा—"या वां कशा मधुमती"। "अश्विना सूनृतावति"। "अवतत्यधनुष्ट्वम्"। "सहस्राक्ष शतेषुधे"। "विश्वेभिः सोम्यम् मधु"। "अग्न इन्द्रेण वायुना"। सुश्लोकादिनिपातमेव ॥

**कृष्णो मृगसँयोगे ॥ २५ ॥**

**(उ० भा०) कृष्णशब्दो मृगवचन आद्युदात्तो भवति। यथा—"कृष्णोऽस्या खरेष्ठः"। "कृष्णो रात्र्या ऋक्षो जतूः"। मृगसंयोग इति किम्? "श्वा कृष्णः कर्णो गर्दभः"। अत्र कृष्णशब्दो वर्णवचनः वर्णविशेषाभिमतत्वात् ॥**

(अ० भा०) कृष्णशब्दः मृगवाच्याद्युदात्तं स्यात्। "कृष्णोऽस्या खरेष्ठः"। "कृष्णो रात्र्यै"। मृगसंयोग इति किम्? "श्वा कृष्णः कर्णो गर्दभः"। तथा—"कृष्णवारुणाः"। कृष्णशब्दोऽयं वर्णवाचि ॥

**व्ययवांश्चान्तः ॥ २६ ॥**

**(उ० भा०) अन्तःशब्दो द्विविधः व्ययवानव्ययवांश्च। यस्य विभक्त्यादिभिर्विकारो न क्रियते सोऽव्ययवान्। तथाचोक्तम्—**

**"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥"**

**इति। यस्य पुनर्विभक्त्यादिभिर्विकारः क्रियते स व्ययवान्। स चाद्युदात्तो भवति। यथा—"समुद्रश्च मध्यं चान्तश्च"। "इयं वेदिः परो अन्तः पृथिव्याः"। व्ययवानिति किम्? "अन्तर्यच्छ मघवन्"॥**

(अ० भा०) अन्तश्शब्दः द्विविधः व्ययवानव्ययवांश्चेति। यस्य विभक्त्यादिभिर्विकारः स व्ययवान् अनेवम्भूतः अव्ययवान्। उक्तं च—

"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥

इति । तत्र विकारवानाद्युदात्तः स्यात् । यथा—"समुद्रश्च मध्यं चान्तश्च परार्धश्च" । "इयं वेदिः परो अन्तः । पृथिव्या अयम्" । अयं अन्तश्शब्दोऽकारान्तः रामशब्दवत् । अन्तः-अन्तौ-अन्ताः । विकारवान् व्ययवानिति किम् । "अन्तर्यच्छ मघवन्" । "अप्स्वन्तरमृतम्" । "अन्तः प्रातरिति" अन्तः अव्ययवान् ॥

**परः प्रधाने ॥ २७ ॥**

**(उ० भा०) परशब्दः प्रधानवचनः अपरिमितवचन आद्युदात्तो भवति । यथा—"यस्मान्नजातः परो अन्यो अस्ति" । इयं वेदिः परः" । प्रधान इति किम्? "परो दिवा पर एना पृथिव्या" ॥**

(अ० भा०) प्रधानवचनः परशब्दः आद्युदात्तः स्यात् । यथा—"यस्मान्न जातः परो अन्यो अस्ति" । "इयं वेदिः परो अन्तः" । प्रधान इति किम्? "परो दिवा पर एना पृथिव्या" । अयं परशब्दः अन्यार्थः ॥

**मात्रा च परिमाणे ॥ २८ ॥**

**(उ० भा०) मात्राशब्दश्च परिमाणवचन आद्युदात्तो भवति । यथा—"कस्य मात्रा न विद्यते" । "गोस्तु मात्रा न विद्यते" । परिमाण इति किम्? "विभूर्मात्रा प्रभूः पित्रा" । अत्र मातृशब्दस्य सम्बन्धिवचनस्य तृतीयान्तस्यैतद्रूपं भवति । अतः परिमाणवाची न भवति ॥**

(अ० भा०) परिमाणवाची मात्राशब्दः आद्युदात्तः स्यात् । "कस्य

मात्रा न विद्यते"। "गोस्तु मात्रा न विद्यते"। परिमाण इति किम्? "विभूर्मात्रा प्रभूः पित्रा"। अयं मात्राशब्दस्तृतीयान्तः जनन्यर्थकः॥

दक्षिणा च ॥ २९ ॥

(उ० भा०) दक्षिणाशब्दश्चाद्युदात्तो भवति। यथा—"तस्य दक्षिणा अप्सरसः"। "दक्षिणा यज्ञः पुर एतु सोमः"॥

(अ० भा०) दक्षिणाशब्दोऽप्याद्युदात्तः स्यात्। अत्र स्त्रीत्वाद्यविवक्षितम्। तेन सर्वलिङ्गः सर्वप्रत्ययान्तश्च विवक्षित। यथा—"दक्षिणा यज्ञः"। "तस्य दक्षिणा अप्सरसस्तवानाम"। "दीक्षयाप्नोति दक्षिणाम्"। "सन्दक्षिणयोरुचक्षसा"। "द्यावापृथिव्योर्दक्षिणं पार्श्वम्"॥

न दश विश्वकर्म्मा निषद्येन्द्रस्य पातु सदः सद्भ्येषु॥ ३०।

(उ० भा०) दश, विश्वकर्मा, निषद्य, इन्द्रस्य, पातु, सदः, सद्भ्यः, एतेषु परभूतेषु दक्षिणाशब्द आद्युदात्तो न भवति। दश यथा—"दश दक्षिणा दश प्रतीचीः"। विश्वकर्मा यथा—"अयं दक्षिणा विश्वकर्मा"। निषद्य यथा—"आच्या जानु दक्षिणतो निषद्य"। इन्द्रस्य यथा—"पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये"। पातु यथा—"मनोजवास्त्वा पितृभिर्दक्षिणतः पातु"। सदः यथा—"यमनेत्रा दक्षिणासदः"। सद्भ्यः यथा—"यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्य"।

(अ० भा०) दशादिसप्तसु परेषु दक्षिणाशब्दः आद्युदात्तो न भवति। पूर्वापवादः। "प्राचीर्दश दक्षिणा दश"। "अयं दक्षिणा विश्वकर्मा"। "आच्या जानु दक्षिणतो निषद्य"। "पुत्रवती दक्षिणत इन्द्रस्य"। "पितृभिर्दक्षिणतः पातु"। "यमनेत्रा दक्षिणसदः"। "यमनेत्रेभ्यो देवेभ्यो दक्षिणसद्भ्यः"॥

**कर्णः स्वाङ्गे ॥ ३१ ॥**

(उ० भा०) कर्णशब्दः स्वाङ्गाभिधाय्याद्युदात्तो भवति। यथा— "भद्रं कर्णेभिः शृणुयाम देवाः"। "श्रोत्राभ्यां कर्णौ ते दनीमधरकण्ठेन"। स्वाङ्ग इति किम्? "श्वा कृष्णः कर्णो गर्दभः" ॥

(अ० भा०) स्वाङ्गवाची कर्णशब्दः आद्युदात्तः स्यात्। यथा— "भद्रं कर्णेभिः शृणुयाम देवाः"। "कर्णौतेदनीमधरकण्ठेन"। स्वाङ्ग इति किम्? "श्वा कृष्णः कर्णो गर्दभः"। अयं कर्णशब्दः न स्वाङ्गवचनः, किन्तु पशुजातिवाचकः ॥

**महो नपुंसके ॥ ३२ ॥**

(उ० भा०) महश्शब्दो नपुंसकाभिधाय्याद्युदात्तो भवति। यथा— "महस्थ महो वो भक्षीय"। नपुंसक इति किम्? "महो देवाय तदृतं सपर्यत"। "महो अग्नेः समिधानस्य शर्मणि" ॥

(अ० भा०) महश्शब्दः क्लीबवाची आद्युदात्तः स्यात्। "महस्थ महो वो भक्षीय"। नपुंसक इति किम्? "महो देवाय तदृतं सपर्यत"। "महो अग्नेस्समिधानस्य"। उत्सववाची अयं पुल्लिङ्गः ॥

**श्रवश्च ॥ ३३ ॥**

(उ० भा०) श्रवश्शब्दो नपुंसकवाच्याद्युदात्तो भवति। यथा— "अग्ने तव श्रवो वयः"। नपुंसक इति किम्? "श्रवश्च मे श्रुतिश्च मे" ॥

(अ० भा०) श्रवश्शब्दः नपुंसकलिङ्गः आद्युदात्तः स्यात्। यथा— "अग्ने तव श्रवः"। नपुंसक इति किम्? "श्रवश्च मे श्रुतिश्च मे" ॥

**अन्धो वीर्य्ये ॥ ३४ ॥**

(उ० भा०) अन्धशब्दो वीर्यवचन आद्युदात्तो भवति। यथा—

**"अन्धस्थान्धो वो भक्षीय"। वीर्ये इति किम्? "स्वप्नायान्ध-मधर्माय"। "अन्धन्तमः प्रविशन्ति"॥**

(अ० भा०) वीर्यवाच्यन्धशब्द आद्युदात्तः स्यात्। "अन्धस्थान्धो वो भक्षीय"। वीर्ये इति किम्? "अन्धं तमः प्रविशन्ति"। अयमन्धशब्दः निविडवाची, पूर्वस्तु वीर्यहेतुः अन्नवाची। "स्वप्नायान्धम्"। अयमन्धशब्दः नेत्रविकलवचनः॥

एता वर्णे॥ ३५॥

**(उ० भा०) एताशब्दो वर्णवचन आद्युदात्तो भवति। यथा— "एता ऐन्द्राग्नाः"। वर्ण इति किम्? "एता मे अग्न इष्टकाः"॥**

(अ० भा०) वर्णवाचि एताशब्दः आद्युदत्तः स्यात्। "एता चित्रवर्णा इत्यर्थः। "चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे" इत्यमरः। वर्ण इति किम्? "एता मे अग्न इष्टकाः"। अयमेताशब्दः पूर्वपरामर्शनार्थः॥

रोहितश्च केवलः॥ ३६॥

**(उ० भा०) रोहितशब्दश्च वर्णवचनः केवलः असमासस्थ आद्युदात्तो भवति। यथा—"रोहितो धूम्ररोहितः"। वर्णवाचीति किम्? "रोहित्कुण्डृणाची गोलत्तिका"। केवल इति किम्? "धूम्ररोहितः कर्कन्धुरोहितः"।**

(अ० भा०) असमासस्थो वर्णवाचि रोहितशब्दः आद्युदात्तः स्यात्। "रोहितो धूम्ररोहितः"। वर्णवाचीति किम्? "रोहित्कुण्डृणाची गोलत्तिका"। अयं रोहितशब्दः कुण्णमृगविशेषवाची। केवल इति किम्? "धूम्रश्चासौ रोहितश्च धूम्ररोहितः" इति समस्तोऽयम्॥

यन्त्रो राट् ॥ ३७ ॥

(उ० भा०) यन्त्रीशब्द आद्युदात्तो भवति, राट् परश्चेद्भवति। यथा—"यन्त्री राट्"। राट्पर इति किम्? "यन्त्र्यसि यमनी"॥

(अ० भा०) यन्त्रीशब्दः आद्युदात्तः स्यात् राट्शब्दे परे। यथा—"यन्त्री राट्"। राट्पर इति किम्? "यन्त्र्यसि यमनी"॥

ओषधीरनामन्त्रिते ॥ ३८ ॥

(उ० भा०) ओषधीशब्दोऽनामन्त्रितविषय आद्युदात्तो भवति। यथा—"या ओषधीः पूर्वा जाताः"। अनामन्त्रित इति किम्? "यस्यौषधीः प्रसर्पथ"॥

(अ० भा०) अनामन्त्रित ओषधीशब्द आद्युदात्तः स्यात्। यथा—"या ओषधीः पूर्वा जाताः"। अनामन्त्रित इति किम्? "यस्यौषधीः प्रसर्पथ"। हे ओषध्य इत्यर्थः॥

सर्वं विश्वं मानुषाशाः स्वाहा वाजः पयो नमः॥ ३९ ॥

(उ० भा०) सर्व, विश्व, मानुषा, आशाः, स्वाहा, वाजः, पयः, नमः एतानि पदान्याद्युदात्तानि भवन्ति। सर्वे यथा—"सर्वे निमेषा जज्ञिरे"। विश्व यथा—"यत्र विश्वं भवत्येकनीडम्"। मानुषा यथा—"दैव्यं मानुषा युगा"। आशा यथा—"विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः"। स्वाहा यथा—"हिङ्काराय स्वाहा"। वाजः यथा—"वाजश्च मे"। पयः यथा—"पयः पृथिव्याम्"। नमः यथा—"नमो हिरण्यबाहवे"॥

(अ० भा०) सर्वआदीन्याद्युदात्तानि स्युः। अविशेषात् सर्वलिङ्गानि गृह्यन्ते। क्रमेणोदाहरणानि—"सर्वे निमेषा जज्ञिरे"। "पुरुष एवेदं सर्वम्"। "विश्वे अद्य"। "यत्र विश्वम्"। "दैव्यं मानुषा युगा"।

"विश्वा आशाः प्रमुञ्चन् मानुषीभिर्यः"। "हिङ्काराय स्वाहा"। "हिङ्कृताय स्वाहा"। "वाजश्च मे"। "पयः पृथिव्याम्"। "नमोऽस्तु सर्पेभ्यो ये के च"। "नमो हिरण्यबाहवे"। "नमस्तुत्या च"। "तेभ्यो नमः"॥

**असि शिवा सुषदा पयस्वती यत्ते मधुमतीर्वर्चस्वानोजिष्ठो भ्राजिष्ठः शुष्मिणी भद्रवाच्याय वन्द्यो मेध्यो यमादित्यस्त्रितः सोमेन स्वसेत्येतेषु ॥ ४० ॥**

(उ० भा०) शिवा, सुषदा, पयस्वती, यत्ते, मधुमतीः, वर्चस्वान्, ओजिष्ठः, भ्राजिष्ठः, शुष्मिणी, भद्रवाच्याय, वन्द्यः, मेध्यः, यमः, आदित्यः, त्रितः, सोमेन, स्वसा। असीत्यधस्तादनुदात्त उक्तः स एतेषु परभूतेषु आद्युदात्तो भवति। शिवा यथा--"सूक्ष्मा चासि शिवा"। सुषदा यथा--"स्योना चासि सुषदा"। पयस्वती यथा--"ऊर्जस्वती चासि पयस्वती च"। यत्ते यथा--"योऽस्यां पृथिव्यामसि यत्ते"। मधुमतीर्यथा--"येषां भागोऽसि मधुमतीः"। वर्चस्वान्यथा--"त्वं देवेष्वसि वर्चस्वान्"। ओजिष्ठः यथा--"त्वं देवेष्वस्योजिष्ठः"। भ्राजिष्ठः यथा--"त्वं देवेष्वसि भ्राजिष्ठः"। शुष्मिणी यथा--"सुरा त्वमसि शुष्मिणी"। भद्रवाच्याय यथा--"होतरसि भद्रवाच्याय"। वन्द्यः यथा--"ईड्यश्चासि वन्द्यः"। मेध्यः यथा--"आशुश्चासि मेध्यश्च सप्ते"। यमः यथा--"असि यमः"। आदित्यः यथा--"अस्यादित्यो अर्वन्"। त्रितः यथा--"असि त्रितो गुह्येन"। सोमेन यथा--"असि सोमेन"। स्वसा यथा--"या देवानामसि स्वसा"॥

(अ० भा०) असीति सूत्रेणासिशब्दः पूर्वमनुदात्तोऽभिहितः, तस्यायमपवादः। असिशब्दः शिवादिसप्तदशसु परभूतेषु आद्युदात्तः स्यात्, यथाक्रमेणोदाहरणानि--"सूक्ष्मा चासि शिवा चासि"। "स्योना चासि सुषदा चासि"। "ऊर्जस्वती चासि पयस्वती च"। "योऽस्यां पृथिव्यामसि यत्ते"। "येषां भागोऽसि मधुमतीर्न इषस्कृधि"।

"त्वं देवेष्वसि। वर्चस्वानहम्"। "ओजस्वांस्त्वं देवेष्वसि। ओजस्वानहम्"। "भ्राजस्वांस्त्वं देवेष्वसि। भ्राजस्वानहम्"। "सुरा त्वमसि शुष्मिणी सोमः"। "होतरसि। भद्रवाच्याय प्रेषितः"। "ईड्यश्चासि वन्द्यश्च वाजिन्"। "आशुश्चासि मेध्यश्च सप्ते"। "असि यमो अस्यादित्यो अर्वन्"। "असि त्रितो गुह्येन"। "असि सोमेन समया"। "या देवानामसि स्वसा"। एतेष्वेव किम्? "गर्भो अस्योषधीनाम्"। "चिदसि तया"। "रयिमान् पुष्टिमानसि। शिवाः कृत्वा"॥

**धनदारत्नधाभ्यां च ॥ ४१ ॥**

**(उ० भा०) धनदारत्नधाभ्यां परोऽसिशब्द आद्युदात्तो भवति। धनदा यथा—"त्वं हि धनदा असि"। रत्नधा यथा—"त्वं हि रत्नधा असि"॥**

(अ० भा०) आभ्यां परोऽसिशब्द आद्युदात्तः स्यात्। "त्वं हि धनदा असि"। माध्यन्दिनीयानामुदाहरणमेतत्॥

**रायोऽपोषे ॥ ४२ ॥**

**(उ० भा०) राय इत्येतत्पदमपोषे परे चाद्युदात्तं भवति। यथा—"त्वे रायो मे रायः"। अपोष इति किम्? "मा वयं रायस्पोषेण वियोष्म"॥**

**(अ० भा०) राय इत्येतत् पदं आद्युदात्तं स्यात् पोषशब्दश्चेत् परो न भवति। "त्वे रायो अस्मे रायः"। रैशब्द इत्यनुक्त्वा राय इति प्रत्ययविशेषान्तस्य ग्रहणं किम्? "राया वयम्"। "रायेऽनु यं जज्ञतू रोदसि"। अपोष इति किम्? "मा वयं रायस्पोषेण"॥**

**न भागमीशिषयोः ॥ ४३ ॥**

(उ० भा०) राय इत्येतत्पदं भागमीशिषयोः परयोराद्युदात्तं न भवति। भागं यथा—"रायो भागम्" । ईशिषे यथा—"राय ईशिषे" ॥

(अ० भा०) राय इति पदं भागमीशिषयोः परतः आद्युदात्तो न स्यात्। पूर्वापवादः। "रायो भागं सहसावन्"। "त्वं साहस्रस्य राय ईशिषे" ॥

**त्रिधा बद्धहितयोः ॥ ४४ ॥**

(उ० भा०) त्रिधाशब्दो बद्धहितयोः परयोराद्युदात्तो भवति। बद्धो यथा—"त्रिधा बद्धो वृषभो रोरवीति"। हितं यथा—"त्रिधा हितं पणिभिर्गुह्यमानम्" ॥

(अ० भा०) त्रिधा बद्धहितयोः परतः आद्युदात्तः स्यात्। "त्रिधा बद्धो वृषभः"। "त्रिधा हितं पणिभिः"। एतयोः किम्? "त्रेधा निदधे पदम्" ॥

**सुकृतम्भूते ॥ ४५ ॥**

(उ० भा०) सुकृतशब्दो भूताभिधायी आद्युदात्तो भवति। यथा—"उरुः पृथुः सुकृतः कर्तृभिर्भूत्"। भूत इति किम्? "सूक्तं च मे सुकृतं च मे" ॥

(अ० भा०) सुकृतमित्येतत्पदमाद्युदात्तं स्यात्, यदि भूतवचनम्। यथा—"सुकृतः कर्तृभिर्भूत्"। सुकृतशब्दोऽयं भूताभिधायी। भूत इति किम्? "सूक्तं च मे सुकृतं च मे"। अयं न प्राणिवाचकः। किन्तु पुण्याभिधायकः ॥

**द्विरुदात्तानि ॥ ४६ ॥**

(उ० भा०) द्विरुदात्तं येषु तानि पदानि वक्ष्यन्त इति सूत्रशेषः। अधिकारसूत्रमेतत् ॥

(अ० भा०) द्विरुदात्तौ येषु पदेषु तानिपदानि द्विरुदात्तानि। वक्ष्यन्त इति सूत्रशेषः। अधिकारसूत्रमेतत् ॥

**बृहस्पतिर्वनस्पतिर्नराशंसस्तनूनप्त्रे तनूनपान्नक्तोषासोषासानक्ता द्यावापृथिवी द्यावाक्षामा क्रतूदक्षाभ्यामेतवा अन्वेतवा इति च ॥ ४७ ॥**

(उ० भा०) बृहस्पतिः, वनस्पतिः, नराशंसः तनूनप्त्रे, तनूनपात् नक्तोषासा, उषासा नक्ता, द्यावापृथिवी, द्यावाक्षामा, क्रतूदक्षाभ्याम्, एतवै, अन्वेतवै, एतानि पदानि द्विरुदात्तानि भवान्ति। अदेवताद्वन्द्वार्थे आरम्भः। प्रचुराण्येवोदाहरणानि ॥

(अ० भा०) बृहस्पतिरित्यादिद्वादशपदानि द्विरुदात्तानि स्युः। अविशेषात् सर्वविभक्त्यन्तानि। अदेवताद्वन्द्वार्थोऽयमारम्भः। क्रमेणोदाहरणानि—"प्राश्नामि बृहस्पतेर्मुखेन"। "इन्द्र आसां नेता बृहस्पतिः"। "वनस्पतिरवसृष्टो न पाशैः"। "नराशंसः प्रति"। "तनूनप्त्रे शाक्वराय"। "तनूनपात् प्रतियज्ञस्य धाम"। "तनूनपाच्छुचिव्रतः"। "नक्तोषासा समनसा"। "उषासानक्ता बृहती बृहन्तम्"। "वृक्ष आस यतो द्यावापृथिवी"। द्यावाक्षामा रुक्मः"। "क्रतूदक्षाभ्यां मे वर्चोदाः"। "कन्या इव वहतुमेतवा न"। न तनूनपात् पथे। तनूनपाच्छब्दः द्विरुदात्तः। स च पथशब्दे परे न द्विरुदात्तः स्यात्। यथा—"तनूनपातपथ ऋतस्य" ॥

देवताद्वन्द्वानि चानामन्त्रितानि ॥ ४८ ॥

(उ० भा०) देवताद्वन्द्वानि च द्विरुदात्तानि भवन्ति आमन्त्रितानि वर्जयित्वा। यथा—"अग्नीषोमाभ्यां जुष्टं गृण्हामि"। "मित्रावरुणाभ्यां त्वा"। देवताद्वन्द्वानीति किम्? "ऋक्सामयोः शिल्पे"। "दीक्षातपसोस्तनूरसि"। अनामन्त्रितानीति किम्? "तान्धेनुं मित्रावरुणा"। चशब्दादधस्तनसूत्रविहितान्यनामन्त्रितानि द्विरुदात्तानि भवन्ति आमन्त्रितानि त्वामान्त्रितस्वरं लभन्ते। यथा—"बृहस्पते अति यदर्यो अर्हात्"। "तनूनपात्पथऋतस्य यानान्"॥

(अ० भा०) देवताद्वन्द्वानि द्विरुदात्तानि स्युः आमन्त्रितं वर्जयित्वा। "अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि"। "मित्रावरुणाभ्यां त्वा देवा युवं गृण्हामि"। देवताद्वन्द्वानीति किम्? "ऋक्सामयोः शिल्पेस्थः"। नायं देवताद्वन्द्वः ऋक्सामशब्दयोर्वेदार्थकत्वात्। तथा—"दीक्षातपसोस्तनूरसि"। अनामन्त्रितानि किम्? "तां धेनुं मित्रावरुणा"। अधस्तनसूत्रविहितान्यप्यनामन्त्रितान्येव द्विरुक्तानीति द्रष्टव्यम्। यथा—"बृहस्पते अति तनूनपात्पथः"। एतद्द्वयमाद्युदात्तम्। "वनस्पतेऽव"। क्वचित्पुस्तके न तनूनपात् पथ इति सूत्रं नोपलभ्यते। तस्मिन् पक्षे आमन्त्रितत्वादेव "तनूनपात्पथ ऋतस्य" इत्यत्र द्विरुदात्ताभावः सिद्धः॥

इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पतो इति त्रीणि ॥ ४९ ॥

(उ० भा०) इन्द्राबृहस्पतिभ्यामिन्द्राबृहस्पती इत्येतयोः पदयोः त्रीण्यक्षराण्युदात्तानि भवन्ति। इन्द्राबृहस्पतिभ्यां यथा—"इन्द्राबृहस्पतिभ्यां त्वा देवाव्यं यज्ञस्य"। इन्द्राबृहस्पती यथा—"इन्द्राबृहस्पती ऊरुभ्याम्"॥

(अ० भा०) अनयोः त्रीण्यक्षराणि उदात्तानि स्युः। "इन्द्राबृहस्पतिभ्यां त्वा देवा युवं गृण्हामि"। "इन्द्राबृहस्पती ऊरुभ्याम्"॥

सर्वमग्ना३इ लाजी३ञ्छाची३निति त्रिमात्राणि च ॥ ५० ॥

(उ० भा०) अग्ना३इ लाजी३न् शाची३न् एतानि पदानि सर्वोदात्तानि भवन्ति त्रिमात्राणि च त्रीण्यक्षराण्येतेषु पदेषु भवन्ति, यथा—"अग्ना३इ"। इह आकारस्त्रिमात्रः। "लाजी३न्"। इहेकारः। "शाची३न्"। इहेकारः ॥

(अ० भा०) एतानि सर्वोदात्तानि स्युः। तेषु त्रीण्यक्षराणि त्रिमात्राणि च स्युः। यथा—"अग्ना३इ" इत्यत्र आकारः "लाजी३न् शाची३न्" इत्यत्र इकारश्च त्रिमात्रः, स चोदात्तः, तत्पूर्वोऽप्युदात्त इत्यर्थः ॥

प्रणवश्च ॥ ५१ ॥

(उ० भा०) प्रणवश्च सर्वोदात्तो भवति त्रिमात्रश्च। यथा—"ओ३म् खं ब्रह्म" ॥

(अ० भा०) प्रणवः सर्वोदात्तः स्यात्। त्रिमात्रश्च। "ओ३म् क्रतो स्मर" ॥

विवेशा३ इति चानुदात्तम् ॥ ५२ ॥

(उ० भा०) विवेशा३ इत्येतत्पदं सर्वानुदात्तं भवति अन्त्यमक्षरं चास्या त्रिमात्रं भवति। यथा—"तेषु विश्वं भुवनमाविवेशा३"। इहाकारस्त्रिमात्रः। अनुदात्तमिति किम्? "विश्वं भुवनमाविवेश" ॥

(अ० भा०) एतत्सर्वानुदात्तं तस्यान्त्याक्षरं त्रिमात्रं च स्यात्। "तेषु विश्वं भुवनमाविवेशा३"। अत्र अन्तिमसूत्रात् पूर्वमिति पदमपकृष्य विवेशेति पदस्य विशेषणं कार्यम्। तेन "केष्वन्तः पुरुष आविवेश" इत्यस्य च न त्रिमात्रत्वम्। तथा "अवराम् आविवेश" इत्यादेः केवलस्य प्रदेशान्तरस्यापि न त्रिमात्रत्वम्। अनुदात्तं किम्? "येषु विश्वं

भुवनमाविवेश"। अत्र यद्वृत्तयोगात् न सर्वानुदात्तत्वम्। न विधेयम्। "आख्यातमामन्त्रितवत्" इत्यनेनैव सिद्धम्। त्रिमात्रमेव विधेयम्॥

## आसीदिति चोत्तरं विचारे॥ ५३॥

(उ० भा०) आसीदित्येतत्पदं विचारे वर्त्तमानमुत्तरं सर्वानुदात्तं भवति। तस्य चान्त्यमक्षरं त्रिमात्रं भवति। यथा—"उपरि स्विदासी३त्"। इहेकारस्त्रिमात्रः। विचार इति किम्? "का स्विदासीत्"॥

(अ० भा०) विचारार्थकं आसीदिति पदं सर्वानुदात्तं त्रिमात्रं च स्यात्। "उपरि स्विदासी३त्"। उत्तरमिति किम्? पूर्वस्यानुदात्तत्वं मा भूदिति। तत्र विशेषमाह—

## पूर्वमन्तोदात्तम्॥ ५४॥

(उ० भा०) आसीदित्येतत्पदं पूर्वं विचारे वर्त्तमानमन्तोदात्तं भवति। त्रिमात्रं चास्यान्त्यमक्षरं भवति। यथा—"अधः स्विदासी३त्"। इहेकारस्त्रिमात्रः॥

(अ० भा०) असीदित्येतत्पदं विचारार्थकमपि अन्तोदात्तं त्रिमात्रं च स्यात्। "अधः स्विदासी३त्"। विचार इति किम्? "का स्विदासीत्पूर्वचित्तिः"। "किं स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित्कथासीत्"॥

## द्वन्द्वं चेन्द्रसोमपूर्वं पूषाग्निवायुषु॥ ५५॥

(उ० भा०) देवताद्वन्द्वं च इन्द्रासोमपूर्वं पूषाग्निवायुषु परभूतेष्वन्तोदात्तं भवति। द्विरुदात्तापवादः। इन्द्रपूर्वं यथा—"इन्द्रापूष्णोः प्रियमप्येति पाथः"। "इन्द्राग्न्योरुज्जितिमनूज्जेषम्"। "इन्द्रवायुभ्यान्त्वैष ते योनिः"। सोमपूर्वस्य यथासम्भवमुदाहरणम्। "द्याह्वोः सोमापौष्णः"॥

(अ० भा०) इन्द्रसोमपूर्वं देवताद्वन्द्वं अन्तोदात्तं स्यात् पूषाग्नि-वायुषु परतः। द्विरुदात्तापवादमेतत्। "इन्द्रापूष्णोः प्रियमप्येति पाथः"। "इन्द्राग्न्योरुज्जितिमनूज्जेषम्"। "इन्द्रवायुभ्यां त्वैष ते योनिः"। सोमपूर्वस्व यथा—"सोमापौष्णश्यामः"॥

अग्निश्चेन्द्रे ॥ ५६ ॥

(उ० भा०) अग्निपूर्वश्चेन्द्रोत्तरपदो देवताद्वन्द्वसमासोऽन्तोदात्तो भवति। यथा—"अग्नीन्द्राभ्यान्त्वैष ते योनिः"॥

(अ० भा०) इन्द्रोत्तरमग्निपूर्वं देवताद्वन्द्वं अन्तोदात्तं स्यात् इन्द्रशब्दे परे। "अग्नीन्द्राभ्यां त्वैषः"॥

ऋक्साम्नि च ॥ ५७ ॥

(उ० भा०) ऋक्पूर्वपदः सामशब्दोत्तरपदश्च द्वन्द्वसमासोऽन्तो-दात्तो भवति। यथा—"ऋक्सामभ्यां सन्तरन्तः"॥

(अ० भा०) ऋक्शब्दबूर्वं द्वन्द्वं तथा सामशब्दे परे। "ऋक्सा-मभ्यां सन्तरन्तः"। ऋक् च साम च॥

यतो गतौ ॥ ५८ ॥

(उ० भा०) यत इत्येतत्पदं गतौ वर्त्तमानमन्तोदात्तं भवति। यथा—"स्वर्यतो धिया दिवम्"। इण् गतावित्यस्यैतद्रूपम्। गताविति किम्? "यतो जातः प्रजापतिः"॥

(अ० भा०) गत्यर्थके यतश्शब्दः अन्तोदात्तः। "स्वर्यतो धिया दिवम्"। इण्गताविति धातो रूपमेतत्। गतौ किम्? "यतो जातः प्रजा-पतिः"। यच्छब्दोऽयम्॥

पायोर्विशः ॥ ५९ ॥

(उ० भा०) पायुशब्दात्परो विशःशब्दोऽन्तोदात्तो भवति। यथा—"पायुर्विशो अस्या अदब्धः" पायोरिति किम्? "इन्द्रं दैवीर्विशो मरुतः" ॥

(अ० भा०) पायुशब्दात्परः विशश्शब्दः अन्तोदात्तः स्यात्। "भव पायुर्विशो अस्या अदब्धः"। पायोः किम्? "इन्द्रं दैवीर्विशः" ॥

आयुरर्यमोर्वश्यस्तिभ्यः ॥ ६० ॥

(उ० भा०) आयुरित्येतत्पदं अर्यमा उर्वशी अस्तिशब्देभ्यः परमन्तोदात्तं भवति। अर्यमा यथा—"मा नो मित्रो वरुणो अर्यमायुः"। उर्वशी यथा—"उर्वश्यस्यायुरसि"। पदसंहितोदाहरणम्। अस्ति यथा—"अधस्म ते वृजनं कृष्णमस्ति। आयोष्ट्वा"। एतेभ्य इति किम्? "आयुश्च मे जरा च मे" ॥

(अ० भा०) अर्यमादिभ्यः परः आयुश्शब्दः अन्तोदात्तः। तद्यथा—"मा नो मित्रो वरुणो अर्यमायुरिन्द्रः"। "उर्वश्यायुः"। क्रमोदाहरणमेतत्। "वृजनं कृष्णमस्ति। आयोष्ट्वा"। अर्यमादिभ्यः किम्? "आयुश्च मे जरा च मे" ॥

अस्य रोचनासौ बोधा मे पारम्पुर एतारो दिवः कोऽहन्त्वम्महीं य ईश ईशानेभ्यः ॥ ६१ ॥

(उ० भा०) रोचना असौ बोधा मे पारं पुर एतारः दिवः कः अहं त्वं महीं यईशे ईशानम् एतेभ्यः परः अस्यशब्दोऽन्तोदात्तो भवति। रोचना यथा—"अन्तश्चरति रोचनास्य"। असौ यथा—"असावस्य पिता वयं स्याम"। बोधा मे यथा—"बोधा मे अस्य वचसो

यविष्ठ"। पारं यथा—"अगन्म तमसस्पारमस्य"। पुर एतारो यथा—"ये ब्रह्मणः पुर एतारो अस्य"। दिवः यथा—"एकेनाङ्गेन दिवो अस्य पृष्ठम्"। कः यथा—"को अस्य वेद भुवनस्य नाभिम्"। त्वं यथा—"ब्रह्मणस्पते त्वमस्य यन्ता"। महीं यथा—"इमां ते धियं प्रभरे महो महीमस्या"। य ईशे यथा—"य ईशे अस्य द्विपदः"। ईशानं यथा—"ईशानमस्य जगतः"॥

(अ० भा०) रोचनादिद्वादशशब्देभ्यः परः अस्यशब्दः अन्तोदात्तः स्यात्। क्रमेणोदाहरणानि—"अन्तश्चरति रोचनास्य"। "असावस्य पिता"। परेषामिदम्। "बोधा मे अस्य वचसः"। "अगन्म तमसस्पारमस्य"। "ये ब्रह्मणः पुर एतारो अस्य" "एकेनाङ्गेन दिवो अस्य पृष्ठम्"। "को अस्य वेद"। "वेदाहमस्य"। "ब्रह्मणस्पते त्वमस्य यन्ता" "प्रभरे महो महीमस्यस्तोत्रे"। "य ईशे अस्य द्विपदः"। "ईशानमस्य जगतः"॥

प्रत्नां यज्ञस्य हविषः पाहीत्पातं मध्वो यजमानस्य होतुरजरासो लोकेषु च ॥ ६२ ॥

(उ० भा०) प्रत्नां यज्ञस्य हविषः पाहि इत् पातं मध्वः यजमानस्य होतुः अजरासः लोकः इत्येतेषु च परेषु अस्यशब्दोऽन्तोदात्तो भवति। प्रत्नां यथा—"अस्य प्रत्नामनुद्युतम्"। यज्ञस्य यथा—"आस्य यज्ञस्योदृचः"। हविषः यथा—"अस्य हविषस्तमना यज।" पाहि यथा—"शश्वत्तम सुमना अस्य पाहि"। इत् यथा—"अस्येदिन्द्रो वावृधे"। पातं यथा—"अस्य पातन्धियेषिता"। मध्वः यथा—"अस्य मध्वः पिबत"। यजमानस्य यथा—"अस्य यजमानस्य वीरो जायताम्"। होतुर्यथा—"अस्य होतुः प्रदिश्यृतस्य वाचि"। अजरासो यथा—"अस्याजरासो दमाम्"। लोकः यथा—"अस्य लोकः सुतावतः"॥

(अ० भा०) पाहि इत् पातमिति पदविच्छेदः। अन्यत् स्पष्टम्। अस्यशब्दः प्रत्नामित्येकादशसु परेषु अन्तोदात्तः स्यात्। यथा—"अस्य प्रत्नाम्"। "आस्य यज्ञस्य"। "अस्य हविषस्त्मना यज"। "शश्वत्तमं सुमना अस्य पाहि"। "अस्येदिन्द्रा वावृधे"। एतद्वयं माध्यन्दिनोदाहरणम्। "अस्य पातं धियेषिता"। "अस्य मध्वः पिबत मादयध्वम्"। "अस्य यजमानस्य"। "अस्य होतुः प्रदिशि"। "अस्याजरासः"। "अस्य लोकस्सुतावतः"॥

## अनुदात्तमन्यत् ॥ ६३ ॥

(उ० भा०) अस्येत्येतत्पदमुक्तादन्यदनुदात्तं भवति। यथा—"षडस्य विष्ठाः शतम्"। "अद्या तमस्य"। "पूर्ववाननुदेशः" इत्येतस्यैवायं प्रपञ्चः॥

(अ० भा०) उदात्तादन्यत् अस्येति पदं सर्वानुदात्तं स्यात्। नियमोऽयम्। "षडस्य वष्ठिः"। "निहिता गुहास्य"॥

## पक्तीर्हसयोरन्त उदात्तं आदिर्वा ॥ ६४ ॥

(उ० भा०) पक्तीःशब्दस्य हसशब्दस्य चान्त उदात्तो भवति आदिर्वा उदात्तो भवति। स्वरविकल्पः। पक्तीर्यथा—"पचन् पक्तीः"। हसः यथा—"पूंश्चलूं हसाय॥

(अ० भा०) पक्तीहसशब्दयोः अन्त आदिर्वा उदात्तः स्यात्। वाशब्दात् उभयस्वरोऽपि प्रामाणिक इत्यर्थः। यथा—"पचन् पक्तीः"। "पुंश्चलूं हसाय"। आद्युदात्तोदाहरणमेतत्। अन्तोदात्तो यथा—"पचन् पक्तीः"। पुंश्चलूं हसाय"॥

वृद्धं वृद्धिः ॥ ६५ ॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे

द्वितीयोऽध्यायः ॥

(उ० भा०) इत्युक्तार्थम् ॥

इत्यानन्दपुरवास्तव्यवज्रटसुतोव्वटकृतौ
प्रातिशाख्यभाष्ये द्वितीयोऽध्यायः ॥

(अ० भा०) निगदार्थमेतत् ॥

श्रीमत्प्रथमशाखिना नागदेवात्मजेन अनन्तभट्टेन

विरचिते कात्यायनप्रणीतप्रातिशाख्यसूत्रभाष्ये

द्वितीयोऽध्यायः समाप्तः ॥

---

# अथ तृतीयोऽध्यायः ।

(उव्वटभाष्यम्)

"स्वरसंस्कारयोः छन्दसि नियमः" इति प्रतिज्ञातम्, तत्र प्रथमाध्याये स्वरसंस्कारयोरेवाङ्गभूताः संज्ञाः परिभाषा उक्ताः द्वितीये स्वरः। अधुना क्रमप्राप्तः संस्कारोऽभिधीयते लोपा-गम-वर्णविकार-प्रकृतिभावलक्षणः ॥

## सँहितायाम् ॥ १ ॥

इत्ययमधिकारः आसप्तमाध्यायपरिसमाप्तेः। यदित ऊर्ध्वमनुक्रमिष्यामः संहितायामित्येवं तद्वेदितव्यम्। वक्ष्यति च—"उदः स्तभाने लोपम्"। "उत्तभान तेजसा दिश उद्दँह" ॥

(अनन्तभट्टभाष्यम्)

स्वरसंस्कारयोरिति पूर्वं प्रतिज्ञातम्। अस्मिन् तृतीयाध्याये संस्करोऽभिधीयते। स च लोपागमवर्णविकारप्रकृतिभावरूपः। यदित ऊर्द्धमनुक्रमिष्यामः आसप्तमाध्यायान्तम् तत्र संहितायामित्यधिकृतो वेदितव्यः ॥

## अर्थः पदम् ॥ २ ॥

(उ० भा०) संहितालक्षणमुक्तं—"वर्णानामेकप्राणयोगः सँहिता" इति। अधुना पदलक्षणमुच्यते। अर्थाभिधायि पदम् पद्यते गम्यते ज्ञायतेऽर्थोऽनेनेति पदम्। यद्येवं निपातस्यानर्थकस्य पदसंज्ञा न प्राप्नोति। नैष दोषः उपरिष्टादर्थभेदनिबन्धनं पदचतुष्टयं वक्ष्यति—"नामाख्यातोपसर्गनिपाताश्च" इति। तत्रास्य पदसंज्ञा भविष्यति। यथा—

"क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्त्वाभिधायकं नाम निपातः पादपूरणः ॥" (८–५०)

इति । सूत्रकारस्य त्वयमभिप्रायः—पदप्रतिरूपकस्य पदावयवस्य पदसंज्ञा मा भूदिति । अतोऽर्थग्रहणम् । इहैव पदसंज्ञा यथा स्यात्—"गोव्यच्छमन्तकाय गोघातम्" । इह मा भूत्—"गोधूमाश्च मे" ॥

(अ० भा०) पूर्वं संहितालक्षणमुक्तम्—वर्णानामेकप्राणयोगः संहितेति । अधुना पदलक्षणमुच्यते—अर्थः पदमिति । अर्थ्यन्तेऽभिधीयन्तेऽनेनेति अर्थः शब्दविशेषः इत्यर्थः । अर्थाभिधायकं यच्छब्दरूपं तत्पदं स्यात् । यद्येवं तर्हि निपातस्यानर्थकत्वात् पदसंज्ञा न प्राप्नोतीति चेत् । नैष दोषः । उपरिष्टादर्थभेदेन पदचतुष्टयं वक्ष्यति । तद्यथा—

" क्रियावाचकमाख्यातमुपसर्गो विशेषकृत् ।
सत्वाभिधायकं नाम निपातः पादपूरणः ॥ "

इति । तस्मिन्निपातस्यापि पादपूरणार्थत्वेनार्थत्वात् अर्थः पदमिति साधूक्तमिति । अर्थग्रहणेन पदावयवस्य गोशब्दस्य गोत्वरूपार्थाभावान्न पदत्वमिति ध्येयम् ।

संज्ञाप्रयोजनमाह—

## पदान्तपदाद्योः सन्धिः ॥ ३ ॥

(उ० भा०) यः कश्चिद् वैदिकशास्त्रसन्धिरुच्यते स पदान्तपदाद्योर्वेदितव्य इति । ते सन्धयश्चत्वारो भवन्ति—स्वरयोः, व्यञ्जनयोः, स्वरव्यञ्जनयोश्च । स्वरव्यञ्जनयोस्तु द्विप्रकारः—पूर्वः स्वरो भवति पश्चाद् व्यञ्जनानि, व्यञ्जनानि वा पूर्वाणि भवन्ति पश्चात् स्वर इति । स्वरयोर्भवति यथा—आ इदम् > "एदम्" । वरुण इह > "वरुणेह" । व्यञ्जनयोर्भवति यथा—सम् यौमि > "सँय्यौमि" । सम् वपामि > "सँव्वपामि" । स्वरपूर्वो भवति यथा—इषे त्वा > "इषे त्वा", ऊर्जे त्वा >

ऊर्जेत्त्वा"। व्यञ्जनपूर्वो भवति यथा—उत् एनम् > "उदेनम्"। परिभाषासूत्रमेतत् ॥

(अ० भा०) यः कश्चनेह सन्धिरभिधास्यते सः पदान्तपदाद्योर्वेदितव्यः। सन्धयश्चत्वारो भवन्ति–स्वरयोर्व्यञ्जनयोः स्वरव्यञ्जनयोः। स च स्वरव्यञ्जनयोः सन्धिर्द्वेधा—पूर्वः स्वरः पश्चाद्व्यञ्जनम्, पूर्वं व्यञ्जनं पश्चात् स्वरः इति। एवं चत्वारः सन्धयः। तत्र स्वरयोर्यथा—आ इदम् > "एदमगन्म"। त्वा ऊर्जे > "त्वोर्जे"। व्यञ्जनयोर्यथा—सम् यौमि > "सँय्यौमि"। सम् वपामि > "सँव्वपामि"। तं लोकम् > "तँल्लोकम्" इत्यादि। स्वरपूर्वो यथा—इषे त्वा > "इषे त्त्वा"। ऊर्जे त्वा > "ऊर्जे त्त्वा"। व्यञ्जनपूर्वो यथा—उत् एनम् > "उदेनम्"। परिभाषासूत्रमेतत् ॥

**न परकालः पूर्वकाले पुनः ॥ ४ ॥**

(उ० भा०) "ह्यन्तराः कालाः" इति वक्ष्यति। तत्र यः परकालः सन्धिः पूर्वकाले सन्धौ सति पुनः प्राप्तवन्न भावति, यथा—"आकारोपधो यकारम्" इति नकारस्याकारोपधस्य यकारो विहितः स्वरे प्रत्यये "महाँ इन्द्रः" इति। यथा "कण्ठ्यपूर्वो यकारमरिफितः" इति अवर्णपूर्वस्य विसर्जनीयस्य यकारो विहितः स्वरे प्रत्यये "या ओषधीः" इति। ततो हिशब्दात् परं लक्षणमुक्तम्—"यवयोः पदान्तयोः स्वरमध्ये लोपः"। ततो यलोपे कृते हिशब्दात् पूर्वं शास्त्रं पुनः प्रवर्तते "कण्ठ्यादिवर्ण एकारम्", "उवर्ण ओकारम्" इति। तत्प्रवर्तमानं निषिध्यत इति सूत्रार्थः ॥

(अ० भा०) "ह्यन्तराः कालाः" इति वक्ष्यति। तत्र यः परकालसन्धिः पूर्वकालसन्धौ प्राप्तवन्न भवति। असिद्धो भवतीत्यर्थः। यथा—"आकारोपधो यकारम्" इति, "कण्ठ्यपूर्वो यकारमरिफितः" इति च सूत्रेण आकारोपधस्य नकारस्य अकारोपधस्य विसर्जनीयस्य च यकारो विहितः स्वरे परे। "महाँ इन्द्रः" इति, "या ओषधीः" इति। ततो हिशब्दात्परं

लक्षणमुक्तम् । "यवयोः पदान्तयोः स्वरमध्ये लोपः" इति । अनेन सूत्रेण यलोपे कृते हिशब्दात् पूर्वशास्त्रं तत्र पुनः प्रवर्तते । "कण्ठ्यादिवर्ण एकारम्", "सन्ध्यक्षर एकारौकारौ" इति । तत्प्रवर्तमानं तत्र निषिध्यते इति तात्पर्यार्थः ॥

अवधिसूत्रमाह—

**ह्यन्तराः कालाः ॥ ५ ॥**

**(उ० भा०) कालाधिकारः हिः अन्तरा येषां सन्धिकालानां ते ह्यन्तराः कालाः । कालशब्दः स्थानपर्यायः । उक्तमुदाहरणम् ॥**

(अ० भा०) हिशब्द उत्तरः येषां सन्धिकालानां ते ह्यन्तराः कालाः । कालशब्दोऽत्र स्थानपर्यायः । उदाहरणमुक्तमेव ॥

**विसर्जनीयः ॥ ६ ॥**

**(उ० भा०) विसर्जनीयसन्धिरधिकृत इति सूत्रार्थः ॥**

(अ० भा०) अतः परं यद्विधीयते तत् विसर्जनीयस्य भवतीत्यर्थः । अधिकारोऽयम् ॥

**चछयोः शम् ॥ ७ ॥**

**(उ० भा०) चकारछकारयोः प्रत्यययोर्विसर्जनीयः शकारमापद्यते । चकारे यथा—वाजः च मे > "वाजश्च मे" । छे यथा—अस्रीवयः छन्दः > "अस्रीवयश्छन्दः" ॥**

(अ० भा०) चकारछकारयोः परयोर्विसर्जनीयः शकारमापद्यते । यथा—वाजः च > "वाजश्च मे" । अस्रीवयः छन्दः > "अस्रीवयश्छन्दः" इत्यादि ॥

तथयोः सम् ॥ ८ ॥

(उ० भा०) तकारथकारयोः प्रत्यययोर्विसर्जनीयः सकारमापद्यते। तकारे यथा—आखुः ते पशुः > "आखुस्ते पशुः"। नमः ते रुद्र > "नमस्ते रुद्र"। विसर्जनीयथकारसन्धिस्तु संहितायां न विद्यते, अतो रूपोदाहरणं दीयते—कः थकारः > कस्थकारः ॥

(अ० भा०) विसर्जनीयः तकारथकारयोः परयोः सत्वमापद्यते। अन्तः ते > "अन्तस्ते"। थकारपरो विसर्जनीयः संहितायां नोपलभ्यते। अतः लौकिकोदाहरणं दीयते। कः थकारः > कस्थकारः ॥

प्रत्ययसवर्णं मुदि शाकटायनः ॥ ९ ॥

(उ० भा०) शषसा मुत्संज्ञा उक्ताः,। मुत्संज्ञकेषु परभूतेषु विसर्जनीयः परसवर्णमापद्यते शाकटायनस्याचार्यस्य मतेन। यथा—आशुः शिशानः > "आशुश्शिशानः"। अदितिः षोडशाक्षरेण > "अदितिष्षोडशाक्षरेण"। देवो वः सविता = "देवो वस्सविता" ॥

(अ० भा०) प्रत्ययशब्दोऽत्र परवचनः। आशुः शिशानः > "आशुश्शिशानः"। अदितिः षोळशाक्षरेण > "अदितिष्षोळशाक्षरेण"। वः सविता > "देवो वस्सविता"। ताः सर्वाः > "तास्सर्वास्संविदानाय"। शाकटायनग्रहणं विकल्पमेव स्पष्टयति ॥

अविकारँ शाकल्यः शषसेषु ॥ १० ॥

(उ० भा०) विसर्जनीयस्य विकारं न मन्यते शाकल्यः शषसेषु परभूतेषु। यथा—आशुः शिशानः > "आशुः शिशानः"। अदितिः षोडशाक्षरेण > "अदितिः षोडशाक्षरेण"। देवो वः सविता > "देवो वः सविता" ॥

(अ० भा०) शाकल्याचार्यस्तु विसर्जनीयस्य शषसेषु परेषु अविकारं मन्यते। विसर्जनीयस्य विसर्जनीयो भवति नान्योऽर्थः। यथा—"आशुः शिशानः" इत्यादि॥ अत्र यथासम्प्रदायं पाठव्यवस्थेयम्॥

**प्रकृत्या करवयोः पफयोश्च ॥ ११ ॥**

**(उ० भा०) प्रकृत्या विसर्जनीयं मन्यते करवयोः पफयोश्च प्रत्यययोः शाकल्यः। करवयोर्भवति यथा—विष्णोः क्रमः > "विष्णोः क्रमः"। ततः खनेम > "ततः खनेम"। पफयोर्भवति यथा—देव सवितः प्रसुव > "देव सवितः प्रसुव"। याः फलिनीः > "याः फलिनीर्या अफलाः"। करवयोः पफयोश्चेति पृथक्समासकरणमुत्तरार्थम्॥**

(अ० भा०) कादिषु चतुर्षु परेषु विसर्जनीयः प्रकृत्या तिष्ठतीति शाकल्यो मन्यते। यथा—"विष्णोः क्रमः"। "ततः खनेम"। "देवसवितः प्रसुव"। "याः फलिनीः"॥

करवयोः पफयोरिति पृथक् योगकरणं उत्तरसूत्रार्थम्, यत एवं शाकटायनो विशेषमाह—

**जिह्वामूलीयोपध्मानीयौ शाकटायनः ॥ १२ ॥**

**(उ० भा०) जिह्वामूलीयोपध्मानीयौ विसर्जनीय आपद्यते यथासंख्यम्। करवयोर्जिह्वामूलीयमापद्यते पफयोस्तूपध्मानीयं शाकटायनस्याचार्यस्य मतेन। करवयोर्यथा—विष्णोः क्रमः > "विष्णो× क्रमः"। ततः खनेम > "तत× खनेम"। पफयोर्यथा—वसोः पवित्रम् > "वसो≍पवित्रम्"। याः फलिनीः > "या≍फलिनीर्या अफलाः"॥**

(अ० भा०) करवयोः पफयोश्च परतः विसर्जनीयः क्रमेण जिह्वामूलीयोपध्मानीयावापद्यते इति शाकटायनाचार्यो मन्यते। यथा—"विष्णो≍ क्रमोऽसि"। "तत≍खनेम"। "वसो≍ पवित्रमसि"। "या≍ फलिनीः"॥

लुङ्मुदि जित्परे ॥ १३ ॥

(उ० भा०) मुत्संज्ञकाः शषसाः, जित्संज्ञका द्वौ द्वौ प्रथमौ। तत्र शषसेषु "प्रत्ययसवर्णे" इति विसर्जनीयसन्धिरुक्तः। अतः इह दशैव जित्संज्ञका गृह्यन्ते। लुक् लुप्यते विसर्जनीयो मुत्संज्ञके जित्परे परतः। यथा—अन्धः स्थ > "अन्धस्थान्धो वो भक्षीय" स्थालीभिः स्थालीः > "स्थालीभिस्स्थालीराप्नोति"। मुदि जित्पर इति किम्? स्वस्ति नः तार्क्ष्यः > "स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति"॥

(अ० भा०) द्वौ द्वौ वर्गप्रथमौ जिदित्युक्तम्। जित्परो यस्येति विग्रहः। मुच्चेति शषसा मुत्संज्ञा उक्ताः। जित्परे मुदि विसर्जनीयो लुप्यते। यथा—अन्धः स्थ > "अन्धस्थ"। स्थालीभिः स्थालीः > "स्थालीभिस्थालीः"। मुदिति किम्? स्वस्ति नः तार्क्ष्यः > "स्वस्ति नस्तार्क्ष्यः"। जित्पर इति किम्? अरिष्टनेमिः स्वस्ति नः > "अरिष्टनेमिः स्वस्ति नः"॥

उपवसने पीवः ॥ १४ ॥

(उ० भा०) उपवसने प्रत्यये पीवशब्दसम्बन्धी विसर्जनीयो लुप्यते। यथा—पीवः उपवसनानाम् > "पीवोपवसनानाम्"॥

(अ० भा०) पीव इत्यस्य विसर्जनीयो लुप्यते उपवसनशब्दे परे। पीवः उपवसनानाम् > "पीवोपवसनानाम्"। उपवसने किम्? "पीवो अन्नान्"॥

स ओषधीमयोः ॥ १५ ॥

(उ० भा०) सपदसम्बन्धी विसर्जनीयो लुप्यते ओषधीमयोः प्रत्यययोः। ओषधी यथा—सः ओषधीः > "सौषधीरनुरुध्यसे"। इम यथा—सः इमाम् > "सेमान्नो हव्यदातिं जुषाणः"॥

(अ० भा०) स इत्यस्य पदस्य विसर्जनीयो लुप्यते ओषधीमशब्दयोः परयोः। यथा—सः ओषधीः > "सौषधीरनुरुध्यसे"। सः इमाम् > सेमान्नो हव्यदार्ति जुषाणः"। माध्यन्दिनानामुदाहरणम्। अत्र "कण्ठ्य-पूर्वो यकारमरिफितः" इति यकारे कृते "यत्रयोः पदान्तयोः स्वरमध्ये लोपः" इति लोपे यद्यपि रूपं सिध्यति तथापि "न परकालः पूर्वकाले पुनः" इति सिद्धिनिषेधात् प्रतिप्रसवार्थमिदं सूत्रमिति ज्ञेयम्॥

**व्यञ्जने च॥ १६॥**

**(उ० भा०) व्यञ्जने च प्रत्यये सपदसम्बन्धी विसर्जनीयो लुप्यते। यथा—सः नः > "स नो बोधि श्रुधी हवम्"। "स जायसे मथ्य-मानः"। व्यञ्जन इति किम्? सः अग्निः > "सो अग्निर्यो वसुगृणे"॥**

(अ० भा०) सः इत्यस्य पदस्य विसर्जनीयो लुप्यते व्यञ्जने परे। सः नः > "स नो बोधि"। सः जायसे > "स जायसे"। व्यञ्जन इति किम्? "सो अग्निः"॥

**स्य एष च॥ १७॥**

**(उ० भा०) स्यएषपदयोः सम्बन्धी विसर्जनीयो लुप्यते व्यञ्ज-नमात्रे। यथा—स्यः रात्थ्यः > "एष स्य रात्थ्यो वृषा"। स्यः वाजी > "एष स्य वाजी क्षिपणिम्"। एषः छागः > "एष च्छागः पुरो अश्वेन"॥**

(अ० भा०) अनयोर्विसर्जनीयः लुप्यते व्यञ्जने परे। यथा—स्यः राथ्यः > "स्य राथ्यः"। एष स्यः > "एष स्यः"। एषः ते > "एष ते"। एषः छागः > "एष च्छागः"॥

**निशब्दो बहुलम्॥ १८॥**

**(उ० भा०) निशब्दः पदान्तीयो लुप्यते बहुलम्। भृङ्गा >**

शृङ्गाणि इति प्राप्ते यथा—"चत्वारि शृङ्गा त्रयो अस्य पादाः"। पदा > पदानि इति प्राप्ते यथा—"त्रीणि पदा विचक्रमे"। बहुलग्रहणात् क्वचिन्न च लोपो भवति। यथा –एता ते अघ्न्ये नामानि"। क्वचित् इकारमात्रस्य भवति। एमन् > एमनि इति प्राप्ते यथा—"एमन्त्सादयामि"। क्वचिन्नकारमात्रस्य भवति। इष्कर्त्तारम् > निष्कर्त्तारम् इति प्राप्ते यथा—इष्कर्त्तारमध्वरस्य"। इत्थम्भूतपदाद्यन्तप्रज्ञप्त्यर्थं बहुलग्रहणम् ॥

(अ० भा०) पदावयवो निशब्दः बहुळं लुप्यते। यथा—चत्वारि शृंगाणीति प्राप्ते "चत्वारि शृङ्गा त्रयो अस्य पादाः।" बहुळोक्त्या क्वचिन्न लुप्यते। यथा—"एता ते अघ्न्ये नामानि देवेषु"। "त्रीणि पदानि"। क्वचिदिकारमात्रस्य भवति बहुळोक्तेरेव। यथा—एमनीति प्राप्ते, "एमन्त्सादयामि"। "ओद्मन्त्सादयामि"। "भस्मन्त्सादयामि"। क्वचिन्नकारमात्रस्य भवति बहुळोक्तेरेव। यथा—निष्कर्तारमध्वरस्येति प्राप्ते "इष्कर्तारमध्वरस्य"।

"क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुळकं वदन्ति" ॥

इति व्याकरणशास्त्रे बहुळशब्दस्यैवं निर्वचनात् ॥

अनितावध्याये ॥ १९ ॥

(उ० भा०) अस्मिन्नध्यायशेषे येऽन्तःपद आगमा विकाराश्च वक्ष्यन्ते ते अनितौ इतिकरणे परत्रावस्थिते न भवन्तीति सूत्रार्थः। यथा—"श्रेयस्कर—श्रेयःकरेति"। "चक्षुष्पाः—चक्षुःपा इति"। "स्वर्षाम्—स्वः साम् इति"। "धूर्षाहौ—धूः सहौ इति"। "दूडभः—दुर्दभ इति"। "वनषदः—वनसद इति"। "अवरःपराय—अवरपराय

इति"। "दुदुक्षन्–दुधुक्षन् इति"। "सुषाव–सुसाव इति"। पुरीष-वाहणः–पुरीषवाहन इति"। "मामहानः–ममहान इति"। "वृष्टिमाँ इव—वृष्टिमानिव इति"। अध्यायशेष इति किम्? "तवस्तू-तरमिति तवः–तरम्"। अत्रेतिकरणे परत्रावस्थितेऽपि सकारो विग्रत एव, अस्या-वधेः प्राग्भूतत्वात् ॥

(अ० भा०) अत्राध्यायेऽन्तःपदे आगमा विकाराश्च वक्ष्यन्ते ते सर्वे इति शब्दे परभूते सति न स्युः। नियमसूत्रमेतत्। यथा—"श्रेयःकर"। "चक्षुःपाः"। "सुसाव"। "वनसदः"। "सुचन्द्र"। "दुधुक्षन्"। "पुरीषवाहनः"। "वृष्टिमानिव"। इत्यादि। अनिताविति किम्? "श्रेयस्कर" इति। "चक्षुष्पा" इति। "स्वर्षाम्" इति। अध्याय-शेषे किम्? अध्यायादावुक्तस्य माभूदिति निषेधः। यथा—"तवस्तरम्" इति। अत्र "तथयोः सम्" इति सः। सचाध्यायादावुक्तः ॥

इतिवच्चर्चायाम् ॥ २० ॥

(उ० भा०) इतिकरणाम् पुरतो यत्पुनः पदवचनं तत् चर्चा-शब्देनोच्यते। तत्रेतिवत् इताविव। यथा इतिकरणे परत्रावस्थिते आगमा विकाराश्च न भवन्ति एवमिहापि न भवन्ति। यथा—"श्रेयः कर," "चक्षुः पाः," "स्वः साम्," "धूः सद्वौ," "दुः दभ,:" "वन सदः," "अवरः पराय," "सु चन्द्र," "दधुक्षन्," "सुसाव," "पुरीषवाहनः," "ममहानः," "वृष्टिमान् इव"। एवं ह्याहु :—

"लोपागमविकारांश्च नैवेतिकरणे स्मृताः।
अवग्रहस्तु चर्चायामितिना चोपदिश्यते ॥" इति ॥

(अ० भा०) इतिशब्दात् परं पदं चर्चासंज्ञं स्यात्। तस्मिन् पदे इतिवत्। इतिशब्दे परे यथा पूर्वस्य विकारादिर्न भावति तथा चर्चायामपीत्यर्थः। "श्रेयः कर"। "भूयः कर"। "चक्षुः पा" इत्यादि। उक्तं च।

"लोपागमविकारा स्युर्नैवेतिकरणे यथा ।
अवग्रहस्तु चर्चायामितिना चोपदिश्यते" ॥

इति । अस्यार्थः—इतिशब्दे परे यथा लोपागमादिविकारा न भवन्ति तथा चर्चासंज्ञायामपि न भवन्तीत्युपदिश्यते । अवग्रहस्तु भवत्येव ॥

**ककारपकारयोः सकारम् ॥ २१ ॥**

**(उ० भा०) विसर्जनीयोऽधिकृतः । स यथादिष्टं ककारपकारयोः प्रत्यययोः सकारमापद्यते । यद्यप्यत्राविशेषेण सकार उक्तः, तथापि कण्ठ्यपूर्वस्यैव सकारः, अकण्ठ्यपूर्वस्य तु षकारोऽभिप्रेतः यतः "कृषीश्च कृधौ सकारम्" इति कण्ठ्यपूर्वस्य सकारं विदधाति । अतोऽकण्ठ्यपूर्वस्य षकारो भवतीति निश्चीयते ॥**

(अ० भा०) विसर्जनीय इत्यनुवर्त्तते । ककारपकारयोः परतः विसर्जनीयः सकारमापद्यते । यद्यप्यत्राविशेषेण सकार उक्तः तथापि कण्ठ्यपूर्वस्यैव विसर्जनीयस्य सः । अकण्ठ्यपूर्वस्य तु षकारः अभिधास्यत इति विशेषो ज्ञेयः । "कृषीश्च कृधौ०" इत्यादौ तु वचनात्सकार इति न कश्चिद्दोषः । उदाहरणमुपरिष्टाद्वक्ष्यति । अधिकारोऽयम् ॥

**भाव्युपधः षकारम् ॥ २२ ॥**

**(उ० भा०) "अकण्ठ्यो भावी" इत्युक्तम् । भाव्युपधो विसर्जनीयः षकारमापद्यते ककारपकारयोः प्रत्यययोः । कण्ठ्यपूर्वस्य तु सकार एव । एतयोरुदाहरणानि अग्रेतनसूत्रेषु द्रष्टव्यानि । अधिकारसूत्रमेतत् ॥**

(अ० भा०) भाविसंज्ञक उपधायां यस्य सः तथा । भाव्युत्तरो विसर्जनीयः षकारमापद्यते ककारपकारयोः परयोः । नियमोऽयम् ॥

आविर्निरिड इडाया वसतिर्वरिवः ॥ २३ ॥

(उ० भा०) आविः निः इडः इडायाः वसतिः वरिवः इति एतेषां विसर्जनीयः सकारं षकारं चापद्यते यथायोगं ककारपकारयोः प्रत्यययोः। आविः यथा—आविः कृणुष्व > "आविष्कृणुष्व"। निः यथा—"अम्ब निष्पर समरीर्विदाम्"। इडः यथा—"इडस्पदे समिध्यसे"। इडायाः यथा—"इडायास्पदमसि"। वसतिः यथा—"पूर्णे वो वसतिष्कृता"। वरिवः यथा—"अयं नो अग्निर्वरिवस्कृणोतु"॥

(अ० भा०) एतत्षट्कसम्बन्धी विसर्जनीयः सकारषकारावापद्यते ककारपकारयोः परयोः। क्रमेणोदाहरणानि—आविः कृणुष्व > "आविष्कृणुष्व दैव्यान्यग्ने"। निः पर "अम्ब निष्पर समरीविदाम्"। इळः पदे > "इडस्पदे"। इळायाः पदम् > "इळायास्पदमसि"। वसतिः कृता > "पूर्णे वो वसतिष्कृता"। वरिवः कृगोतु > "वरिवस्कृणोतु अयं मृधः"॥

दिवोऽककुत्पृथिव्योः ॥ २४ ॥

(उ० भा०) दिव इत्येतस्य सम्बन्धी विसर्जनीयः सकारमापद्यते ककुत्पृथिवीशब्दौ वर्जयित्वा। यथा—दिवः पुत्राय > "दिवस्पुत्राय सूर्याय"। "दिवस्पृष्ठे व्यचस्वतीम्"। "दिवस्पृष्ठे ज्योतिष्मतीम्"। अककुत्पृथिव्योरिति किम्? "अग्निर्मूर्द्धा दिवः ककुत्"। "दिवः पृथिव्याः पर्योजः"॥

(अ० भा०) दिवःशब्दस्य विसर्जनीयः सकारमापद्यते। ककुत्पृथिवीशब्दयोः परयोर्न। यथा—"दिवस्पुत्राय"। "दिवस्पृष्ठे व्यचस्वतीम्"। "दिवस्पृष्ठं स्वर्गत्वा"। "दिवस्पर्जन्यात्"। अककुत्पृथिव्योः किम्? "अग्निर्मूर्धा दिवः ककुत्पतिः"। "दिवः पृथिव्याः पर्योजः"। माध्यन्दिनीयानामिदम्। ऋग्वेदिनां तु "दिवस्पृथिव्योः" इति सकारपाठात्॥

राय: सहस: पोषपुत्रयो: ॥ २५ ॥

(उ० भा०) राय: सहस: इत्येतौ विसर्जनीयौ सकारमापद्येते यथासंख्यं पोषपुत्रयो: परयो:। राय: यथा—राय: पोषेण > "मा वयँ रायस्पोषेण वि यौष्म"। सहस: यथा—सहस: पुत्र: > "सहसस्पुत्रो अद्भुत:" ॥

(अ० भा०) राय: सहस: इति पदद्वयस्य विसर्जनीय: सकारमापद्यते यथासङ्ख्यं पोषपुत्रयो: परत:। यथा—"मा वयं रायस्पोषेण"। "सहसस्पुत्रो अद्भुत:" ॥

तमसोऽपरस्तात् ॥ २६ ॥

(उ० भा०) तमस इत्ययं विसर्जनीय: सकारमापद्यते परस्ताच्छब्दं मुक्त्वा। यथा—तमस: पारम् > "तमसस्पारमस्य"। अपरस्तादिति किम्? "आदित्यवर्णं तमस: परस्तात्" ॥

(अ० भा०) तमस: इत्ययं विसर्जनीय: सत्वमाप्नोति। परस्ताच्छब्दे परे तु न भवति। "तमसस्पारमस्य"। "तमसस्परि स्व:"। अपरस्तादिति किम्? "आदित्यवर्णं तमस: परस्तात्" ॥

तपसस्पृथिव्याम् ॥ २७ ॥

(उ० भा०) तपस इत्ययं विसर्जनीय: पृथिव्यां प्रत्यये सकारमापद्यते। यथा—"धर्त्ता दिवो विभाति तपसस्पृथिव्याम्"।

(अ० भा०) तपस: विसर्जनीय: तथा पृथिव्यां परत:। यथा—"धर्ता दिवो विभाति तपसस्पृथिव्याम्" ॥

अध्वनो रजसो रिष: स्पृशस्पातौ ॥ २८ ॥

(उ० भा०) अध्वनः रजसः रिषः स्पृशः एते विसर्जनीयाः पातौ प्रत्यये सकारमापद्यन्ते । अध्वनः यथा—अध्वनः पातु > "पूषाध्वनस्पात्विन्द्राय"। रजसः यथा—रजसः पाति > "रजसस्पात्यन्तौ"। रिषः यथा—रिषः पातु > "स नो दिवा रिषस्पातु नक्तम्"। पाताविति धातुग्रहणम्। अतः इहापि भवति—"देव रिषस्पाहि"। स्पृशः यथा—"सँस्पृशस्पाहि"॥

(अ० भा०) अध्वादिचतुष्टयविसर्जनीयः सत्वमापद्यते पातौ परे। यथा–अध्वनः पातु > "पूषाध्वनस्पातु"। "रजसस्पात्यन्तौ"। "सरिषस्पातु नक्तम्"। पाताविति धातुग्रहणम्। तेनान्यत्रापि। "पुरुराव्णो देवरिषस्पाहि"। "संस्पृशस्पाहि"॥

## अध्वनस्कुर्विति च ॥ २९ ॥

(उ० भा०) अध्वन इत्ययं विसर्जनीयः कुर्वित्येतस्मिंश्च प्रत्यये सकारमापद्यते। यथा—"सकामाँ अध्वनस्कुरु"॥

(अ० भा०) अध्वनशब्दात्परो विसर्जनीयः तथा कुरुशब्दे परे। "सकामां अध्वनस्कुरु संज्ञानमस्तु"॥

## समानपदे च ॥ ३० ॥

(उ० भा०) एकस्मिंश्च पदे यो विसर्जनीयः, स ककारपकारयोः प्रत्यययोर्यथायोगं सकारं षकारं चापद्यते। यथा—श्रेयः कर > "श्रेयस्कर," भूयः कर > "भूयस्कर"। आयुः पाः > "आयुष्पाः"॥

(अ० भा०) एकपदे यो विसर्जनीयः सः सकारषकारावापद्यते ककारपकारयोः परतः। श्रेयः कर > "श्रेयस्कर"। "पथस्पथः"। "तपस्तपस्पति"। "चक्षुष्पाः"। "आयुष्पाः"। इत्यादि॥

## परावसाने ॥ ३१ ॥

(उ० भा०) अवसानस्थे परीत्येतस्मिन् पदे प्रत्यये अधरस्तनपद-सम्बन्धी विसर्जनीयः सकारमापद्यते। यथा—ओषधयः परि,> "दिव ओषधयस्परि"। अवसान इति किम्? "तमग्ने हेडः परि ते वृणक्तु"॥

(अ० भा०) विसर्जनीयः सत्वमापद्यते अवसानस्थिते परिशब्दे। असमानपदार्थोयमारम्भः। यथा—"परुषस्परि"। "दिव ओषधयस्परि"। अवसानेति किम्? "तमग्ने हेळः परि ते वृणक्तु"॥

कविष्करत्कृधिषु ॥ ३२ ॥

(उ० भा०) कविः करत् कृधि एतेषु च पदेषु प्रत्ययेषु अध-स्तनपदसम्बन्धी विसर्जनीयः सकारं षकारं चापद्यते। कविः यथा—वसुः कविः> "स इधानो वसुष्कविः"। करत् यथा—यथा नो वस्यसः करत्> "यथा नो वस्यसस्करत्"। कृधि यथा—पुनः कृधि> "प्रबुधे नः पुनस्कृधि"॥

(अ० भा०) एषु परेषु विसर्जनीयः षकारसकारावापद्यते। "स इधानो वसुष्कविः"। "यथा नो वस्यसस्करत्"। "प्रबुधे नः पुन-स्कृधि"। एषु किम्? "पुनः प्राणः"॥

कृषीश्च कृधौ सकारम् ॥ ३३ ॥

(उ० भा०) कृधौ च प्रत्यये कृषीरित्ययं विसर्जनीयः सकार-मापद्यते। यथा—कृषीः कृधि> "समस्याः कृषीस्कृधि"। ननु "कविष्करत्कृधिषु" इति कृधौ कृषीरिति विसर्जनीयस्य सकारः प्राप्तः किमनेन सूत्रेण क्रियते? एवन्तर्हि अकण्ठ्योपधस्य षकारोऽभिप्रेतः स मा भूदिति सकारविधानम्। अस्माच्च ज्ञापकादकण्ठ्योपधः षकारमापद्यते इत्येतदध्यवस्यामः॥

(अ० भा०) कृधौ परे कृषीरिति विसर्जनीयस्सत्वमापद्यते। यथा—कृषीः कृधि> "कृषीस्कृधि"। ननु "कविष्करत्कृधिषु" इत्यनेनैव गतार्थ

त्वाद्व्यर्थमिदं सूत्रमिति चेत् । सत्यम् । भाव्युपधस्य षत्वं नियतम् । तन्मा भूदित्येतदर्थमित्यदोषः ॥

## सदो द्यौर्नमस्कृतं पितापथेषु ॥ ३४ ॥

**(उ० भा०) सदः द्यौः नमः एतेषां सम्बन्धी विसर्जनीयः यथासंख्य कृतम् पिता पथ इत्येतेषु पदेषु प्रत्ययेषु सकारषकारावापद्येते । सदः यथा—"येषामप्सु सदस्कृतम्" । द्यौः यथा—"उपहूतो द्यौष्पिता" । नमः यथा—"विश्वायुः शर्म सप्रथा नमस्पथे" ॥**

(अ० भा०) सदोद्यौर्नमश्शब्दानां विसर्जनीयः सकारषकारावापद्यते यथासंख्येन कृतम् पिता पथेषु परेषु "येषामप्सु सदस्कृतम्" । "उप हूतो द्यौष्पिता" । "सप्रथा नमस्पथे" ॥

## पत्यौ तालव्यस्वरोदये ॥ ३५ ॥

**(उ० भा०) पतिशब्दे तालव्यस्वरोदये प्रत्ययेऽधस्तनपदसम्बन्धी विसर्जनीयः सकारमापद्यते । यथा—वाचःपतिम् > "वाचस्पतिं विश्वकर्माणमूतये" । ब्रह्मणः पते > "ब्रह्मणस्पते त्वमस्य" । वाचःपतये > "वाचस्पतये पवस्व" ॥**

(अ० भा०) विसर्जनीयस्सत्वमाप्नोति तालव्यस्वरे पतिशब्दे परे । यथा—"वाचस्पतिं विश्वकर्माणम्" । "ब्रह्मणस्पते त्वमस्य यन्ता" । "वाचस्पतये" इत्याद्युदाहरणम् ॥

## पदे च ॥ ३६ ॥

**(उ० भा०) पतिशब्दे च पदे एतद्भवति, न पदावयवे । यथा—"वाचः पतिम्" । पद इति किम्? "यतो जातः प्रजापतिः" । परमेष्ठ्यभिधीतः प्रजापतिः" ॥**

(अ० भा०) पतिशब्दे परे यत्पूर्वमुक्तसत्वं तत्पदभूते पतिशब्दे पर एव न पदावयवे इति चशब्दार्थः। पूर्वाण्येवोदाहरणानि। पदावयवे किम्? "यतो जातः प्रजापतिः"। परमेष्ठ्यभिधीतः प्रजापतिः" ॥

**न परुषः परुषि ॥ ३७ ॥**

**(उ० भा०) परुष इत्ययं विसर्जनीयः परुषि प्रत्यये न सकारमापद्यते। यथा—"परुषः परुषस्परि"। "समानपदे च" इति प्राप्तस्य निषेधः।**

(अ० भा०) परुष इति विसर्जनीयः न सत्वमापद्यते परुषशब्दे परे। यथा—"परुषः परुषस्परि"। "समानपदे च" इति प्राप्तस्यापवादः ॥

**वाजपतिर्वास एदिधिषुरन्तःपर्शव्येनान्तःपार्श्व्यमिति च ॥ ३८ ॥**

**(उ० भा०) वाजपतिः वासः एदिधिषुः अन्तःपर्शव्येन अन्तःपार्श्व्यम् इत्येते विसर्जनीयाः यथाप्राप्तं न सकारषकारावापद्येते। "वाजपतिः कविः"। "कविः करत्कृधिषु" (३-३२) इति प्राप्तिः। "वासः पल्पूलीम्"। "एदिधिषुः पतिम्"। "समानपदे च" (३-३०) इत्युभयोः प्राप्तिः। अन्तःपर्शव्येन यथा—"अन्तःपर्शव्येनोग्रम्"। अन्तःपार्श्व्ये यथा—"अन्तःपार्श्व्यं महादेवस्य"। "समानपदे च" (३-३०) इत्युभयोः प्राप्तिः ॥**

(अ० भा०) वाजपत्यादिपञ्चकविसर्जनीयः न सकारषकारावापद्यते। यथा—"परिवाजपतिः कविरग्निः"। "कविष्करत्" इति प्राप्तस्यापवादः। "वासः पल्पुलीम्"। "एदिधिषुः पतिम्"। समानपदे चेति प्राप्तिः। "अन्तःपर्शव्येनोग्रम्"। "अन्तः प्राश्व्यं महादेवस्य" ॥

**अहःपतौ रेफम् ॥ ३९ ॥**

(उ० भा०) अहरित्ययं विसर्जनीयः पतिशब्दे प्रत्यये रेफमापद्यते। "अहर्पतये स्वाहा"। "समानपदे" इति प्राप्ते सकारे तदपवादो रेफः ॥

(अ० भा०) अहरशब्दस्य विसर्जनीयो रेफमापद्यते पतिशब्दे परे अहःपतये > "अहर्पतये स्वाहा"। समानपदत्वात्सत्वप्राप्तिः ॥

## परश्च मूर्धन्यम् ॥ ४० ॥

(उ० भा०) इत उत्तरं लोपागमवर्णविकारान् वक्ष्यामः; ते तावत् भविष्यन्ति परश्च दन्त्यो मूर्धन्यमापद्यते। अधिकारसूत्रमेतत् ॥

(अ० भा०) इत उत्तरं लोपागमवर्णविकारा उच्यन्ते। तत्र परो वर्णः मूर्धन्यमापद्यते। अधिकारोऽयम् ॥

## स्वर्धूः साँसहयोः ॥ ४१ ॥

(उ० भा०) स्वः धूः एतौ विसर्जनीयौ रेफमापद्येते यथासंख्यं साँसहयोः प्रत्यययोः परश्च दन्त्यो मूर्धन्यमापद्यते। स्वः यथा— स्वः साम् > "स्वर्षाँप्साँ वृजनस्य गोपाम्"। धूः यथा—धूः साहौ > "धूर्षाहौ युज्येथाम्" ॥

(अ० भा०) स्वः धूः एतौ विसर्जनीयौ रेफमापद्येते यथाक्रमं सांसहयोः परयोः परश्च मूर्धन्यम्। स्वः साम् > "स्वर्षाम्"। धूः वाहौ > "धूर्वाहौ युज्येथाम्"। दीर्घोऽत्र वक्ष्यते। परेषामिदं धूर्वहाविति काण्वपाठात् ॥

## उकारं दुर्दे ॥ ४२ ॥

(उ० भा०) दुरित्ययं विसर्जनीय उकारमापद्यते दकारे प्रत्यये उकारात् परश्च दन्त्यो मूर्धन्यमापद्यते। यथा—दुः दभः > "परि ते दूडभो रथः" ॥

(अ० भा०) दुरिति विसर्जनीयः उकारमापद्यते दकारे परे परश्च मूर्धन्यम्। यथा—दुः दभः > "परि ते दूळभो रथः"। अत्र मूर्धन्य-भावेन डकारे जाते "डढौ ळळ्हावेकेषाम्" इति डस्य ळकारो द्रष्टव्यः ॥

नाशे च ॥ ४३ ॥

**(उ० भा०) नाशे च प्रत्यये दुरित्ययं विसर्जनीय उकारमापद्यते उकारात् परश्च दन्त्यो मूर्धन्यमापद्यते। यथा—दुः नाशः > "दूणाशः"। मृग्यमुदाहरणम् ॥**

(अ० भा०) दुरित्ययं च विसर्जनीयः उकारमापद्यते नाशशब्दे परे। परश्च मूर्धन्यम्। यथा—दुः नाश > "दूणाश सख्यं तव"। इदं शाखीयम्। माध्यन्दिनानामुदाहरणं नास्ति ॥

पुरो दाशे ॥ ४४ ॥

**(उ० भा०) पुर इत्ययं विसर्जनीयो दाशे प्रत्यये उकारमापद्यते। परश्च मूर्धन्यम्। यथा—'पुरः दाशः'> 'पुरउ दाशः' अत्र रूपसिद्धिः—विसर्जनीयादेशस्योकारस्य चोपधाकारस्य च "उवर्ण ओकारम्" इत्येकादेश ओकारः ततः परस्य दकारस्य डकारः। "पुरोडाशैर्हवीष्याँ" ॥**

(अ० भा०) पुर इत्ययं विसर्जनीयस्तथा दाशशब्दे परे। परश्च मूर्धन्यम्। यथा—पुरः दाशैः > "पुरोळाशैर्हवीष्याँ"। ळकारः पूर्ववत् ॥

अनसो वाहौ सकारो डकारम् ॥ ४५ ॥

**(उ० भा०) अनश्शब्दः सान्तः तस्य वाहौ प्रत्यये डकारमापद्यते। यथा—अनस् वाहम् > 'अनड्वाहमन्वारभामहे" ॥**

(अ० भा०) अनश्शब्दस्य सकारः डकारमापद्यते वाहशब्दे परे । यथा—अनस् वाहस् > "अनड्वाहमन्वारभामहे" । "अनड्वांश्च मे" ॥

ओकारमितः सिश्चतौ सोपधः ॥ ४६ ॥

(उ० भा०) इतःशब्दसम्बन्धी विसर्जनीयः उपधासहितः ओकारमापद्यते सिश्चतौ प्रत्यये । परश्च मूर्धन्यम् । यथा—इतः सिश्चत > "परीतो षिश्चता सुतम्" ॥

(अ० भा०) इतश्शब्दस्य विसर्जनीयः उपधासहित ओकारमापद्यते सिश्चतिशब्दे परे । यथा—इतः सिश्चत > "इतो षिश्चता सुतम्" । परसवर्णादपवादः ॥

षड्दशदन्तयोः संख्यावयोऽर्थयोश्च ॥ ४७ ॥

(उ० भा०) षडित्येतस्य शब्दस्य चशब्दादन्त्यो वर्णः सोपध ओकारमापद्यते । परश्च मूर्धन्यं दशदन्तयोः प्रत्यययोर्यथासंख्यं संख्यावयसोरभिधायकयोः । यथा—षट् दश > "षोडश च मे" । षट् दन्ता अस्येति "षोडन्तः" । एतच्च शिष्यव्युत्पादनार्थम् । न हि संहितायामुदाहरणं लभ्यते ॥

(अ० भा०) षट्शब्दस्यान्त्यो वर्णः सोपध ओकारमापद्यते सङ्ख्यावयोऽर्थकयोः दशदन्तशब्दयोः परयोः । यथा—षट् दश > "षोळश च मे" । "अदितिष्षोळशाक्षरेण" । षट् दन्तः > "षोडन्तो अस्य महतो महित्वात्" । शाखीयादेरेतत् ॥

त आघादनाडम्बरात् ॥ ४८ ॥

(उ० भा०) आघाशब्दात् परस्तकारः "परश्च मूर्धन्यम्" इत्यनेन मूर्धन्यमापद्यते स चेदाघाशब्द आडम्बरशब्दात् परो न भवति ।

**यथा—दारु आघातः > "गोधा कालका दार्वाघाटः"। अनाडम्बरादिति किम्? "शब्दायाडम्बराघातम्" ॥**

(अ० भा०) आघाशब्दात् पदैकदेशात् परस्तकारो मूर्धन्यमापद्यते स चेदाघाशब्दः आळम्बरशब्दात्परो न भवति। यथा—दारु आघातः > "दार्वाघाटस्ते वनस्पतीनाम्"। अनाळम्बरादिति किम्? "शब्दायाळम्बराघातम्" ॥

## वनसदोऽवेटो रेफेण ॥ ४९ ॥

**(उ० भा०) वनशब्दः सद्शब्दे प्रत्यये रेफेण व्यवधीयते स चेद्वनशब्दो वेट्शब्दात् परो न भवति। यथा—वनसदः > "वनर्षदो वायवो न सोमाः"। अवेट् इति किम्? "बर्हिषदे वेड्वनसदे वेट्" ॥**

(अ० भा०) वनशब्दः सदशब्दे परे रेफेण व्यवधीयते स चेद्वनशब्दः वेट्शब्दात्परो न भवति। यथा—वन सदः > "भुरण्यवो वनर्षदो वायवो न सोमाः"। अवेट् किम्? "बर्हिषदे वेड्वनसदे वेट्" ॥

## पत्यौ च सकारेण ॥ ५० ॥

**(उ० भा०) पतिशब्दे च प्रत्यये वनशब्दः सकारेण व्यवधीयते। यथा—वनपतिः > "वनस्पतिः शमिता देवः" ॥**

(अ० भा०) वनशब्द इत्यनुवर्त्तते। स च पतिशब्दे परे सकारेण व्यवधीयते। यथा—वनानां पतिः > "वनस्पतिः शमिता देवः" ॥

## ऋतावरौ च पतिपरयोः ॥ ५१ ॥

**(उ० भा०) ऋतः अवरश्च शब्दौ सकारेण व्यवधीयेते यथासंख्यं पतिपरयोः प्रत्यययोः। यथा—ऋतपते > "ऋतस्पते त्वष्टुर्जामातरद्भुत"। अवरपराय > "अवरस्पराय शङ्खधमम्" ॥**

(अ० भा) ऋतावरशब्दौ सकारेण व्यवधीयेते यथासंख्यं पतिपर-शब्दयोः परयोः। यथा—ऋतपते > "ऋतस्पते"। अवरपराय > "अव-रस्पराय"॥

## तद्बृहतौ करपत्योस्तलोपश्च ॥ ५२ ॥

**(उ० भा०) तत् बृहत् एतौ करपतिशब्दयोः प्रत्यययोर्यथासंख्यं सकारेण व्यवधीयेते; पूर्वपदयोश्च तकारलोपो भवति। यथा—तत् करान् > "तस्कराँ उत्"। बृहत् पतिः > "बृहस्पतिः"॥**

(अ० भा०) तद्बृहच्छब्दौ यथासङ्ख्यं करपतिशब्दयोः परयोः सकारेण व्यवधीयेते। तथा तकारलोपश्च। बृहत् स्पतिः > "बृहस्पतिः"। तत् करान् > "तस्करान्"। "तस्करां उत"। "तस्कराणां पतये नमः"॥

## परिकृते षकारेण ॥ ५३ ॥

**(उ० भा०) परीत्येतत्पदं कृते प्रत्यये षकारेण व्यवधियते। यथा—परि कृताः > "परिष्कृताः शुक्राः"॥**

(अ० भा०) परिशब्दः कृतशब्दे परे षकारेण व्यवधीयते। परि कृताः > "मदामासरेण परिष्कृताः"॥

## चन्द्रे सु शकारेण ॥ ५४ ॥

**(उ० भा०) चन्द्रे प्रत्यये सुशब्दः शकारेण व्यवधीयते। यथा—सुचन्द्र > "उभे सुश्चन्द्र सर्पिषः"॥**

(अ० भा०) सुशब्दः शकारेण व्यवधीयते चन्द्रशब्दे परे। सु चन्द्र > "सुश्चन्द्र सर्पिषः"॥

**दुधुक्षन् धो दकारम् ॥ ५५ ॥**

**(उ० भा०) दुधुक्षन् इत्येतस्य शब्दस्य धकारो दकारमापद्यते। यथा—दुधुक्षन् > "सहस्रधारां बृहतीन्दुदुक्षन्"॥**

(अ० भा०) दुधुक्षन्नित्यस्य पदस्य धकारः दकारमापद्यते। यथा— "सहस्रधारां बृहतीं दुदुक्षन्"॥

**भाविभ्यः सः षँ समानपदे ॥ ५६ ॥**

**(उ० भा०) "अकण्ठ्यो भावी" इत्युक्तम्। भाविभ्यः उत्तरः सकारः षकारमापद्यते। एकपदस्थौ चेद्भाविसकारौ भवतः। यथा—गो स्थानम् > "व्रजं गच्छ गोष्ठानम्"। परमे स्थी > "परमेष्ठ्याभिधीतः"। "सुषाव सोमम्"। सीसधाम > "सीषधामेन्द्रश्च"। भाविभ्य इति किम्? "ध्रुवसदन्त्वा"। समानपद इति किम्? "वि सीमतः सुरुचः"॥**

(अ० भा०) अकण्ठ्यो भावीत्युक्तम्। भाविभ्यः परः सकारः षत्वमाप्नोति निमित्तनैमित्तिकयोरेकपदस्थत्वे। यथा—सीसधाम > "इमा नु कं भुवना सीषधामेन्द्रस्य"। "नृषदं गोष्ठानम्"। "परमेष्ठ्यभिधीतः"। "आ सुषाव सोममद्रिभिः"। भाविभ्यः किम्? ध्रुवसदं > "ध्रुवसदं त्वा"। समानपदे किम्? वि सीमतः > "वि सीमतस्सुरुचः"॥

**अनुस्वाराच्च तत्पूर्वात् ॥ ५७ ॥**

**(उ० भा०) अनुस्वाराच्च परः सकारः षकारमापद्यते भाविपूर्वात्। यथा—"तपूँष्यग्ने" "पुरोडाशैर्हवींष्या"। तत्पूर्वादिति किम्? "उत्सत्वनां मामकानां मनांसि"॥**

(अ० भा०) भाविपूर्वादनुस्वारात्परः सकारः षत्वमाप्नोति। यथा— "तपूँष्यग्ने"। "पुरोळाशैर्हवींष्या"। भाविपूर्वात् किम्? "उत्सत्वनां मामकानां मनांसि"॥

करेफाभ्यां च ॥ ५८ ॥

(उ० भा०) ककाररेफाभ्यां च परः सकारः षकारमापद्यते। ककाराद्भवति यथा—दिक् "सुये चैनं रुद्रा अभितो दिक्षु"। ऋक् सु > "ऋक्षु"। रेफाद्भवति यथा–गीः सु > "गीर्षु," धूः सु > "धूर्षु" ननु च यत्र पदकारोऽन्यथाभूतं पदं करोति अन्यथा चार्षसंहिता तत्रैव लक्षणं कर्त्तुं युज्यते। यथा—सुसाव > "सुषाव"। यत्र पुनः पदकारस्य चार्षसंहितायाश्च समानवाक्यत्वम् तत्र लक्षणं न घटते व्याकरणस्य विषयः। सत्यमेव यदि नाम प्रसङ्गमुपजीवदाचार्येण शिष्यव्युत्पत्यर्थं कश्चिद्व्याकरणलक्षण इहासञ्जितः एवं संहितायामविद्यमानेषु लक्षणं द्रष्टव्यम्। अथवा यथा एधाहारस्य मध्वाहरणम्, उदकाहारस्य मत्स्याहरणम् पुष्पाहारस्य फलाहरणम्, एवमेतदपि। एवं च कृत्वा अदोष एवेति ॥

(अ० भा०) करेफाभ्यां परोऽपि तथा। यथा—दिक् सु > "अभितो दिक्षु श्रिताः"। गीर् सु > 'गीर्षु'। धूर् सु > 'धूर्षु'। लौकिकोदाहरणम्। यदुदाहरणं व्याकरणसाध्यं न भवति तत्र प्रातिशाख्यलक्षणमुचितम्। एवं सति "करेफाभ्यां" इत्यादीनां वैयर्थ्यमिति चेत्। सत्यमेव। किन्तु प्रसङ्गादाचार्येण शिष्यव्युत्पत्यर्थं कश्चिद् व्याकरणविषयोऽपि प्रदर्शितः। वस्तुतस्तु "ऋक्सामयोः" इत्याद्युदाहरणे षत्वमपवदिष्यति। तत्र प्राप्तिपूर्वकत्वात् प्रतिषेधस्येति तत्प्राप्त्यर्थमिदम्। एवमेव संहितायामविद्यमानपदव्युत्पादनमपि शिष्यव्युत्पत्यर्थमिति न कश्चिद्दोषः इध्मानयनार्थं प्रवृत्तस्यैव प्रसङ्गाच्छाखानयनवत्। यद्वा पञ्चदशसु शाखासु लक्षणार्थमाचार्यस्य प्रवृत्तेः। शाबीयादिशाखासिद्धोदाहरणसिध्यर्थं सूत्राधिकरणमिति द्रष्टव्यम् ॥

नेः सीदतेः ॥ ५९ ॥

(उ० भा०) नेः परस्य सीदतेः सकारः षकारमापद्यते। यथा—नि सीदत > "एदं बर्हिर्निषीदत" ॥

**ससाद च ॥ ६० ॥**

(उ० भा०) **नेः परस्य ससादशब्दस्य सकारः षकारमापद्यते। यथा—नि ससाद > "निषसाद धृतव्रतः"। असमानपदार्थ आरम्भः ॥**

(अ० भा०) नेः परस्य सीदतेः ससादशब्दस्य च सकारः षत्वमापद्यते। ससाद "निषसाद धृतव्रतः"। असमानपदार्थोऽयमाराम्भः ॥

**ओकारात्सु ॥ ६१ ॥**

(उ० भा०) **ओकारात् पदात् परः सुसकारः षकारमापद्यते। यथा—मो सु नः > "मो षु णः" ॥**

(अ० भा०) ओकारान्तपदात्परः सुशब्दः षत्वमाप्नोति। यथा—"मो षु णः" ॥

**ऊश्चापृक्तात् ॥ ६२ ॥**

(उ० भा०) **"एकवर्णं पदमपृक्तम्" इत्युक्तम्। ऊकाराच्चापृक्तसंज्ञात्परः सुसकारः षकारमापद्यते। यथा—ॐ इति ऊ सु नः > "ऊर्ध्व ऊ षु णः" ॥**

(अ० भा०) स्पष्टम्। ऊ सु > "ऊर्ध्व ऊ षु णः" ॥

**अभेश्च ॥ ६३ ॥**

(उ० भा०) **अभेरुपसर्गाच्च परः सकारः षकारमापद्यते, संहितायाम्। यथा—अभि सिञ्चामि > "अभिषिञ्चाम्यसौ" ॥**

(अ० भा०) अभ्युपसर्गात्परोऽपि तथा। अभि सु > "अभी षु णः"। "साम्राज्येनाभिषिञ्चामि" ॥

परेश्च सिञ्चतेः ॥ ६४ ॥

(उ० भा०) परेरुपसर्गाच्च परः सिञ्चतेः सकारः षकारमापद्यते । यथा—परि सिञ्चन्ति > "परिषिञ्चन्ति" ॥

(अ० भा०) पर्युपसर्गात् परोऽपि तथा । सिञ्चन्ति > "परिषिञ्चन्ति" ॥

अव्यवहितोऽपि ॥ ६५ ॥

(उ० भा०) अकारव्यवहितोऽपि अभेरुत्तरः सिञ्चतेः सकारः षकारमापद्यते संहितायाम् । यथा—अभ्यसिञ्चन् > "याभिर्मित्रावरुणावभ्यषिञ्चन्" ॥

(अ० भा०) अभ्युपसर्गात् उत्तरः सिञ्चतेः सकारः षत्वमाप्नोति अकारेण व्यवहितोऽपि । यथा—अभि असिञ्चत् > "अभ्यषिञ्चन्याभिः" ॥

वेर्युदयः ॥ ६६ ॥

(उ० भा०) वेरुपसर्गात्परः सकारो यकारोदयः षकारमापद्यते । वि स्यामि > "तन्ते विष्याम्यायुषो न मध्यात्" । यकारोदय इति किम् ? "विस्वः पश्य व्यन्तरिक्षम्" ॥

(अ० भा०) वेरुपसर्गात्परः सकारो यकारपरः षत्वमाप्नोति । वि-स्यामि > "तन्ते विष्याम्यायुषः" । युदयः किम् ? "विस्वः पश्यव्यन्तरिक्षम्" ॥

हेर्मथोदयः ॥ ६७ ॥

(उ० भा०) हिशब्दात् परः सकारो मकारोदयो वा थकारोदयो वा षकारमापद्यते । मकारोदयो यथा—हि स्म > "अस्ति हि ष्मा ते शुष्मिन्नवयाः" । थकारोदयो यथा—हि स्था > "आपो हि ष्ठा मयोभुवः" ॥

(अ० भा०) हिशब्दात्परः सः षत्वमापद्यते मकारे थकारे परे। हि स्म > "अस्ति हि ष्मा ते"। हि स्था > "आपो हि ष्ठा मयोभुवः" ॥

**द्यवेश्च ॥ ६८ ॥**

(उ० भा०) **द्यविशब्दाच्च परः सकारः षकारमापद्यते यथासम्भवं मकारोदयः थकारोदयश्च संहितायाम्। यथा—द्यविस्थ > "ये अन्तरिक्षे य उप द्यविष्ठ" ॥**

(अ० भा०) द्यविशब्दात्परोऽपि तथा। द्यविस्थ > "य उप द्यविष्ठ" ॥

**नेः स्त्यास्तनेः ॥ ६९ ॥**

(उ० भा०) **नेरुपसर्गात् परयोः स्त्यास्तन्योर्धात्वोः सकारः षकारमापद्यते संहितायाम्। यथा–निःस्त्यायताम्> "आप्यायतान्निष्ठ्यायताम्"। निस्तनिहि > "निष्टनिहि दुरिता बाधमानः" ॥**

(अ० भा०) नेरुत्तरयोस्त्यास्तनोः धात्वोः सकारः षत्वमाप्नोति। निः स्त्यायताम् > "निष्ठ्यायताम्"। "तस्यैते स्वाहा निष्टनिहि दुरिता बाधमानः"। परेषामिदम् ॥

**ततक्षौ ॥ ७० ॥**

(उ० भा०) **ततक्षुरित्येतस्मिन्नुत्तरपदे निरुपसर्गसम्बन्धिविसर्जनीयसकारः षकारमापद्यते। यथा—निः ततक्षुः > "स्वधया निष्टतक्षुः" ॥**

(अ० भा०) नेर्विसर्जनीयसम्बन्धी सकारः षत्वमापद्यते ततक्षुशब्दे परे। यथा—निः ततक्षुः > "द्यावापृथिवी निष्टतक्षुः"। "स्वधया निष्टतक्षुः" ॥

**अनोः स्तुवन्त्याम् ॥ ७१ ॥**

(उ० भा०) अनोरुपसर्गात्परः स्तुवन्तिसकारः षकारमापद्यते। यथा—अनुस्तुवन्ति > "अनुष्टुवन्ति पूर्वथा" ॥

(अ० भा०) अनोरुपसर्गात्परः स्तौतिधातुसकारः षत्वमापद्यते। अनुस्तुवन्ति > "अनुष्टुवन्ति पूर्वथा" ॥ परकीयमिदम् ॥

## दुष्वप्न्यम् ॥ ७२ ॥

(उ० भा०) निपातनसूत्रमेतत्। भाविभ्य उत्तरस्य सकारस्य षत्वमित्युक्तं समानपदे। इह तु विसर्जनीयेन व्यवधानान्न प्राप्नोति। अतः षत्वं निपात्यते संहितायाम्। यथा—दुःष्वप्न्यम् > "अप दुःष्वप्न्यँ सुव" ॥

(अ० भा०) इदं निपात्यते। भाविभ्यः परस्य सस्य षत्वमुक्तम्। इह विसर्गेण व्यवधानात् समानपदत्वेऽपि न सिध्यतीति निपातकरणम्। दुष्वप्न्यम् > "अप दुष्वप्न्यं तव" ॥

## वन्दारुमाकिः ॥ ७३ ॥

(उ० भा०) वन्दारुः माकिः अनयोर्विसर्जनीयस्य सकारः षकारमापद्यते संहितायाम्। "तथयोः सम्" इति विसर्जनीयस्य सकार उक्तस्तस्यैव षत्वम्। यथा—वन्दारुः ते > "वन्दारुष्टे तन्वं वन्दे अग्ने"। माकिः ते > "माकिष्टे व्यथिरादधर्षीत्" ॥

(अ० भा०) एतयोर्विसर्जनीयसकारः षत्वमेति। वन्दारुः ते > "वन्दारुष्टे तन्वं वन्दे"। माकिः ते > "माकिष्टे व्यथिरादधर्षीत्" ॥

## सहेः पृतनायाः ॥ ७४ ॥

(उ० भा०) एतदपि निपातनसूत्रम्। अभाविपूर्वत्वात् षकारो न प्राप्नोति। स निपात्यते। यथा—पृतनासाह्याय च > "पृतनाषाह्याय च" ॥

(अ० भा०) पृतनाशब्दात्परस्य सहेः सस्य षत्वं निपात्यते। अभावि-पूर्वत्वान्निपातितः। यथा—पृतना साह्याय च > "पृतनाषाह्याय च"॥

**सधिरँशुरदितिः॥ ७५॥**

**(उ० भा०) सधिः अंशुः अदितिः एतेषां विसर्जनीयसकारः षकारमापद्यते संहितायाम्। सधिः यथा—सधिः तव> "सधिष्टव सौषधीः"। अंशुः यथा—अँशुः ते > "अँशुष्टे देव सोम"। अदितिः यथा—अदितिः त्वा > "अदितिष्ट्वा देवी"॥**

(अ० भा०) एषां विसर्जनीयसकारः षत्वमेति। यथा—सधिः तव > "अप्स्वग्ने सधिष्टव सौषधीः"। अंशुः ते > "अंशुरंशुष्टे"। "अदितिष्ट्वा देवी"॥

**वायुरग्निरग्नेरेकाक्षरे॥ ७६॥**

**(उ० भा०) वायुः अग्निः अग्नेः एतेषां विसर्जनीयसकारः षकारमापद्यते एकाक्षरे पदे प्रत्यये। यथा—वायुः ते > "वायुष्टेऽधिपतिः"। अग्निः ते > "अग्निष्टेऽधिपतिः"। "अग्नेः त्वा > अग्नेष्ट्वास्येन"। एकाक्षर इति किम्? अग्निः तिग्मेन > "अग्निस्तिग्मेन शोचिषा"। अग्नेः तनूः > "अग्नेस्तनूरसि"॥**

(अ० भा०) वाय्वादित्रयविसर्जनीयसम्बन्धिसकारः षत्वमेति एकाक्षरपदे परे सति। यथा—वायुः ते > "वायुष्टेऽधिपतिः"। "अग्निष्टेऽधिपतिः"। "अग्नेष्ट्वास्येन प्राश्नामि"। एकाक्षरेति किम्? "अग्निस्तिग्मेन"। "अग्नेस्तनूरसि"॥

**सकारपरे च॥ ७७॥**

**(उ० भा०) सकारः परो यस्मादेकाक्षरात् स तथोक्तः। तस्मिन्नेकाक्षरे प्रत्यये च शब्दादधस्तनपदसम्बन्धी विसर्जनीयसकारः षकारमा-**

**पद्यते संहितायाम् । यथा—बृहस्पतिः त्वा सुम्ने > "बृहस्पतिष्ट्वा सुम्ने"। प्रजापतिः त्वा सादयतु > "प्रजापतिष्ट्वा सादयतु"। सकारपर इति किम्? विष्णुस्त्वा क्रमताम्"। "सवितुस्त्वा प्रसवे" ॥**

(अ० भा०) सकारः परः यस्मात्तत् सकारपरं तस्मिन् एकाक्षरे परे सकारः षत्वमेति। बृहस्पतिः त्वा सुम्ने > "बृहस्पतिष्ट्वा सुम्ने रम्णातु"। "प्रजापतिष्ट्वा सादयतु"। सकारपरे किम्? "विष्णुस्त्वा क्रमताम्"। "सवितुस्त्वा क्रमताम्" ॥

## मातृभिरर्चिभिः पायुभिर्वरुत्रीः ॥ ७८ ॥

**(उ० भा०) मातृभिः अर्चिभिः पायुभिः वरुत्रीः एतेषां च पदानां विसर्जनीयसकारः षकारमापद्यते एकाक्षरे प्रत्यये। मातृभिः यथा—मातृभिः त्वम् > "मातृभिष्ट्वम्"। अर्चिभिः यथा—अर्चिभिः त्वम् > "अर्चिभिष्ट्वम्"। पायुभिर्यथा—पायुभिः त्वम् > "पायुभिष्ट्वम्"। वरुत्रीः यथा—वरुत्रीः त्वा > "वरुत्रीष्ट्वा देवीः" ॥**

(अ० भा०) एतच्चतुष्टयविसर्जनीयसकारः षत्वमेति। परश्च मूर्धन्यमापद्यते एकाक्षरे पदे परे। यथा—"मातृभिष्ट्वं ज्योतिष्मान्"। "शिवेभिरर्चिभिष्ट्वम्"। "सवित पायुभिष्ट्वं शिवेभिः"। "वरुत्रीष्ट्वा देवीः" ॥

## षात्तथौ मूर्धन्यम् ॥ ७९ ॥

**(उ० भा०) षकारात् परौ तकारथकारौ मूर्धन्यमापद्येते। "विकारी यथासन्नम्" इति परिभाषितत्वात् तकारस्य टकारः, थकारस्य ठकारः। यथा—"वरुत्रीष्ट्वा"। "कृष्णोऽस्याखरेष्ठः" ॥**

(अ० भा०) षकारात्परौ तकारथकारौ मूर्धन्यमापद्येते। "विकारी यथासन्नम्" इति परिभाषितत्वात् तकारस्य टकारः थकारस्य ठकार इत्यर्थः। सर्वशेषोऽयम्। उक्तान्येवोदाहरणानि। परश्च मूर्धन्यमिति सिद्धेऽपि शिष्यानुग्रहार्थं पुनर्वचनम् ॥

प्रकृत्या नानापदस्थे तकारे ॥ ८० ॥

(उ० भा०) इत उत्तरं प्रकृत्या सकारो भविष्यति समानपदस्थः नानापदस्थस्तु यः प्रकृतिभावः स तकारे प्रत्येतव्यः। अपवादसूत्रमेतत् ॥

(अ० भा०) इतः परं समानपदस्थोऽपि सकारः प्रकृत्या स्यात्। नानापदस्थे तु यः प्रकृतिभावः सस्तकारे परे ज्ञातव्यः। अपवादसूत्रमेतत् ॥

उदाहरणद्वारा तदेव दर्शयति—

अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमभि सत्वाभिसंविशन्तु सुसस्या अतिस्थूलम्मुसले पत्नीसँय्याजान् क्रतुस्थलाञ्जिसक्थो दिविस्पृशा हृदिस्पृशँ हिंसीर्ऋक्सामयोर्ऋक्सामाभ्यां तित्तिरिः सीसेन सीसाः सीसम्पशुसनि गोसनि प्रतिसदृङ् प्रतिसदृक्षासश्चतुस्त्रिँशत् ॥ ८१ ॥

(उ० भा०) अनुसन्तनोतु, बृहस्पतिसुतस्य, सुसमिद्धाय, सुसन्दृशम्, अभि सत्वा, अभि संविशन्तु, सुसस्याः, अतिस्थूलम्, मुसले, पत्नीसंयाजान्, क्रतुस्थला, अञ्जिसक्थः, दिविस्पृशाः, हृदिस्पृशम्, हिंसीः, ऋक्सामयोः ऋक्सामाभ्याम्, तित्तिरिः, सीसेन, सीसाः, सीसम्, पशुसनि, गोसनि, प्रतिसदृङ्, प्रतिसदृक्षासः, चतुस्त्रिंशत्, एते सकाराः प्रकृत्या भवन्ति। सकारः षकारं प्राप्नोति सनिषिध्यत इति सूत्रार्थः। इदानीमुदाहरणानि दीयन्ते—अनुसन्तनोतु यथा—"इदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोतु"। बृहस्पतिसुतस्य यथा—"बृहस्पतिसुतस्य देव"। सुसमिद्धाय यथा—"सुसमिद्धाय शोचिषे"। सुसन्दृशं यथा—"सुसन्दृशन्त्वा वयम्"। अभि सत्वा यथा—"अभि वीरो अभि सत्वा सहोजाः"। अभि संविशन्तु यथा—"इन्द्रमिव देवा अभि संविशन्तु"। सुसस्याः यथा—"सुसस्याः कृषीस्कृधि"। अतिस्थूलं यथा—"अतिस्थूलं चातिकृशं च"। मुसले यथा—"उलूखलमुसले"। पत्नीसँयाजान् यथा—

"शंयुना पत्नीसंय्याजान्"। ऋतुस्थला यथा—"पुञ्जिकस्थला च ऋतुस्थला च"। अञ्जिसक्थो यथा—"शितिकक्षोऽञ्जिसक्थः"। दिविस्पृशा यथा—"घृतप्रतीको बृहता दिविस्पृशा"। हृदिस्पृशं यथा—"क्रतुन्न भद्रँ हृदिस्पृशम्"। एतेषां पदानां सकारो भाव्युपधत्वात् षत्वं प्राप्नोति। तस्यैतेन प्रकृतिभावः। हिंसीः यथा—"स्वधिते मैनँ हिँसीः"। "अनुस्वाराच्च तत्पूर्वात्" इति प्राप्तिः। "ऋक्सामयोः यथा—"ऋक्सामयोः शिल्पेस्थः"। ऋक्सामाभ्यां यथा—"ऋक्सामाभ्याँ सन्तरन्तः"। "करेफाभ्यां च" इति प्राप्तिः। तित्तिरिः यथा—"तित्तिरिस्ते सर्पाणाम्"। "एकाक्षरे," "सकारपरे च" इति प्राप्तिः। इदमर्थेन च "नानापदस्थे तकारे" इति सूत्रावयवः कृतः। अन्यथा तित्तिरिपदे सकारो न विद्यत इति मोहः स्यात्। सीसेन यथा—"सीसेन तन्त्रं मनसा"। सीसाः यथा—"रजता हरिणीः सीसा युजो युज्यम्"। सीसं यथा—"सीसञ्च मे"। पशुसनि यथा—"प्रजासनि पशुसनि"। गोसनि यथा—"यो गोसनिस्तस्य त इष्टयजुषः"। प्रतिसदृङ् यथा—"सदृङ् च प्रतिसदृङ् च"। प्रतिसदृक्षासः यथा—"प्रतिसदृक्षास एतन"। चतुस्त्रिंशत् यथा—"चतुस्त्रिँशद्वाजिनः"। नचात्र भाविः विसर्जनीयव्यवहितः। अतो नैवेह षत्वशङ्का। किमनेन सूत्रावयवेनेति? एवन्तर्हि येऽन्येऽपि चतुश्शब्दविसर्जनीयव्यवहितास्तेषां षत्वार्थम्। यथा—चतुः स्तोमः > "चतुष्टोमः"॥

(अ० भा०) एतेषु षड्विंशतिः सकाराः प्रकृत्या स्युः। "भाविभ्यसः षं समानपदे" तस्यायमपवादः। क्रमेणोदाहरणानि—"वीर्यँ पुत्रोऽनु सन्तनोतु"। "उपयाम गृहीतोऽसि बृहस्पतिसुतस्य ते"। "सुसमिद्धाय शोचिषे"। "सुसन्दृशं त्वा वयम्"। "अभि वीरो अभि सत्वा सहोजाः"। "देवा अभि संविशन्तु"। "योनिरसि सुसस्याः कृषीः"। "अति स्थूलं चातिकृशं च"। "उलूखलमुसले"। "शंयुना पत्नीसँयाजान्"। "पुञ्जिकस्थला च ऋतुस्थला च"। "शितिकक्षोञ्जिसक्थस्त ऐन्द्राग्नाः"। "घृतप्रतीको बृहता दिविस्पृशा"। "क्रतुं न भद्रं हृदि स्पृशम्"। "स्वधिते

मैनं हिंसीः"। "अनुस्वाराच्च तत्पूर्वात्" इति प्रासस्यापवादः। "ऋक्सामयोः शिल्पेस्थः"। "ऋक्सामाभ्यां सन्तरन्तः"। अत्र "करेफाभ्यां च" इति प्राप्तिः। "तित्तिरिस्ते सर्पाणाम्"। अत्र "एकाक्षरे", "सकारपरे च" इति प्राप्तिः। तस्यापवादः। "सीसेन तन्त्रं मनसा"। "हरिणीस्सीसा यजः"। "सीसं च मे त्रपु च मे"। "प्रजासनि पशुसनि भक्षोयोगोसनिः"। "सद्दङ् च प्रतिसद्दङ् च"। "सद्दक्षासः प्रतिसद्दक्षास एतन"। "चतुस्त्रिंशद्वाजिनो देवबन्धोः"। परकीयमेतत्। चतुस्त्रिंशदिति किम्? "धर्त्रं चतुष्टोमः"॥

**ऋकाररेफारुदयश्च ॥ ८२ ॥**

**(उ० भा०) ऋकारोदया रेफोदयः अरुदयश्च सकारः प्रकृत्या भवति। ऋकारोदयः यथा—"तिसृभिरस्तुवत"। रेफोदयः यथा—"तिस्रश्च मे"। अरुदयः यथा—"वाचो विसर्जनम्॥**

(अ० भा०) ऋकाररेफार्परः सकारः अतथाभूतश्च सकारः प्रकृत्या स्यात्। ऋकारपरो यथा—"तिसृभिरस्तुवत"। रेफपरो यथा—"तिस्रश्चमे"। अर्परो यथा—"वाचो विसर्जनम्"॥

**पृथिविदिव्युपरिचर्षणिशकुनियासिभ्यः ॥ ८३ ॥**

**(उ० भा०) पृथिवि दिवि उपरि चर्षणि शकुनि यासि एतेभ्यो भाविभ्यः परः सकारः प्रकृत्या भवति संहितायाम्। पृथिवि यथा—"पृथिविसदन्त्वा"। दिवि यथा—"दिविसदं देवसदम्"। उपरि यथा—"उपरिसदो दुवस्वन्तः"। चर्षणि यथा—"चर्षणीसहाँ वेत्तु"। शकुनि यथा—"शकुनिसादेन"। यासि यथा—"अवयासि सिसीष्ठाः"॥**

(अ० भा०) पृथिव्यादिभ्यो भाविभ्यः परः सकारः प्रकृत्या स्यात्।

यथा—" पृथिवि सदंत्वा "। " दिविसदम् "। " उपरिसद्भ्यो दुवस्वद्भ्यः "। " उपरिसदो दुवस्वन्तः "। " चर्षणीसहां वेतु "। " बृहस्पतिं शकुनिसादेन "। " अवयासिसीष्ठाः " ॥

## ऋषरेफेभ्यो नकारो णकारँ समानपदे ॥ ८४ ॥

(उ० भा०) ऋषकाररेफेभ्य उत्तरो नकारो णकारमापद्यते समानपदे। ऋकाराद्भवति यथा—" नृणाम् "। षकाराद्भवति यथा—" पूष्णः "। रेफाद्भवति यथा—" पूर्णा "। एते प्रत्ययनकाराः ऋषरेफेभ्य उत्तराः सन्तो णकारमापद्यन्ते। अयं तावत्सूत्रार्थो व्याकरण-विषयप्रदर्शनार्थं क्रियते ॥

(अ० भा०) ऋकारषकाररेफेभ्यः परो नकारः णकारमापद्यते समान-पदे। यथा—" नृणां नृपते पितॄणां सोमवताम् "। " पूष्णो हस्ताभ्याम् "। " पूर्णं च मे " ॥

## स्वरयवहकपैश्च ॥ ८५ ॥

(उ० भा०) स्वरैर्यकारवकारहकारैः कवर्गपवर्गाभ्यां च व्यवहितो नकारः ऋषरेभ्य उत्तरो णकारमापद्यते संहितायाम्। यथा—नृमनाः > " तृतीयमप्सु नृमणाः "। पुरीषवाहनः > " अग्ने पुरीषवाहणः "। प्रवाहनः > " विभूरसि प्रवाहणः "। ऋषरेभ्य इति किम्? " वन्हिरसि हव्यवाहनः "। समानपद इति किम्? " प्र नो यच्छत्वर्य्यमा " ॥

(अ० भा०) स्वरैः यकारवकारहकारैः कवर्गपवर्गाभ्यां च व्यस्तैः समस्तैर्वा व्यवहितो नकारः णत्वमेति। यथा क्रमेणोदाहरणानि—" तृतीयमप्सु नृमणा अजस्रम् "। " अग्नेः पुरीषवाहणः "। " विभूरसि प्रवाहणः "। ऋषरेभ्यः इत्येव। " वन्हिरसि हव्यवाहनः "। समानपदे किम्? प्र नः > " प्र नो यच्छत्वर्यमा " ॥

निषण्णाय रथवाहणमिन्द्र एणम्परिणीयते समिन्द्र ण उरुष्या णो रक्षा णः षू णः षु णः षु णासत्या स्वर्णास्थूरि णौ प्र ण आयूँषि ॥ ८६ ॥

(उ० भा०) निषण्णाय, रथवाहणम्, इन्द्र एणम्, परिणीयते, समिन्द्रणः, उरुष्याणः, रक्षाणः, षूणः, षुणः, षुणासत्या, स्वर्ण, अस्थूरि, णौ, प्र ण आयूँषि एते च णकारा निपात्यन्ते। यदत्र लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् । यथा निषण्णाय अत्र द्वयोर्नकारयोर्णत्वं निपात्यते। प्रथमस्य तवर्गे च इति निषेधः। उत्तरस्य तु नकारव्यवहितत्वात्। नकारश्च स्वरयवहरूपां मध्ये न पठ्यते। निषण्णाय यथा— "निषण्णाय स्वाहोत्थिताय"। रथवाहणं यथा—रथवाहनम्। थकारेण व्यवधानादप्राप्तिः, अतो निपात्यते। "रथवाहणँ हविरस्य नाम"। इन्द्र एणं यथा—इन्द्र एनम्। इत उत्तरमसमानपदत्वादप्राप्तं णत्वं निपात्यते। "इन्द्र एणं प्रथमो अध्यतिष्ठत्"। परिणीयते यथा—परि नीयते > "सो अध्वराय परिणीयते कविः"। समिन्द्र णः यथा— इन्द्र नः > "समिन्द्र णो मनसा नेषि गोभिः"। उरुष्याणः यथा— उरुष्या नः > "उरुष्या णो अघायतः समस्मात्"। रक्षा णः यथा— रक्ष नः > "रक्षा णो ब्रह्मणस्पते"। षूणः यथा—षूनः > "मोषूण इन्द्रात्र"। षुणः यथा—अभीषु नः > "अभीषु णः सखीनाम्"। षु णासत्या यथा—गोमदृषु नासत्या > "गोमदृषु णासत्या"। स्वर्ण यथा—स्वः नः > "स्वर्णघर्मः स्वाहा"। अस्थूरि णौ यथा— अस्थूरि नौ > "अस्थूरि णौ गार्हपत्यानि सन्तु"। प्र ण आयूँषि यथा—प्र नः आयूँषि > "प्र ण आयूँषि तारिषः"। आयूँषीति किम्" "भग प्र नो जनय गोभिः"॥

एते त्रयोदशनकारा णत्वमाप्नुवन्ति। क्रमेणोदाहरणानि—"शूकृताय स्वाहा निषण्णाय स्वाहा"। अत्रैकपदत्वेन सिद्धेऽपिपि तवर्गे चेति निषिद्धत्वात् पुनः प्रसूयते। "प्रस्थावद्रथवाहणम्"। अत्रापि थकारेण व्यवधा-

नादप्राप्तिः। अत एकपदत्वेऽपि निपात्यते। उत्तरत्रासमानपदार्थमारम्भः। " इन्द्र एणं प्रथमो अध्यतिष्ठत् "। " सो अध्वराय परिणीयते "। " समिन्द्र णो मनसा "। " उरुष्या णो अघायतस्समस्मात् "। " रक्षा णो ब्रह्मणस्पते "। " मो षू ण इन्द्रात्र "। " अभी षु णः सखीनाम् "। " गोमद् षु णासत्या "। " स्वर्ण धर्म स्वाहा "। " अस्थूरि णो गार्हपत्यानि सन्तु "। " प्र ण आयूंषि तारिषत् "। प्र ण आयूंषीति किम्? " प्र नो जीवातवे सुव "॥

## परि ण इति शाकटायनः ॥ ८७ ॥

**(उ० भा०) परि ण इति निपात्यते शाकटायनस्याचार्यस्य मतेन। यथा—परि नः > "परि णो रुद्रस्य हेतिः"। शाकटायन इति किम्? "परि नो रुद्रस्य हेतिः"॥**

(अ० भा०) एतन्निपात्यते। शाकटायनाचार्यग्रहणं विकल्पार्थम्। सोऽपि व्यवस्थितः काण्वादेर्भवति न माध्यन्दिनानामिति। यथा—" परि णो रुद्रस्य हेतिः "। शाकटायनः किम्? " परि नो रुद्रस्य हेतिः "॥

## प्र नेतिनुदातिहिनोमीनाम् ॥ ८८ ॥

**(उ० भा०) प्रपूर्वाणां नेति नुदाति हिनोमि एषां शब्दरूपाणां नकारो णकारमापद्यते संहितायाम्। अत्र नेतिनुदात्योर्धातुग्रहणम्। अतः सर्वप्रत्ययान्तयोर्भवति। हिनोतेस्तु विकरणनिर्देशाद्यत्र विकरणं तत्रैव भवति। नेति यथा—प्रनय > "प्रणय देवाव्यम्"। नुदाति यथा—प्रनुदानः > "अग्ने जातान् प्रणुदानः"। हिनोमि यथा—प्र हिनोमि > "क्रव्यादमग्निं प्रहिणोमि"॥**

(अ० भा०) प्रपूर्वाणामेषां नकारः णत्वमाप्नोति। अत्र नेति-नुदात्योरिति धात्वोर्ग्रहणम्। तेन सर्वप्रत्ययान्तत्वेऽपि भवति। हिनोतेर्विकरण-निर्देशात्तन्मात्रग्रहणमिति विवेकः। यथा—" यज्ञं प्रणय देवाव्यम् "। " अग्ने

जातान् प्रणुदानः"। "अग्निष्टाल्लोकात् प्रणुदात्यस्मात्"। "क्रव्यादमग्निं प्रहिणोमि दूरम्"॥

**प्रकृत्या पदान्तीयः ॥ ८९ ॥**

**(उ० भा०) पदान्तीयो नकारो हल् प्रकृत्या भवति। "समानपदे" इति प्राप्तिः। यथा—"पितॄन् हविषे अत्तवे"। "पूषन् तव व्रते वयम्"। "अक्रन् कर्म कर्मकृतः"॥**

(अ० भा०) पदान्तीयनकारः प्रकृत्या स्यात्। यथा—"अक्रन् कर्म"। समानपदेन प्राप्तस्यापवादः।

**निवनिनसः प्रपीनम् ॥ ९० ॥**

**(उ० भा०) नि, वनि, नसः, प्रपीनम्, एते नकाराः प्रकृत्या भवन्ति। "समानपदे" इति प्राप्तिः। नि यथा—"कृष्णा बभ्रु नीकाशा"। वनि यथा—"ब्रह्मवनि त्वा क्षत्रवनि"। नसः यथा—"वार्ध्रीनसस्ते मत्या अरण्याय"। प्रपीनं यथा—"अपाम्प्रपीनमग्न"।**

(अ० भा०) एषां नकारः प्रकृत्या स्यात्। नि यथा—"कृष्णा बभ्रु नीकाशाः"। वनि—"ब्रह्मवनित्वा क्षत्रवनि नसः वार्ध्रीनसस्ते"। प्रपीनाम्—"अपां प्रपीनमग्ने"। अत्राप्येकपदत्वेन प्राप्तस्यापवादः।

**श्रीमना इत्येके ॥ ९१ ॥**

**(उ० भा०) अयं च नकारः प्रकृत्या भवति एकेषामाचार्याणां मतेन। यथा—"श्रीमनाः शतपयाः"। एकेषामिति किम्? "श्रीमणाः शतपयाः"॥**

(अ० भा०) अयं नकारः प्रकृत्या स्यादिति एके आचार्याः मन्यन्ते। यथा देवश्रीः श्रीमनाश्शतपयाः। एके किम्? "देवश्रीः श्रीमणाश्शतपयाः"। इति काण्वपाठे णत्वमेव। एकशब्दोऽत्र एकदेशवाची॥

इन्द्राग्नी चित्रभानो वार्त्रघ्नन्दुष्वप्न्यं ध्रुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवाक्याश्चर्मम्नम् ॥ ९२ ॥

(उ० भा०) इन्द्राग्नी चित्रभानो वार्त्रघ्नं दुःष्वप्न्यम् ध्रुवयोनिः पुरोऽनुवाक्याभिः पुरोऽनुवाक्याः चर्मम्नं एते च नकाराः समानपद इति प्राप्तणकाराः प्रकृत्या भवन्ति । इन्द्राग्नी यथा—"इन्द्राग्न्योरुज्जितिम्"। चित्रभानो यथा—"इन्द्रायाहि चित्रभानो"। वार्त्रघ्नं यथा—"इन्द्रस्य वार्त्रघ्नमसि"। दुःष्वप्न्यं यथा—"अप दुःष्वप्न्यँ सुव"। ध्रुवयोनिर्यथा—"ध्रुवक्षितिर्ध्रुवयोनिः"। पुरोऽनुवाक्याभिः यथा—"ऋचः पुरोऽनुवाक्याभिः"। पुरोऽनुवाक्याः यथा—"पुरोऽनुवाक्या याज्याभिः"। चर्मम्नं यथा—"साध्येभ्यश्चर्मम्नम्" ॥

(अ० भा०) एषां नकारः प्रकृत्या स्यात् । समानपदेन प्राप्तस्यापवादः । यथा—इन्द्राग्नी आगतम् । इन्द्राग्न्योरुज्जितिम् । इन्द्रायाहि चित्रभानो । इन्द्रस्य वार्त्रघ्नमसि । अप दुष्वप्न्यं सुव । ध्रुवक्षितिर्ध्रुवयोनिः । पुरोऽनुवाक्याभिः पुरोऽनुवाक्याः । साध्येभ्यश्चर्मम्नम् ॥

तवर्गे च ॥ ९३ ॥

(उ० भा०) तवर्गे च प्रत्यये ऋषरेफेभ्य उत्तरो नकारः प्रकृत्या भवति । यथा—"तृम्पन्तु होत्राः"। "अवक्रन्देन तालु" ॥

(अ० भा०) ऋषरेभ्यः परः नकारः प्रकृत्या स्यात् तवर्गे परे यथा—तृम्पन्तु होत्राः । अक्रन्ददग्निः । अवक्रन्देन तालु । समानपदात्प्राप्तिः ॥

षादनन्तर ऋकारे ॥ ९४ ॥

(उ० भा०) षकारादनन्तरो नकार ऋकारे प्रत्यये प्रकृत्या भवति यथा—"उग्रस्त्वेष नृम्णाः" ॥

(अ० भा०) षकारादनन्तरनकारः प्रकृत्या स्यात् ऋकारे परे । यतो नञ्ज उग्रस्त्वेषनृम्णः ॥

शिलिसिवर्गमध्यमव्यवहितोऽपि ॥ ९५ ॥

(उ० भा०) शकारलकारसकारव्यवहितः। वर्गाश्च ते मध्यमाश्च वर्गमध्यमाः चटतवर्गाः। तैश्च व्यवहितो नकार ऋषरेभ्य उत्तरः प्रकृत्या भवति। शकारव्यवहितो यथा—"दृशानो रुक्मः"। "सम्राडसि कृशानुः"। लकारव्यवहितः यथा—"निर्ऋतिर्निर्ज्जल्येन"। सकारव्यवहितः यथा—"अपाँ रसेन वरुणः"। चवर्गव्यवहितः यथा—"प्राचीनं ज्योतिः"। "अन्तश्चरति रोचना"। टवर्गव्यवहितः यथा—"त्रैष्टुभेन छन्दसा"। "अनुष्टुभेन छन्दसा"। तवर्गव्यवहितो यथा—"रथिनो जयन्तु"। आर्त्नी इमे"। ननु शिलिसिवर्गमध्यमव्यवहितोऽपीत्यनेन सूत्रेण एतैर्वर्णैर्व्यवहित ऋषरेफेभ्य उत्तरो नकारः प्रकृत्या भवति समानपद इत्युक्तम्। तथा "ऋषरेफेभ्यो नकारो णकारँ समानपदे"। "स्वरयवहकपैश्च" इत्यनेन एतैर्वर्णैर्व्यवहितोऽपि नकारो णकारमापद्यते समानपदे इत्युक्तम्। एवं य एव स्वरयवहकपव्यतिरिक्ता वर्णास्त एव शिलिसिवर्गमध्यमाः,। अतोऽनेन सूत्रेण न प्रयोजनम्, एवन्तर्हि उभयथा लक्षणानुकथनं शिष्यबुद्धिव्युत्पादनार्थम् ॥

(अ० भा०) वर्गाश्च ते मध्यमाश्च वर्गमध्यमाः इति विग्रहः। शकारलकारसकारैः मध्यमैश्चट तवर्गैश्च व्यवहितः नकारो ऋषरेभ्यः परश्चापि प्रकृत्या-स्यात्। क्रमेणोदाहरणानि—शकारलकारसकारव्यवहिता यथा—दृशानो रुक्मः। निर्ऋतिर्निर्जजल्येन। अपां रसेन। चवर्गव्यवहितो यथा—प्राचीनं ज्योतिः। अन्तश्चरति रोचना। टवर्गव्यवहितो यथा—सविता रथेन तीर्थेन। आर्त्नी इमे विष्फुरन्ती। स्वरयवहकपैश्चेति नियमादेव सिद्धत्वात् आरम्भः किमर्थम्। उच्यते अनभिज्ञशिष्यप्रज्ञापनार्थत्वेन नियमादित्यदोषः ॥

दीर्घम् ॥ ९६ ॥

(उ० भा०) विसर्जनीय इत्युपक्रम्य द्वयोर्व्यञ्जनयोः सन्धौ ये लोपागमवर्णविकारास्ते प्रतिपादिताः। अधुना स्वरस्य व्यञ्जनेन सह सन्धौ

यः स्वरविकारः स उच्यते। ह्रस्वः स्वरो दीर्घं विकारमापद्यते। अधिकारसूत्रमेतत् ॥

(अ० भा०) ह्रस्वो दीर्घमापद्यते। अधिकारोऽयम्। इतः परं यदनुक्रमिष्यामः तत्र दीर्घः स्यादित्यधिक्रियत इत्यर्थः ॥

**अश्वरश्मिमतिसुमतिश्वसुतचारयघृणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदयघुष्यर्त्ताभ्यवताध्यर्चशक्तिपुरुशचि वकारे ॥ ९७ ॥**

(उ० भा०) अश्व रश्मि मति सुमति श्व सुत चारय घृणि सेदिम इन्द्रिय धारय चित्र भङ्गुर वयुन अश्वस्य हृदय घुष्य ऋत अभि अवत अधि अर्च शक्ति पुरु शचि एते ह्रस्वस्वरा वकारे प्रत्यये दीर्घमापद्यन्ते। अश्व यथा—"अश्वावतीं सोमावतीम्"। रश्मि यथा—"रश्मीवतीम्भास्वतीम्"। मति यथा—"प्रदेवाय मतीविदे"। सुमति यथा—"सुष्टुतिं सुमतीवृधः"। श्व यथा—"श्वाविद्धौमी"। सुत यथा—"विप्रजूतः सुतावतः"। चारय यथा—"समञ्जिश्चारया वृषन्"। घृणि यथा—"उष्ट्रो घृणीवान्"। सेदिम यथा—"देवानाँ सख्यमुपसेदिमा वयम्"। इन्द्रिय यथा—"इन्द्रियावान्मदिन्तमः"। धारय यथा—"बृहस्पते धारया वसूनि"। चित्र यथा—चित्रावसो स्वस्ति ते पारमशीय"। भङ्गुर यथा—"हन्तारम्भङ्गुरावताम्" वयुन यथा—"विहोत्रा दधे वयुनाविदेकः"। अश्वस्य यथा—"एकस्त्वष्टुरश्वस्या विशस्ता"। हृदय यथा—"उतापवक्ता हृदयाविधश्चित्"। घुष्य यथा—"परुष्परुरनुघुष्या विशस्त"। ऋत यथा—"ऋतावानम्महिषम्"। अभि यथा—"अभीवर्त्तः सविंशो वर्चो द्वाविंशः"। अवत यथा—"इदं मे प्रावता वचः"। अधि यथा—"अधीवासँय्या हिरण्यान्यस्मै"। अर्च यथा—"अर्चा विश्वानराय विश्वा भुवे"। शक्ति यथा—"कृच्छ्रे श्रितः शक्तीवन्तो गभीराः"। पुरु यथा—"इमा उ त्वा पुरूवसो" शचि यथा—"शचीवसो ॥

(अ० भा०) एते अश्वादयः पञ्चविंशति ह्रस्वाः दीर्घमापद्यन्ते । क्रमेणोदाहरणानि । अश्ववतीम् । अश्वावतीम् । रश्मिवतीम् । रश्मीवतीम् । प्रदेवाय मतीविदे । सुमती वृधः । श्वाविद्भौमी । विप्रजूतस्सुतावतः । समञ्जिञ्चारया वृषन् । उष्ट्रो घृणीवान् । देवानां सख्यमुपसेदिमा वयम् । इन्द्रियावान्मदिन्तमः । धारया वसूनि । चित्रावसो । स्वस्ति ते भङ्गुरावताम् । वयुनाविदेकः । अश्वस्याविशस्ता । परेषामिदम् । हृदयाविधश्वित् । परुष्परुरनुघुष्या विशस्त । इदमपि परेषाम् । ऋतावानं महिषम् । अभीवर्त्तस्सविंशः । इदं मे प्रावता वचः । अधीवासं या हिरण्यान्यस्मै । इदमपि प्रकृतिदीर्घं वक्ष्यते । अर्चा विश्वानराय । शक्तीवन्तो गभीराः । परकीयमिदम् । इमा उ त्वा पुरूवसो । शचीवसो । परेषामिदम् ॥

**नाश्ववद्धिरण्यात् ॥ ९८ ॥**

**(उ० भा०) अश्ववदित्येतत्पदं न दीर्घमापद्यते हिरण्यशब्दाद्यदि परं भवति । यथा—"आपवस्व हिरण्यवदश्ववत्" ॥**

हिरण्यशब्दात् परमश्वपदं न दीर्घमापद्यते । वकारो यथा—आपवस्व हिरण्यवदश्ववत् । परकीयमिदम् । अश्वेति पूर्वापवादः ॥

**अभिविख्येष वीर विश्व वत्स वृत्र वाजयन्तेषु ॥ ९९ ॥**

**(उ० भा०) अभीत्येतत्पदं त्रिख्येषं वीर विश्व वत्स वृत्र वाजयन्त इत्येतेषु न दीर्घमापद्यते । विख्येषं यथा—"स्वरभिविख्येषम्" । वीर यथा—"अभिवीरो अभिसत्वा सहोजाः" । विश्व यथा—"इमां वाचमभि विश्वे गृणन्तः" । वत्स यथा—"अभि वत्सन्न स्वसरेषु धेनवः" । वृत्र यथा—"अभि वृत्रँ वर्धमानं पियारुम्" । वाजयन्तः यथा—"अश्याम वाजमभि वाजयन्तः" ॥**

(अ० भा०) अभीति पदं विख्येषमित्यादिषु पदेषु परेषु न दीर्घमापद्यते । पूर्वापवादः । स्वरभिविख्येषम् । अभि वीरो अभि सत्वा । इमां वाचमभि विश्वे । अभि वत्सन्न स्वसरेषु धेनवः । अभिवृत्रं वर्धमानम् । अभिवाजयन्तः ॥

## अश्वस्य वाजिन इति च ॥ १०० ॥

(उ० भा०) अश्वस्य वाजिन इति च द्विपदस्य न पूर्वपदान्तो दीर्घमापद्यते। यथा—"अश्वस्य वाजिनस्त्वचि सिमाः" ॥

(अ० भा०) अश्वस्येति पदं न दीर्घमाप्नोति वाजिनशब्दे परे। यथा—अश्वस्य वाजिनस्त्वचि सिमाः ॥

## विश्व सहभुवपुषवसुषु ॥ १०१ ॥

(उ० भा०) विश्व इत्येतत् पदं सह इत्येतेषु प्रत्ययेषु दीर्घमापद्यते। सह यथा—"विश्वासाहमवसे नूतनाय"। भुव यथा—"अर्चा विश्वा नराय विश्वाभुवे"। पुष यथा—"विश्वापुषँ रयिम्"। वसु यथा—"गन्धर्वस्त्वा विश्वावसुः" ॥

(अ० भा०) विश्वपदं दीर्घमेति सहादिपरे अपूर्वविधिरयम्। यथा—विश्वासाहमवसे। विश्वानराय विश्वाभुवे। विश्वापुषं रयिम्। परकीयमिदम्। गन्धर्वस्त्वा विश्वावसुः ॥

## नरहामित्रेषु च ॥ १०२ ॥

(उ० भा०) नरहामित्रेषु च प्रत्ययेषु विश्वशब्दो दीर्घमापद्यते। नर यथा—"अर्चा विश्वानराय"। हा यथा—"विश्वाहा शर्म यच्छतु"। मित्र यथा—"विश्वामित्र ऋषिः"। पृथग्योगकरणं शिष्याणामवग्रहत्वव्युदासप्रज्ञप्त्यर्थम्। अर्थव्याख्यानार्थं त्ववयवदर्शनम् ॥

(अ० भा०) एषु विश्वं पदं दीर्घमापद्यते। यथा—विश्वानराय। विश्वाहा भेषजी। विश्वामित्र ऋषिः। पृथग्योगकरणं अनवगृह्यप्रज्ञप्त्यर्थम् ॥

## तिष्ठाद्युदात्तम् ॥ १०३ ॥

(उ० भा०) तिष्ठेत्येतत्पदं दीर्घमापद्यते यद्याद्युदात्तं भवति।

यथा—"तिष्ठा देवो न सविता"। "तिष्ठा रथमधि यं वज्रहस्ता"। आद्युदात्तमिति किम्? "आतिष्ठ वृत्रहन् रथम्" ॥

(अ० भा०) तिष्ठेति पदं दीर्घमापद्यते आद्युदात्तं चेद्भवति तिष्ठ देवः ऊतये तिष्ठा देवो न सविता तिष्ठा रथमधि यंवज्रहस्ता। आद्युदात्तं किम्? आतिष्ठ वृत्रहन् रथम् ॥

प्र वणश्रृंगयासेषु ॥ १०४ ॥

(उ० भा०) प्र इत्येतत् पदं वन श्रृङ्ग यास इत्येतेषु प्रत्ययेषु दीर्घमापद्यते। वन यथा—"प्रा वणेभिः सजोषसः"। श्रृङ्ग यथा—"प्रा श्रृङ्गा माहेन्द्राः"। यास यथा—"प्रा यासाय स्वाहा" ॥

(अ० भा०) प्र इत्येतत्पदं वनश्रृङ्गयासेषु परेषु दीर्घमापद्यते। यथा—प्रावणेभिस्सजोषसः। प्रा श्रृङ्गा महेन्द्राः। प्रा यासाय स्वाहा ॥

नि वारहारयोरनवग्रहे ॥ १०५ ॥

(उ० भा०) नि इत्ययमुपसर्गो वारहारयोः प्रत्यययोर्दीर्घमापद्यते अवग्रहवर्जिते। वार यथा—"नीवाराश्च मे"। हार यथा—"नीहारेण प्रावृता"। अवयवव्युत्पत्यर्थं वचनम्। अनवग्रहाणां हि मध्ये वक्ष्यति ॥

(अ० भा०) निशब्दो दीर्घमापद्यते वारहारयोः परयोः। अनवग्रहे गम्यमाने। यथा—नीवाराश्च मे। नीहारेण प्रावृताः। अनवग्रहे किम्? निहारमिति निहारम्। निहारं निहरामि ते। निहारं निहरासि मे स्वाहा ॥

नाव नयामि ॥ १०६ ॥

(उ० भा०) अवेत्येतत्पदं न दीर्घमापद्यते नयामीत्येतस्मिन् प्रत्यये। यथा—"अव नयामि वैष्णवान्"। धारयामेत्येतस्मिन् सूत्रेऽवशब्दस्य नकारे दीर्घत्वं वक्ष्यति। तस्यायं पुरस्तादपवादः ॥

(अ० भा०) अवेति पदं न दीर्घमेति नयामिपदे परे। यथा—अवनयामि वैष्णवान्। अनन्तरसूत्रेऽवशब्दस्य नकारे परे दीर्घं वक्ष्यति। तस्यायं पुरस्तादपवादः॥

**धारयाम योजाव सचस्व नुद मो षु जयतोरुष्य रक्ष यज यच्छ मत्सथ पिपृत गायता तु येन नकारे ॥ १०७ ॥**

**(उ० भा०) धारयाम योज अव सचस्व नुद मो षु जयत उरुष्य रक्ष यज यच्छ मत्सथ पिपृत गायत आ तु येन एते ह्रस्वा नकारे प्रत्यये दीर्घमापद्यन्ते। धारयाम यथा—"धारयामा नमोभिः"। योज यथा—"योजा न्विन्द्र ते हरी"। अव यथा—"अवा नो देव्या धिया"। सचस्व यथा—"सचस्वा नः स्वस्तये"। नुद यथा—"अग्ने जातान् प्र णुदा नः"। मो षु यथा—"मो षू ण इन्द्रात्र पृत्सु देवैः"। मो इति किम्? "ऊर्ध्व ऊ षु ण ऊतये"। जयत यथा—"प्रेता जयता नरः"। उरुष्य यथा—"उरुष्या णो अघायतः"। रक्ष यथा—"रक्षा णो ब्रह्मणस्पते"। यज यथा—"यजा नो मित्रावरुणा"। यच्छ यथा—"यच्छा नः शर्म सप्रथाः"। मत्सथ यथा—"अपि यथा युवानो मत्सथा नः"। पिपृत यथा—"निरंहसः पिपृता निरवद्यात्"। गायत यथा—"उपास्मै गायता नरः"। आ तु यथा—"आ तू न इन्द्र वृत्रहन्"। येन यथा—"येना नः पूर्वे पितरः"॥**

(अ० भा०) धारयामेत्यादिषोडशपदानि दीर्घमापद्यन्ते नकारे परे। यथा—धारयामा नमोभिः। योजा नु। अवा नो देव्या। सचस्वा नः स्वस्तये। प्र णुदा नः सपत्नान्। मो षू ण इन्द्र। मोष्विति किम्? ऊर्ध्व ऊ षु णः। प्रेता जयता नरः। उरुष्या णो अघायतः। रक्षा णो अप्रयुच्छन्। रक्षा णो ब्रह्मणस्पते। यजा नो मित्रावरुणा। यच्छा नः शर्म। अपि यथा युवानो मत्सथा नः। पिपृता निरवद्यात्। उपास्मै गायता नरः। आ तू न इन्द्र वृत्रहन्। येना नः पूर्वे॥

भव च ॥ १०८ ॥

(उ० भा०) भवेत्ययं ह्रस्वो दीर्घमापद्यते नकारे प्रत्यये । यथा—"भवा नः सप्रथस्तमः सखा वृधे"। पृथग्योगकरणमुत्तरार्थम् ॥

(अ० भा०) भवपदं दीर्घमाप्नोति नकारे परे। भवा नस्सप्रथस्तमस्सखा वृधे। पृथग्योगकरणं उत्तरार्थम् ॥

सचावरूथ्यवाजस्यपायुषु च ॥ १०९ ॥

(उ० भा०) सचा वरूथ्य वाजस्य पायुः एषु च प्रत्ययेषु भवेत्येतत्पदं दीर्घमापद्यते। सचा यथा—"इन्द्र प्राशूभवा सचा"। वरूथ्य यथा—"उत त्राता शिवो भवा वरूथ्यः"। वाजस्य यथा—"भवा वाजस्य सङ्गते"। पायुः यथा—"भवा पायुर्विशो अस्या अदब्धः" ॥

(अ० भा०) एषु भवशब्दः दीर्घमेति । यथा—इन्द्रप्राशूर्भवा सचा । उत त्राता शिवो भवा वरूथ्यः । भवा वाजस्य सङ्गथे । भवा पायुर्विशो अस्याः ॥

अपृक्तः सौ ॥ ११० ॥

(उ० भा०) अपृक्तग्रहणेनेह उकारो गृह्यते नाकारो दीर्घविधानात्। अपृक्त उकारो दीर्घमापद्यते सुप्रत्यये। यथा—उ सु न > "ऊषुण ऊर्ध्वः"। "गोमदू षु णासत्या" ॥

(अ० भा०) अपृक्तग्रहणेन इह उकारोऽभिधीयते। अपृक्त उकारः दीर्घमापद्यते सुशब्दे परे । यथा—ऊर्ध्व ऊ षु णः । गोमदू षु णासत्या । सौ किम्? उदु तिष्ठ ॥

रथि तकारनकारयोः ॥ १११ ॥

(उ० भा०) रथीत्येतत् पदं तकारनकारयोः प्रत्यययोर्दीर्घमापद्यते। यथा—"तथीतमँ रथीनाम्" ॥

(अ० भा०) रथिपदं दीर्घमेति तकारनकारयोः परयोः। यथा—रथीतमं रथीनां वाजानाम् ॥

**अथोदारिथ शोच पनय सादयर्जु वृष शत्रु सलक्ष्म घाघारात्यृत भवत यकारे ॥ ११२ ॥**

(उ० भा०) अथ उदारिथ शोच पनय सादय ऋजु वृष शत्रु सलक्ष्म घ अघ अराति ऋत भवत एते ह्रस्वा यकारे प्रत्यये दीर्घमापद्यन्ते। अथ यथा—"अवाधमँ वि मध्यमँ श्रथाय"। उदारिथ यथा—"अस्माग्नोनेरुदारिथा यज"। शोच यथा—"बृहच्छोचा यविष्ठ्य"। पनय यथा—"देवत्रा पनया युजम्"। सादय यथा—"सादया यज्ञं सुकृतस्य योनौ"। ऋजु यथा—"देवानां भद्रा सुमतिर्ऋजूयताम्"। वृष यथा—"वृषायमाणो वृषभस्तुराषाट्"। शत्रु यथा—"शत्रूयतो हन्ता"। सलक्ष्म यथा—"सलक्ष्मा यद्विषुरूपं भवाति"। घ यथा—"आ घा ये अग्निम्"। अघ यथा—"अघायतः समस्मात्"। अराति यथा—"अरातीयतो हन्ता"। ऋत यथा—"मधु वाता ऋतायते"। भवत यथा—"अर्वाञ्चो अद्य भवता यजत्राः" ॥

(अ० भा०) चतुर्दशैतानि पदानि दीर्घाणि स्युः यकारे परे। यथा—वि मध्यमं श्रथाय। उदारिथा यजे। बृहच्छोचा यविष्ठ्य। पनया युजम्। सादया यज्ञं सुकृतस्य। सुमति ऋजूयताम्। वृषायमाण वृषभः। शत्रूयतो हन्ता। सलक्ष्मा यद्विषु रूपम्। आ घा ये अग्निमिन्धते। उरुष्या णो अघायतः। अरातीयतो हन्ता। मधु वाता ऋतायते। अद्य भवता यजत्राः ॥

**व वृधवृजोः ॥ ११३ ॥**

(उ० भा०) व इत्ययं ह्रस्वो वृधवृजोः प्रत्यययोर्दीर्घमापद्यते वृध यथा—"अस्मद्द्रुग्वावृधे"। वृज यथा—"प्र वावृजे" ॥

(अ० भा०) वकारः दीर्घः स्यात् वृधव्रजयोः परयोः। यथा—अस्मद्‌द्रुग्वावृधे। प्र वावृजे॥

**अद्यतंहकारचकारभवतवृणीमहेदेवेषु॥ ११४॥**

(उ० भा०) अद्य इत्ययं ह्रस्वस्तं हकार चकार भवत वृणीमहे देव इत्येतेषु प्रत्ययेषु दीर्घमापद्यते। तम् यथा—"अद्या तमस्य महिमानम्"। हकार यथा—"अद्या हुवेम"। चकार यथा—"हवमद्या च मृडय"। भवत यथा—"अद्या भवता यजत्राः"। वृणीमहे यथा—"तद्देवानामवो अद्या वृणीमहे"। देव यथा—"अद्या देवाः"॥

(अ० भा०) अद्येति पदं दीर्घमापद्यते तमादिपञ्चसु परेषु। यथा—अद्या तमस्य महिमानम्। परकीयमेतत्। वाजे अद्या हुवेम। अद्या च मृळय। अद्या भवता यजत्राः। अवो अद्या वृणिमहे। अद्या देवाः॥

**न होतरि॥ ११५॥**

(उ० भा०) होतृशब्दे प्रत्यये अद्येत्ययं ह्रस्वो न दीर्घमापद्यते। अधस्तनसूत्रेण प्राप्तस्य निषेधः। यथा—"तमद्य होतरिषितः"। "अग्निमद्य होतारमवृणीतायम्"॥

(अ० भा०) अद्येति पदं होतृशब्दे परे न दीर्घं स्यात्। तमद्य होतरिषितः। अग्निमद्य होताराम्। पूर्वसूत्रप्राप्तस्यापवादः॥

**श्रृणुत त्विषि ध्रजि भवत पिबेत स्म तिष्ठ रक्षा मकारे॥ ११६॥**

(उ० भा०) श्रृणुत त्विषि ध्रजि भवत पिब इत स्म तिष्ठ रक्ष एते ह्रस्वा मकारे प्रत्यये दीर्घमापद्यन्ते। श्रृणुत यथा—"श्रृणुता म इमं हवम्"। त्विषि यथा—"शष्पिञ्जराय त्विषीमते"। ध्रजि यथा—"चित्तं वात इव ध्रजीमान्"। भवत यथा—"आदित्यासो भवता

मृडयन्तः"। पिब यथा—"पिबा मित्रस्य धामभिः"। इत यथा—"इता मरुतो अश्विना"। स्म यथा—"देवासो हि ष्मा मनवे समन्यवः"। तिष्ठ यथा—"शत्रूयतामभि तिष्ठा महांसि"। तिष्ठाद्युदात्तं इति आद्युदात्तस्य दीर्घाभाव उक्तः। अनुदात्तार्थं आरम्भः। रक्ष यथा—"रक्षा माकिर्नो अघशंस ईशत"॥

(अ० भा०) शृणुतादिनवपदानि दीर्घाणि स्युः मकारे परे। यथा—शृणुता म इमं हवम्। शष्पिञ्जराय त्विषीमते। वात इव ध्रजीमान्। आदित्यासो भवता मृळयन्तः। पिबा मित्रस्य धामभिः। इता मरुतो अश्विना। देवासो हि ष्मा मनवे समन्यवः। परकीयमेतत्। शत्रूयतामभि तिष्ठा महांसि। तिष्ठाद्युदात्तमित्यस्याप्राप्तेः अयमारम्भः। रक्षा माकिर्नः॥

## विश्वदेव्यसोमौ वत्याम् ॥ ११७ ॥

(उ० भा०) विश्वदेव्यसोमावेतौ ह्रस्वौ वतिप्रत्यये दीर्घमापद्येते। विश्वदेव्य यथा—"अदितिष्ट्वा देवी विश्वदेव्यावती"। सोम यथा—"अश्वावतीं सोमावतीम्"। वत्यामिति किम्? "पितॄणाँ सोमवताम्"॥

(अ० भा०) विश्वदेव्यसोमशब्दौ दीर्घौ स्याताम् वतिशब्दे परे। यथा—अदितिष्ट्वा देवी विश्वदेव्यावती। अश्वावतीं सोमावतीम्। वत्यामिति स्त्रीलिङ्गनिर्देशः किम्? लिङ्गान्तरे मा भूदिति। यथा—पितॄणां सोमवताम्॥

## उष महोभिर्नक्तेमीकारौकारौकारनकारेभ्यः ॥ ११८ ॥

(उ० भा०) उष इत्ययं ह्रस्वो दीर्घमापद्यते महोभिः नक्त ईम् ईकार-एकार-औकार-नकारेभ्यः परश्चेद्भवति। महोभिः यथा—"प्रथमाना-महोभिः उषासानक्ता बृहती"। नक्त यथा—"नक्तोषासा समनसा"। ईम् यथा—"प्रति धेनुमिवायतीमुषासम्"। ईकारात् यथा—"देवी

**उषासानक्ता"। एकारात् यथा—"यजते उपाके उषासानक्ता"। औकारात् यथा—"दिव्येन योना उषासानक्ता"। नकारात् यथा—"अश्वावतीर्गोमतीर्न उषासः"। एतेभ्यः पर इति किम्? "समिद्ध इन्द्र उषसाम्" ॥**

(अ० भा०) महोभिः—नक्ता-ई-ईकारैकारौकारेभ्यः पर उषशब्दः दीर्घः स्यात्। यथा—प्रथमाना महोभिः उषासानक्ता बृहती। नक्तोषासा समनसा। प्रतिधेनुमिवायतीमुषासम्। देवी उषासानक्ता। यजते उपाके उषासानक्ता। दिव्येन येना उषासानक्ता। अश्वावतीर्गोमतीर्न उषासः। परकीयमेतत्। एभ्य इति किम्? समिद्ध इन्द्र उषसामनीके ॥

## पूरुषोऽवसाने ॥ ११९ ॥

**(उ० भा०) पूरुष इति दीर्घो निपात्यते अवसाने चेद्भवति। यथा—"न स रिष्याति पूरुषः"। अवसान इति किम्? "पुरुष एव" ॥**

(अ० भा०) अवसाने वर्तमानः पुरुषशब्दः दीर्घः स्यात्। न सरिष्याति पूरुषः। यत्सनवथ पूरुषम्। पर्वतेभ्यः किं पूरुषम्। अवसाने किम्? यथेह पुरुषोऽसत्। पुरुष एवेदं सर्वम् ॥

## पूष्णोजहीमस्तेष्वत्र ॥ १२० ॥

**(उ० भा०) अत्रेत्ययं ह्रस्वो दीर्घमापद्यते पूष्णः जहीमः ते इत्येतेषु प्रत्ययेषु। पूष्णः यथा—"अत्रा पूष्णः"। जहीमः यथा—"अत्रा जहीमो शिवा ये"। ते यथा—"अत्रा ते रूपमुत्तमम्" ॥**

(अ० भा०) अत्रेतिपदं दीर्घः स्यात् पूषादिषु परेषु। यथा—अत्रा पूष्णः। अत्रा जहीमो शिवा ये। अत्रा ते रूपमुत्तमम् ॥

नरस्सप्तऋषीन्नस्तआहुर्नियुद्भिषु यत्र ॥ १२१ ॥

(उ० भा०) नरः सप्त ऋषीन् नः त आहुः नियुद्भिः एतेषु प्रत्ययेषु यत्रेत्ययं ह्रस्वो दीर्घमापद्यते। नरः यथा—"यत्रा नरः सश्च वि च द्रवन्ति"। सप्तऋषीन्यथा—"यत्रा सप्तऋषीन् परः"। नः यथा—यत्रा नश्चक्रा जरसं तनूनाम्"। त आहुः यथा—"यत्रा त आहुः परमं जनित्रम्"। नियुद्भिः यथा—"यत्रा नियुद्भिः सचसे शिवाभिः"॥

(अ० भा०) यत्रेति पदं दीर्घं स्यात् नरादिपञ्चसु परेषु। यत्रा नरस्सञ्च वि च द्रवन्ति। यत्रा सप्त ऋषीन्। यत्रा नश्चक्रा। यत्रा त आहुः। यत्रा नियुद्भिः। एषु किम्? यत्र विश्वं भवति॥

अभिमाति पृतनासु सपत्न धूर्विश्व समत्सु पृतना व्रातेभ्यः सहेः॥ १२२ ॥

(उ० भा०) अभिमाति पृतनासु सपत्न धूः विश्व समत्सु पृतना व्रात इत्येतेभ्य उत्तरस्य सहेर्ह्रस्वो दीर्घमापद्यते। अभिमाति यथा—"सँवृष्ण्यान्यभिमातिसाहः"। पृतनासु यथा—"जेतारमग्निं पृतनासु सासहिम्"। सपत्न यथा—"सिंह्यसि सपत्नसाही"। धूः यथा—"उस्रावेतं धूर्षाहौ"। विश्वे यथा—"विश्वासाऽमवसे नूतनाय"। समत्सु यथा—"येना समत्सु सासहः"। पृतना यथा—"पृतनाषाह्याय च"। व्रात यथा—"सतो वीरा उरवो व्रातसाहाः"॥

(अ० भा०) अभिमात्यादिअष्टभ्यः परस्य सहेर्धातोः ह्रस्वो दीर्घमापद्यते। यथा—संवृष्ण्यान्यभिमातिषाहः। जेतारमग्निं पृतनासु सासहिम्। सिंह्यसि सपत्नसाही देवेभ्यः। उस्रावेतं धूर्षाहौ। परकीयमेतत्। विश्वासाहमवसे। येना समत्सु सासहः। पृतनाषाह्याय च। सतो वीरा उरवो व्रातसाहाः॥

उक्थाच्च शसेः॥ १२३ ॥

(उ० भा०) उक्थशब्दात्परस्य शसेर्धातोर्ह्रस्वो दीर्घमापद्यते। यथा—उक्थशसः >"उक्थशासश्चरन्ति"॥

(अ० भा०) उक्थशब्दात्परस्य शसेर्धातोः ह्रस्वः दीर्घः स्यात्। यथा—उक्थशासश्चरन्ति।

एवाच्छचक्रमाथ ॥ १२४ ॥

(उ० भा०) एव अच्छ चक्रम अथ एते ह्रस्वा व्यञ्जनमात्रे दीर्घमापद्यन्ते। एव यथा—"एवा नो दूर्वे प्रतनु"। अच्छ यथा—"गिरिशाच्छा वदामसि"। चक्रम यथा—"यदेनश्चकृमा वयम्"। अथ यथा—"अथा मन्दस्व जुजुषाणः"॥

(अ० भा०) एव अच्छ चक्रम अथ एतानि पदानि दीर्घाणि स्युः व्यञ्जने परे। यथा—एवा नो दूर्वे। अच्छा वदामसि। चकृमा वयम्। अथा वयमादित्य। एवशब्दः अत्र पदादिरेव इति ज्ञापयति सूत्रादित्वकरणेन। तेन नेह। तदेव शुक्रं स एव जातः। इत्यादौ। उपमार्थो वा अत्र एवशब्दः विवक्षितः। तदर्थसम्भवात्। तदेव शुक्रमित्यादौ अवधारणार्थत्वेन तदभावादिति विशेषोऽवसेयः॥

विद्मासौत्रामण्याम् ॥ १२५ ॥

(उ० भा०) विद्म इत्ययं ह्रस्वो दीर्घमापद्यते सौत्रामणीमन्त्रं मुक्त्वा। यथा—"विद्मा ते अग्ने"। असौत्रामण्यामिति किम्? "यांश्च विद्म याँ उ च न प्रविद्म"॥

(अ० भा०) विद्मेति पदं दीर्घं स्यात् व्यञ्जने परे सौत्रामणीमन्त्रान्वर्जयित्वा। यथा—विद्मा ते अग्ने। असौत्रामण्यामिति किम्? इह यांश्च विद्म यां उ च न प्रविद्म। अयं च मन्त्रः सौत्रामण्यां विनियुक्तः॥

अधायत्स्मग्नावायुषु ॥ १२६ ॥

(उ० भा०) अध इत्ययं ह्रस्वो व्यञ्जनमात्रे दीर्घमापद्यते। यथा—"अधा सपत्नानिन्द्राग्नी मे"। यत् स्म ग्ना वायुः इत्येतेषु प्रत्ययेषु न दीर्घमापद्यते। यत् यथा—"अमुत्र भूयादध यद्यमस्य"। स्म यथा—"अध स्म ते व्रजनम्"। ग्ना यथा—"रुद्रो अध ग्नाः"। वायुम् यथा—"अध वायुं नियुतः"। अयत्स्मग्नावायुष्विति किम्? "अधा यथा नः पितरः"॥

(अ० भा०) अधेति पदं दीर्घं स्यात् व्यञ्जनमात्रे परे। यत्स्मग्नावायुषु परेषु न भवति। यथा—अधा यथा नः। अधा ह्यग्ने। अधा सपत्नानिन्द्राग्नी मे। अयत्स्मग्नावायुष्विति किम्? अमुत्र भूयादध यद्यमस्य। अधस्म ते व्रजनम्। रुद्रो अध ग्नाः पूषाभगः। अध वायुं नियुतः॥

पूर्वो द्वन्द्वेष्ववायुषु ॥ १२७ ॥

(उ० भा०) द्वन्द्वेषु समासेषु वायुरहितेषु पूर्वः पदान्तो दीर्घमापद्यते। यथा—"अग्नीषोमौ"। "मित्रावरुणौ"। "इन्द्राबृहस्पती"। द्वन्द्वेष्विति किम्? "अवीरहणौ ब्रह्मचोदनौ"। अवायुष्विति किम्? "इन्द्रवायुभ्यान्त्वा"॥

(अ० भा०) वायुशब्दवर्जितेषु द्वन्द्वसमासेषु पूर्वपदं दीर्घं स्यात्। यथा—अग्नीषोमयोरुज्जितिम्। अग्नीषोमौ तमपनुदताम्। मित्रावरुणौ त्वोत्तरतः। इन्द्राबृहस्पतिभ्यां त्वा॥

हरि शयेत्येके ॥ १२८ ॥

(उ० भा०) हरि इत्यस्य एके आचार्या दीर्घमिच्छन्ति शयप्रत्यये। यथा—हरि शया >"हरीशया"। एक एति किम्? "या ते अग्ने हरि शया"॥

(अ० भा०) एके आचार्याः हरिशब्दं दीर्घं मन्यन्ते शयशब्दे परे। या ते अग्ने हरीशया तनूः। एकशब्दोऽत्र मुख्यपरः। एके मुख्यान्यकेवलाः इत्यभिधानात्। तथाच प्रथमशाखिनां काण्वानां दीर्घपाठः अन्येषां ह्रस्व इत्यर्थः ॥

पिबा सोमं पिबा सुतस्य स्था मयोभुवो नू रणे शमीष्व मामहानो मामहन्तामशीतम रीरिषो रीरिषत यामयन्ति हि ष्मा ते वर्धया रयिं श्रुधी हवञ्चरा सोम सूयवसिनी श्रोता ग्रावाणो धर्षा मानुषः पाथा दिवो युक्ष्वा हि गमयातमः सिञ्चता सुतम्परोवाप उक्था शस्त्राण्यक्ता हवींष्याच्या जानु क्षामा रेरिहत् क्षामा भिन्दन्तो रुहेमा स्वस्तये जनयथा च धारयाम पितरा मृधो बोधा मे विचृता बन्धमवता हवेषु श्रृणुधी गिरो रक्षा तोकञ्चर्षणीसहाञ्चर्षणीधृतो येना समत्सु वनेमा त ऋध्यामा ते शिक्षा सखिभ्यस्तत्रा रथन्दीया रथेनेता जयत वर्धया त्वं प्रब्रवामा घृतस्याजगन्था परस्या ररिमा हि पुरो तता प्लीहाकर्णशुण्ठाकर्णौ प्रकृतिदीर्घावित्येके नी काशा अनूकाशेन चक्राजरसम्मिथूकस्तरता सखायः सासह्वानपामार्गोभयादत ऋतीषहमभीषु सुष्टरीमा जुषाणा यजा देवान् येना पावकाश्चायन्तो यदी सरमा स्वदया सुजिह्व निषद्या दधिष्व सदतना नणिष्टन भरा चिकित्वाँश्चिकित्सागविष्टाववादददद्द्रक्षा चायुनक्सृजा रराणः सादन्यमिति ज ॥ १२९ ॥

(उ० भा०) पिबा सोमम्, पिबा सुतस्य, स्था मयोभुवः, नू रणे, शमीष्व, मामहानः, मामहन्ताम्, अशीतम, रीरिषः, रीरिषत, यामयन्ति,

हि ष्मा ते, वर्धया रयिम्, श्रुधी हवम्, चरा सोम, सूयवसिनी, श्रोता ग्रावाणः, धर्षा मानुषः, पाथा दिवः, युक्ष्वा हि, गमयातमः, सिश्चता सुतम्, परीवापः, उक्था शस्त्राणि, अत्ता हवींषि, आच्या जानु, क्षामा रेरिहत्, क्षामा भिन्दन्तः, रुहेमा स्वस्तये, जनयथा च, धारयाम, पितरा मृधः, बोधा मे, विचृता बन्धम्, अवता हवेषु, शृणुधी गिरः, रक्षा तोकम्, चर्षणीसहाम्, चर्षणीधृतः, येना समत्सु, वनेमा ते, ऋध्यामा ते, शिक्षा सखिभ्यः, तत्रा रथम्, दीया रथेन, इता जहत, वर्धया त्वम्, प्रब्रवामा घृतस्य, आजगन्था परस्याः, ररिमा हि, पुरी तता, प्लीहाकर्णः, शुण्ठाकर्णः, नीकाशाः, अनूकाशेन, चक्राजरसम्, मिथूकः, तरता सखायः, सासह्वान्, अपामार्गः, उभयादतः, ऋतीषहम्, अभीषु, सुष्टरीमा जुषाणा, यजा देवान्, येना पावक, अश्वायन्तः, यदी सरमा, स्वदया सुजिह्व, निषद्या दधिष्व, सदतना रणिष्टन, भरा चिकित्वान्, चिकित्सागविष्टौ, अवादहत्, रक्षा च, आयुनक्सृजा रराणः, सादन्यम्, एते ह्रस्वा दीर्घमापद्यन्ते। पिबा सोमं यथा—"पिबा सोमँ शतक्रतो"। "पिबा सोममनुष्वधं मदाय"। पिब सुतस्य यथा—"पिबा सुतस्यान्धसो मदाय"। स्थ मयोभुवः यथा—"आपो हि ष्ठा मयोभुवः"। नु रणे यथा—"तूर्वन्नयामन्नेतशस्य नू रणे"। शमिष्व यथा—"हविः शमीष्व"। ममहानः यथा—"समिद्धे अग्नावधि मामहानः"। ममहन्तां यथा—"तन्नो मित्रो वरुणो मामहन्ताम्"। अशितम यथा—"अग्ने दब्धायोऽशीतम"। रिरिषः यथा—"मा नो अश्वेषु रीरिषः"। रिरिषत यथा—"मा नो मध्या रीरिषतायुः"। यमयन्ति यथा—"प्रिया देवेष्वायामयन्ति"। हि स्म ते यथा—"अस्ति हि ष्मा ते"। हीति किम्? "अध स्म ते व्रजनम्"। वर्धय रयिं यथा—"अथा नो वर्धया रयिम्"। श्रुधि हवं यथा—"इमं मे वरुण श्रुधी हवम्"। चर सोम यथा—"प्रचरा सोम दुर्यान्"। श्रोत ग्रावाणः यथा—"श्रोता ग्रावाणो विदुषो न यज्ञम्"। धर्ष मानुषः यथा—"मुञ्चामि धर्षा मानुषः"। पाथ दिवः यथा—"पाथा दिवो वि महसः"। युक्ष्व हि यथा—"युक्ष्वा हि केशिना हरी"। गमय तमः यथा—"अधरं गमया तमः"। सिश्चत

यथा—"परीतो षिञ्चता सुतम्"। परि वापः यथा—"परी वापः पयोदधि"। उक्थ शस्त्राणि यथा—"छन्दोभिरुक्था शस्त्राणि"। अत्त हवींषि यथा—"अत्ता हवींषि प्रयतानि बर्हिषि"। आच्य जानु यथा—"आच्या जानु दक्षिणतः"। क्षाम रेरिहत् यथा—"क्षामा रेरिहद्वीरुधः"। क्षाम भिन्दन्तः यथा—"क्षामा भिन्दन्तो अरुणीः"। रुहेम स्वस्तये यथा—"अस्रवन्तीमा रुहेमा स्वस्तये"। जनयथ च नः यथा—"आपो जनयथा च नः"। धारय मयि यथा—"धारया मयि प्रजाम्"। तर मृधः यथा—"अग्ने त्वन्तरा मृधः"। बोध मे यथा—"बोधा मे अस्य"। विचृत बन्धं यथा—"विचृता बन्धमेतम्"। अव्रत हवेषु यथा—"देवा अव्रता हवेषु"। श्रृणुधि गिरः यथा—"पाहि श्रृणुधी गिरः"। रक्ष तोकं यथा—"रक्षा तोकमुत त्मना"। चर्षणिसहां यथा—"चर्षणीसहाँ वेत्वाज्यस्य"। चर्षणिधृतः यथा—"ओमासश्चर्षणीधृतः"। येन समत्सु यथा—"येना समत्सु सासहः"। वनेम ते यथा—"वनेमा ते अभिष्टिभिः"। ऋध्याम ते यथा—"ऋध्यामा त ओहैः"। शिक्ष सखिभ्यः यथा—"शिक्षा सखिभ्यो हविषि"। तत्र रथं यथा—"तत्रा रथमुपशग्मँ सदेम"। दीय रथेन यथा—"बृहस्पते परिदीया रथेन"। इत जयत यथा—"प्रेता जयता नरः"। वर्धय त्वं यथा—"तमग्ने वर्धया त्वम्"। प्रब्रवाम घृतस्य यथा—"वयन्नाम प्रब्रवामा घृतस्य"। जगन्थ परस्याः यथा—"परावत आजगन्था परस्याः"। ररिम हि कामं यथा—"वयन्ते अद्य ररिमा हि कामम्"। पुरितता यथा—"अन्तरिक्षं पुरीतता"। अस्य पदस्यापवादोऽभिप्रेतः। तथाहि—"पशुपतेः पुरीतत्" इत्येतदपि भवति। प्लीहाकर्णः शुण्ठाकर्णः एतौ शब्दौ प्रकृतिदीर्घावित्येके आचार्या मन्यन्ते। यथा—"प्लीहाकर्णः शुण्ठाकर्णः॥ निकाशाः यथा—"बभ्रुनीकाशाः पितृणाम्"। अनुकाशेन यथा—"अन्तरमनूकाशेन"। चक्र जरसं यथा—"यत्रा नश्चक्रा जरसन्तनूनाम्"। मिथुकः यथा—"गात्राण्यसिना मिथूकः"। तरत सखायः यथा—"प्रतरता सखायः"। ससह्वान् यथा—"सासह्वाँश्चाभियुग्वा च"। अप मार्ग यथा—"अपा मार्ग त्वमस्मत्"। उभयदतः यथा—"ये

केचोभयादतः"। ऋतिषहं यथा—"तं वोदस्ममृतीषहम्"। अभि सु यथा—"अभी षु णः सखीनाम्"। सुष्टरीम जुषाणा यथा—"बर्हिः सुष्टरीमा जुषाणा"। यज देवान् यथा—"यजा देवाँ ऋतम्बृहत्"। येन पावक यथा—"येना पावक चक्षसा"। अश्वयन्तः यथा—"अश्वायन्तो मघवन्"। यदि सरमा यथा—"विदद्यदी सरमा"। स्वदय सुजिह्व यथा—"समञ्जन् स्वदया सुजिह्व"। निषद्य दधिष्व यथा—"बर्हिष्या निषद्या दधिष्व"। सदतन रणिष्टन यथा—"सदतना रणिष्टन"। भर चिकित्वान् यथा—"उत्तानायामवभरा चिकित्वान्"। चिकित्सगविष्टौ यथा—"प्रचिकित्सा गविष्टौ"। अवददत् यथा—"भगेमां धियमुदवाददन्नः"। रक्ष च यथा—"रक्षा च नो अधि च ब्रूहि देव। अयुनक् यथा—"यमेन दत्तं त्रित एनमायुनक्"। सृज रराणः यथा—"वनस्पतेऽवसृजा रराणः"। सदन्यं यथा—"सादन्यं विदत्थ्यम्"॥

(अ० भा०) पिबासोममित्यादि अष्टसप्ततिपदानि दीर्घाणि स्युः। क्रमेणोदाहरणानि। पिबा सोममनुष्वधम्। पिबा सुतस्यान्धसो मदाय। आपो हि ष्ठा मयोभुवः। एतशस्य नू रण आयो घृणेन। हविः शमीष्व। अधि मामहान उक्थपत्रः। वरुणो मामहन्तामदितिः। अभ्रेऽदब्धायोऽशीतम। काण्वानामिदं प्रकृतिदीर्घं पदपाठेऽपि ह्रस्वाभवात्। वायुरसजात इति पञ्चमे वक्ष्यति च। मा नो अश्वेषु रीरिषः। मध्या रीषतायुर्गन्तोः। देवेष्वायामयन्ति। अस्ति हि ष्मा ते। हिष्मेति किम्? अध स्म ते। अथा नो वर्धया रयिम्। इमं मे वरुण श्रुधी हवम्। प्रचरा सोम दुर्यान्। हि भूतां सूयवसिनीमनवे। श्रोता ग्रावाणो विदुषः। प्रति मुञ्चामि धर्षा मानुषः। परेषामिदम्। काण्वानां तु धर्षान्मानुष इति धर्षशब्दस्य पाठात्। मरुतो यस्य हि क्षये। पाथा दिवो वि महसः। युक्ष्वा हि केशिना। युक्ष्वा हि देवहूतमान्। अधरं गमया तमः। परिषिञ्चता सुतं सोमः सक्तवः। परीवापः पयोदधि। छन्दोभिरुक्था शस्त्राणि। अत्ता हवींषि प्रयतानि। आच्या जानु दक्षिणतो निषद्य। क्षामा रेरिहत्। उक्थशास क्षामा भिन्दन्तो अरुणीरपव्रन्। आरुहेमा स्वस्तये। आपो जनयथा च नः।

धारया मयि प्रजाम्। अग्ने त्वन्तरा मृधः। बोधा मे अस्य। विचृता बन्धमेतम्। देवा अवता हवेषु। नृः पाहि श्रृणुधी गिरः। रक्षा तोकमुत त्मना। चर्षणीसहां वेतु। मित्रस्य चर्षणीधृतः। ओमासश्चर्षणीधृतः। येना समत्सु सासहः। वनेमा ते अभिष्टिभिः। ऋध्यामा त ओहैः। शिक्षा सखिभ्यो हविषि। तत्रा रथमुपशग्मं सदेम। परकीयमेतत्। बृहस्पते परिदीया रथेन। प्रेता जयता नरः। इन्द्रः तमग्ने वर्धया त्वम्। वयं नाम प्रब्रवामा घृतस्यास्मिन्। परावत आजगन्था परस्याः। अद्य ररिमा हि कामम्। अन्तरिक्षं पुरीतता। अस्य पदस्य उपलक्षणत्वम्। तेन पशुपतेः पुरीतत् इत्युदाहरणं द्रष्टव्यम्। प्लीहाकर्णः शुण्ठाकर्णः। इदं प्रकृतिदीर्घम्। धूम्रा बभ्रुनीकाशाः। अन्तरमनूकाशेन बाह्यम्। देवा यत्रा नश्चक्रा जरसम्। गात्राण्यसिना मिथूकः। परेषामिदम्। उत्तिष्ठत प्रतरता सखायः। सासहवांश्चाभियुग्वा च। अपा मार्ग त्वमस्मत्। ये केचोभया दतः। तं वोदस्ममृतीषहम्। परकीयम्। अभी षु णः सखीनाम्। स्तीर्णं बर्हिस्सुष्टरीमा जुषाणा। यजा देवाँ ऋतं बृहत्। येना पावकचक्षसा। अश्वायन्तो मघवन्निन्द्रवाजिनः। विदद्यदी सरमा। मध्वा समञ्जन् स्वदया सुजिह्व। अस्मिन् यज्ञे बर्हिष्या निषद्या दधिष्वा। अन्यदीयमेतत्। निर्बर्हिषि सदतना रणिष्टन। इदमपि परकीयम्। उत्तानायामवभरा चिकित्वान्। उभयेभ्यः प्रचिकित्सा गविष्टौ। भगेमां धियमुदवाददन्नः। परेषामिदम्। रक्षा च नो अधि च। त्रित एनमायुनक्। वनस्पतेऽव सृजा रराणः। सादन्यं विदथ्यम्। प्रकृतिदीर्घावित्येकशब्दः अत्र मुख्यवाची। तेन काण्वव्यतिरिक्तानां केषाञ्चित्पदकाले ह्रस्वपाठो भवति। प्लीहाकर्ण इति अष्टसप्तति पदानीत्युक्तिः सूत्रोक्तपदापेक्षया। तेन पदसारूप्यादधिकोदाहरणप्रदर्शनेऽपि न दोषः इत्यवधेयम्। चकारोऽनुक्तसमुच्चयार्थः। तेन यज्ञपतिं देवा युवम्। देवा युवं गृण्हामि यज्ञस्यायुषे। वाचमस्मेति यच्छ देवा युवम्। इति सिध्यति॥

**अनुनासिकमुपधा प्रागन्तस्थायाः॥ १३०॥**

(उ० भा०) ह्रस्वो दीर्घः प्लुतः सानुनासिको निरनुनासिक उदात्तोऽनुदात्तः स्वरित इति स्वरधर्माः। तत्र पदे दृष्टस्यान्यथाभावो वि-

कार उच्यते। स चात्र स्वरे एवाधिकृतो न व्यञ्जने यतो दीर्घमित्यारभ्यते। अत इहापि स्वरस्यैवानुनासिक्यं विकार उच्यते। इयांस्तु विशेषः—यत्र नकारमकारावेव परभूतौ तयोश्च विकारे सति स्वरस्य विकारः। यत्र तु तयोः प्रकृतिभावो वा लोपो वा तत्र स्वरस्यापि विकारो न भवति। यथा—"अस्मान् सीते" इत्येवमादि। यत्प्रागन्तस्थासंशब्दनात्। यमित ऊर्ध्वमनुक्रमिष्यामस्तत्रोपधाभूतः स्वरोऽनुनासिकं स्वरं विकारमापद्यते इत्येतदधिकृतं वेदितव्यम्। वक्ष्यति—"नुः"। "चछयोः शम्"। यथा—पुषीन् चक्षुषे > "वाचे पुषींश्चक्षुषे"। "गवयान् त्वष्ट्रे बृहस्पतये"। "गवयांस्त्वष्ट्र उष्ट्रान्" ॥

(अ० भा०) अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् इति वक्ष्यति। इत ऊर्ध्वं अन्तस्थासंशब्दनात् प्राक् यदनुक्रमिष्यामः। तत्र उपधाभूतस्वरः अनुनासिकविकारमापद्यते। इत्याधिकृतो वेदितव्यः। अधिकारोऽयम् ॥

## स्वर औपशविः ॥ १३१ ॥

(उ० भा०) औपशविराचार्यः स्वर एव प्रत्यय उपधानुनासिक्यमिच्छति। नुरिति वक्ष्यति। अतस्तस्यैव परभूतो यः स्वर उक्तः उपधा च तस्यैव ग्राह्या। यथा—महान् इन्द्रः > "महाँ इन्द्रो वज्रहस्तः"। स्वान् अहं उन्नयामि > "स्वाँ अहम्"। शत्रून् अप जहि > "शत्रूँ रप मृधो नुदस्व"। स्वर इति किम्? गवयान् त्वष्ट्रे > "गवयां" ॥

(अ० भा०) पूर्वं सामान्येनानुनासिकोऽभिहितः। तत्र विशेषोऽयम्। औपशविराचार्यः स्वरे परे एव उपधानुनासिक्यमिच्छति यथा—महान् इन्द्रः > महाँ इन्द्रः। स्वान् अहम् > स्वाँ अहम्। स्वरे किम्? गवयान् त्वष्ट्रे गवयांस्त्वष्ट्रे अहींश्च सर्वान् जम्भयन्। अयमत्र विशेषः। तकारमकारावेवात्र परभूतौ भवतः। तयोश्च विकारे सति उपधास्वरस्यापि विकारः। यथा महाँ इन्द्रः। पुषीँश्चक्षुषे। इत्यादि। यत्र तु नकारमकारयोः प्रकृतिभावो दृश्यते तत्र उपधास्वरस्यापि न विकारः। यथा अस्मान् सीते इत्यादि ॥

अनुस्वारेण व्यञ्जने ॥ १३२ ॥

(उ० भा०) नकारात् परे व्यञ्जनेऽनुस्वारेण व्यवधानमिच्छत्याग-मिकेन औपशविराचार्यः। अयं च उपधानकारयोरितरो भवति। यत्र नकारस्य शकारः सकारो वा विहितस्तत्रापि भवति। "अनुस्वारं रोष्मसु०" इति वचनात्। यथा—प्लुषीन् चक्षुषे > "प्लुषींश्चक्षुषे"। गवयान् त्वष्ट्रे > "गवयाँस्त्वष्ट्रे" ॥

(अ० भा०) व्यञ्जने परे उपधानुस्वारेण व्यवधीयते। अयमर्थः यत्र नकारस्य सकारः शकारो वा विहितः तत्रायं विधिर्भवति। यथा प्रुषीन् चक्षुषे > प्रुषींश्चक्षुषे। अस्मंस्त्रिवरूथे ॥

नुः ॥ १३३ ॥

(उ० भा०) नकारोऽधिकृतो वेदितव्यः ॥

(अ० भा०) नुः इति नकारस्य संज्ञा। यत् इत ऊर्ध्वं अनुक्रमिष्यामः तत्कार्यं नकारः प्राप्नोतीत्यधिक्रियन्ते ॥

चच्छयोः शम् ॥ १३३ ॥

(उ० भा०) चकारछकारयोः प्रत्यययोर्नकारः शकारमापद्यते अनुनासिकं चोपधा। यथा—अहीन् च > "अहींश्च सर्वान्"। "प्लुषींश्चक्षुषे"। छकारोदाहरणं मृग्यम्। रूपोदाहरणं तु विद्यते। यथा—विद्वान् छकारः > "विद्वाँश्छकारः" ॥

(अ० भा०) नकारः शकारमापद्यते चकारछकारयोः परतः। उपधानुस्वारेण व्यवधीयते। यथा—अहीन् च > अहींश्च सर्वान् जम्भयन्। प्रुषीन् चक्षुषे > प्रुषींश्चक्षुषे। छकारः अनुस्वारेण चोपधाव्यवधीयते ॥

तथयोः सम् ॥ १३५ ॥

(उ० भा०) तकारथकारयोः प्रत्यययोर्नकारः सकारमापद्यते। अनुनासिकं चोपधा। यथा--गवयान् त्वष्ट्रे > "गवयाँस्त्वष्ट्रे"। "अन्यान् ते >" अन्याँस्ते। थकारस्य रूपोदाहरणम्। यथा—विद्वान् थकारः > "विद्वाँस्थकारः"॥

(अ० भा०) नकारः सकारमापद्यते। तकारथकारयोः परतः। उपधा चानुस्वारेण व्यवधीयते। यथा गवयान् त्वष्ट्रे गवयाँस्त्वष्ट्रे। अन्यान् ते अन्याँस्ते। ब्रह्मन् त्वम् ब्रह्मँस्त्वम्। थकारे यथा। विद्वान् थकारः इति रूपोदाहरणम्॥

दधन्वान् स्ववान्यकारे लोपम्॥ १३६॥

(उ० भा०) दधन्वान् स्ववान् एतौ नकारौ यकारे प्रत्यये लोपमापद्येते। अत्र च लोपविधानादुपधानुनासिक्यमपि न भवति। यथा-चोक्तम्--

"स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वदा।
वर्जयित्वा तमाकारं यत्र लोपो विधीयते"॥

यथा--दधन्वान् यः > "दध न्वायो नर्यो अप्स्वन्तरा"। स्ववान् यथा— "स्व वायास्त्वर्वाङ्"॥

(अ० भा०) दधन्वान् स्ववान् इति नकारौ लोपमापद्यते यकारे परे। अत्र लोपविधानात् उपधानासिक्यं न भवति। उक्तं च याज्ञवल्क्य-शिक्षायाम्—

उपधारञ्जनं कुर्यान्मनोर्विकरणे सति।
लोपे प्रकृतिभावेऽपि नोपधारञ्जनं भवेत्॥

इति अस्यार्थः—मकारनकारयोर्वर्णान्तरापत्या विकारे जाते सति उपधारञ्जनं उपधाया अनुनासिक्यं कुर्यात्। लोपप्रकृतिभावयोस्तु तन्न कुर्यात्। वसिष्टशिक्षाय-मपि—

स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वदा ।
वर्जयित्वा तमाकारं यत्र लोपो विधीयते ॥

इति। यथा—दधन्वान् यः दधन्वा यो नर्यः। स्ववान् स्ववान् यातु स्ववा धायात्वर्वाङ् ॥

## रयिवृधे च ॥ १३७ ॥

**(उ० भा०) रयिवृध इत्येतस्मिंश्च प्रत्यये पूर्वो नकारो लोपमापद्यते। यथा—अन्नान् रयिवृधः> "पीवो अन्ना रयिवृधः"। उक्तहेतुत्वादत्राप्युपधानुनासिक्यं न भवति ॥**

(अ० भा०) नकारो लुप्यते रयिवृधेशब्दे परे पीवो अन्नान् रयिवृधः पीवो अन्ना रयिवृधः ॥

## नपुँसकादिकारस्य ॥ १३८ ॥

**(उ० भा०) नपुंसकादुत्तरो यो नकारस्तस्य सम्बन्धिन इकारस्य लोपो भवति। यथा—"एमन् सादयामि, भस्मन् सादयामि"। एमनि भस्मनि इति प्राप्ते इकारलोपश्छान्दसः। नपुंसकादुत्तरस्येकारस्य लोप उक्तोऽनपुंसकादपि भवति। यथा—"अश्मन्नूर्जम्"। अश्मनीति प्राप्ते ॥**

(अ० भा०) नकारान्तान्नपुंसकलिङ्गात्परस्य इकारस्य लोपः स्यात्। यथा एमनीति प्राप्ते एमन्त्सादयामि अत्र नपुंसकादिति सम्भवाभिप्रायेण तेन पुलिङ्गेऽपि भवति। यथा—अश्मन्नूर्जमित्यादि अश्मन्शब्दः पुलिङ्गशब्दः पालाशप्रस्तरग्रावोपलाश्मान इत्यभिधानात्। यच्च निशब्दो बहुलमिति पूर्वमुक्तम् तत् निशब्दस्येति न पौनरुक्त्यम् ॥

## न सप्तम्यामन्त्रितयोः ॥ १३९ ॥

**(उ० भा०) सप्तम्यामन्त्रितयोर्विभक्त्योः सम्बन्धिन इकारस्य न**

लोपो भवति । यथा—"अपान्त्वा सधिषि"। "अपान्त्वा पाथसि"। एते सप्तम्या उदाहरणे। "हे पृथिवि"। आमन्त्रितविभक्तेरुदाहरणम्। अनकारार्थ आरम्भः ॥

(अ० भा०) सप्तम्यामन्त्रणविभक्त्योः इकारस्य न लोपः। सप्तम्या यथा—अपां त्वा सधिषि सादयामि। अपान्त्वा पाथसि। आमन्त्रितस्य यथा—हे प्रिया पाथांसि। अनकारार्थोऽयमारम्भः ॥

नॄन् पकारे विसर्जनीयम् ॥ १४० ॥

(उ० भा०) नॄनित्ययं नकारः पकारे प्रत्यये विसर्जनीयमापद्यते अनुनासिकं चोपधा। यथा—नॄन् पाहि > "नॄँः पाहि शृणुधी गिरः" ॥

(अ० भा०) नॄन्नकारः पकारे परे विसर्जनीयमाप्नोति। अनुनासिका चोपधा। जिह्वामूलीयोपध्मानीयौ शाकटायनः इति विसर्जनीयस्य उपध्मानीयः। यथा—नॄन् पाहि > नॄँः पाहि शृणुधी गिरः ॥

शत्रून् परिधीन् क्रतून् वनस्पतीन् स्वरे रेफम् ॥ १४१ ॥

(उ० भा०) शत्रून् परिधीन् क्रतून् वनस्पतीन् एते नकाराः स्वरे प्रत्यये रेफमापद्यन्ते अनुनासिकं चोपधा। शत्रून् यथा—"अप जहि शत्रूँ रपमृधः"। परिधीन् यथा—"वन्वन्नवातः परिधीँ रपः"। क्रतून् यथा—"अग्ने क्रत्वा क्रतूँ रनु"। वनस्पतीन् यथा—"ये वा वनस्पतीँ रनु" ॥

(अ० भा०) एतेषां चतुर्णां नकारः रेफमेति स्वरे परे। अनुनासिका चोपधा। यथा—शत्रून् अप जहि > शत्रूँ रपमृधो नुदस्व। वन्वन्नवातः परिधीँ रपोर्णु। अग्ने क्रत्वा क्रतूँ रनु। ये वा वनस्पतीँ रनु। स्वरे किम्? शत्रून् परिशूर ॥

आकारोपधो यकारम् ॥ १४२ ॥

(उ० भा०) आकारोपधो नकारो यकारमापद्यते। स्वर इत्यनुवर्तते। अनुनासिकं चोपधा। यथा—"महान् इन्द्रः"। महाँ य् इन्द्र इत्येवं संहिता प्राप्नोति। ततो "यवयोः पदान्तयोः स्वरमध्ये लोपः" इति यकारलोपे कृते "न परकालः पूर्वकाले पुनः" इति सन्धिर्न भवति। ततो महाँ इन्द्र इत्येतद्रूपं सम्भवति। ननु यथा—"दधन्वान् स्ववान् यकारे लोपः" इति नकारलोपे कृते सत्युपधानुनासिक्यं न प्रवर्त्तते एवमिहापि नकारस्य यकारीभूतस्याश्रवणादुपधानुनासिक्यं न प्रवर्त्तते। तत्कथमुपधानुनासिक्यमिति। लुप्तस्यापि स्वकार्यकारणादित्यदोषः, यदि हि यकारो व्यञ्जनकार्यं न कुर्यात् कथमिह स्वरयोः सन्धिर्न स्यात्। अतः स्वकार्यकारणादुपधानुनासिक्यमपि भवति—वृष्टिमान् इव पर्जन्यः > "वृष्टिमाँ इव"॥

(अ० भा०) आकारोपधो नकारः यकारमापद्यते स्वरे परे। अनुनासिका चोपधा। यवयोः पदान्तयोः स्वरमध्ये लोप इति यकारस्य लोपे कृते न परकालः पूर्वकाले पुनः इति सिद्धिर्न सम्भवति। यथा—महान् इन्द्रः > महाँ इन्द्रः॥ ननु लोपे कृते उपधारञ्जनं न भवतीत्युक्तम्। तत्कथमत्र लुप्तत्वात् उपधारञ्जनमिति चेत् इत्थम्—यत्र साक्षात् नकारमकारलोपः तत्र उपधारञ्जनं न भवति। यत्र वर्णान्तरापत्त्या लुप्यते तत्र भवत्येवेत्यदोषः। अन्यथा स्वरयोः सन्धिरपि स्यात्। अतः उपधारञ्जनं भवत्येवात्र॥

न तमे॥ १४३॥

(उ० भा०) यन्नकारस्य तकारे प्रत्यये विहितं तत् तमप्रत्यये न भवति। यथा—मदिन् तमानां > "मदिन्तमानान्त्वा"। मधुन् तमानां > "मधुन्तमानान्त्वा"। "तथयोः सम्" इत्यस्यापवादः॥

(अ० भा०) तमप्रत्यये परे नकारः न विकारमाप्नोति। यथा—मदिन् तम > आप्यायस्व मदिन्तम। मध्वन्तमानां त्वा। वृत्रहन्तममिळाभिः। वृत्रहन्तमा या मन्दाना चिदा गिरा। तथयोस्समिति प्राप्तस्यापवादः॥

निर्जगन्वान् तमसि ॥ १४४ ॥

(उ० भा०) निर्जगन्वान् इत्ययं नकारस्तमसि प्रत्यये न विकारमापद्यते। यथा—निर्जगन्वान् तमसः > "निर्जगन्वान्तमसो ज्योतिषागात्" ॥

(अ० भा०) निर्जगन्वान्नकारः न विकारमाप्नोति तमश्शब्दे परे। निर्जगन्वान्तमसः। पूर्वस्याप्राप्तेरारम्भः ॥

धामञ्छत्रूञ्श्चिकित्वान्त्वं पूषन्नर्वन्निति च ॥ १४५ ॥

(उ० भा०) धामन् शत्रून् चिकित्वान् त्वम् पूषन् अर्वन् एते नकारा न विकारमापद्यन्ते। धामन् यथा—"धामन्ते विश्वं भुवनम्"। शत्रून् यथा—"शत्रून्ताढि विमृधो नुदस्व"। चिकित्वान् त्वं यथा—"आ च वह मित्र महश्चिकित्वान्त्वम्"। त्वमिति किम्? "स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मै"। पूषन् यथा—"पूषन्तव व्रते वयम्"। अर्वन् यथा—"तव शरीरं पतयिष्ण्वर्वन्तव चित्तम्"। इति चेत्यस्यावयवस्यार्थः। इति शब्दः प्रकारदर्शनार्थः। यथा अधस्तनसूत्रयोस्तकारे नकारस्य प्रकृतिभावः एवमिहापि नकारस्य प्रकृतिभाव एव। तथा च व्याख्यातम्। चकारस्तकारापवादावधिद्योतनार्थः ॥

(अ० भा०) एते नकाराः न विकारमापद्यन्ते। यथा—धामं ते विश्वम्। विशत्रून्ताढिह। आ च वह मित्रमहश्चिकित्वान्त्वं दूतः। चिकित्वान्त्वमिति किम्? स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मै। पूषन् तव व्रते। पतयिष्ण्वर्वन्तव। चकारात् वाचोऽयं तुर्ये ॥

अश्वादौ चाध्याये ॥ १४६ ॥

(उ० भा०) स्वर इति वर्त्तते। अश्वस्तूपर इत्येतस्मिन्नध्याये नकार आकारोपधः स्वरे प्रत्यये प्रकृत्या भवति। "आकारोपधो यकारम्" इत्यस्यापवादः। यथा—शिशुमारान् आलभते समुद्राय < "शिशुमाराना-

लभते"। मण्डूकान् अद्भ्यः > "मण्डूकानद्भ्यः"। स्वरानुवृत्तिरिति किम्? "गवयाँस्त्वष्ट्रे" "प्लुषींश्चक्षुषे"

(अ० भा०) स्वर इत्यनुवर्त्तते। अश्वशब्दः आदिः यस्याध्यायस्येति विग्रहः। अश्वस्तूपर इत्यध्याये आकारोपधो नकारः प्रकृत्या स्यात् स्वरे परे। यथा —वसन्ताय कपिञ्जलानालभते। समुद्राय शिशुमारानालभते। इत्युदाहरणानि बहूनि द्रष्टव्यानि। अश्वाध्यायेति किम्? स्वाँ अहम्। स्वरे किम्? गवयाँस्त्वष्ट्रे। प्रुषीश्चक्षुषे॥

मनुष्याँस्ताँल्लोकानमित्रानुदि॥ १४७॥

(उ० भा०) मनुष्यान् तान् लोकान् अमित्रान् एते नकाराः प्रकृत्या भवन्ति उदि उपसर्गे प्रत्यये। मनुष्यान् यथा—मनुष्यान् उत् > "मनुष्यानुदजयताम्"। तान् यथा—तान् उत् > "तानुज्जेषम्"। लोकान् यथा—"त्रींल्लोकानुदजयताम्"। अमित्रान् यथा—"क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वान्"॥

(अ० भा०) एते चत्वारो नकाराः प्रकृत्या स्युः उच्छब्दे परे। यथा— मनुष्यानुदजयताम्। तानुज्जेषम्। इमान् लोकानुदजयत्। अमित्रानुन्नयामि॥

आप्नोतीत्योश्च॥ १४८॥

(उ० भा०) आप्नोतौ प्रत्यये इतौ च नकारो न विकारमापद्यते। आप्नोति यथा—भक्षान् आप्नोति > "इडाभिर्भक्षानाप्नोति"। इति यथा—श्रपयान् इति > "अदितिः श्रपायानिति"॥

(अ० भा०) आप्नोतौ इतिशब्दे च परे नकारः न विक्रियते। यथा— इळाभिर्भक्षानाप्नोति। अदितिः श्रपयानिति॥

सङ्क्रमे च वैष्णवान्॥ १४९॥

(उ० भा०) वैष्णवानित्ययं नकारो न विकारमापद्यते स्वरे

प्रत्यये । सङ्क्रमश्च क्रमे भवति । अतः क्रमसंहितायामित्यर्थः । यथा—वैष्णवान्> "अत्र वैष्णवानव" ॥

(अ० भा०) वैष्णवानिति नकारः न विक्रीयते स्वरे परे। क्रमसंहितायाम् । यथा—वैष्णवान् । अव वैष्णवानव अवनयामि ॥

गृहानैमि गृहानुपह्वयामहे वर्चस्वानहम्मनुष्यानन्तरिक्षमग्निष्वात्तानृतुमतः पयस्वानग्ने तानश्विना पतङ्गानसन्दितः स्वर्गानपां पतिः सपत्नानिन्द्रसपत्नानिन्द्राग्नी नभस्वानार्द्रदानुर्विद्वानग्नेर्देवानस्रेधतानड्वानाशुरथैतानष्टौ विरूपानालभत एतावानस्यायुष्मानग्ने वायव्यानारण्याः प्रविद्वानग्निनानड्वानघोरामौ शत्रूननु यं या तुधानानस्थादस्मानरिष्टेभिरिति ॥ १५० ॥

(उ० भा०) एतेषां द्विपदानां पूर्वं पदान्तीया नकाराः प्रकृत्या भवन्ति । "गृहानैमि मनसा मोदमानः" । "गृहानुपह्वयामहे" । "वर्चस्वानहं मनुष्येषु" । "मनुष्यानन्तरिक्षमगन्" । "अग्निष्वात्तानृतुमतो हवामहे" । "पयस्वानग्न आगमन्तम्" । "तानश्विना सरस्वती" । "तपूँष्यग्ने जुह्वा पतङ्गानसन्दितः" । "स्वर्गानपां पतिर्वृषभः" । "अधा सपत्नानिन्द्राग्नी मे" । "समुद्रोऽसि नभस्वानार्द्रदानुः" । "प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेः" । "देवानस्रेधता मन्मना" । "अनड्वानाशुः सप्तिः पुरन्धिः" । "अथैतानष्टौ विरूपानालभते" । "एतावानस्य महिमा" । "आयुष्मानग्ने हविषा वृधानः" । "वायव्यानारण्या ग्राम्याश्च ये" । "प्रविद्वानग्निना" । "अनड्वानघोरामौ" । "शत्रूननु यं विश्वे मदन्त्यूमाः" । नकारस्य रेफापवादः । इतरत्र तु सर्वत्र यकारापवादः । "अपस्रेधन् रक्षसो यातुधानानस्थात्" । "द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिः" ॥

(अ० भा०) महानित्यादिपञ्चविंशतिनकाराः न विक्रियन्ते स्वरे परे। यथा महानैमि मनसा। महानुपह्वयामहे। वर्चस्वानहं मनुष्येषु। मनुष्यानन्तरिक्ष-मगन्यज्ञः। अग्निष्वात्तानृतुमतः। पयस्वानग्न आगतम्। तानश्विना सरस्वतीन्द्रस्सु-त्रामा। जुह्वा पतङ्गानसन्दितः। स्वर्गानपां पतिर्वृषभः। अधा सपत्नानिन्द्रः। अधा सपत्नानिन्द्राग्नी मे। समुद्रोऽसि नभस्वानार्द्रदानुः। प्रेहि विद्वानग्नेरग्नेः। यक्षि देवानस्रेधता मन्मना। अनड्वानाशुस्सप्तिः पुरन्धिः। अथैनानष्टौ विरूपाना-लभते। एतावानस्य महिमा। आयुष्मानग्ने हविषा वृधानः। वायव्यानारण्या ग्राम्याश्च ये। प्रविद्वानग्निना। परकीयमिदम्। अनड्वानघोरामौ। शत्रूनन्‌यं विश्वे। यातुधानानस्थाद्देवः। अस्मानरिष्टेभिः॥

वृद्धं वृद्धिः॥ १५१॥

(उ० भा०) इत्युक्तार्थम्॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे
तृतीयोऽध्यायः॥

आनन्दपुरवास्तव्यवज्रटसूनुना उवटेन कृते मातृमोदाख्ये
प्रातिशाख्यनिर्मलभाष्ये तृतीयोऽध्यायः समाप्तः॥

(अ० भा०) उक्तार्थमेतत्।

श्रीयाज्ञवल्क्यगुरुभ्यो नमः। ओम्।

इति श्रीमत्प्रथमशाखिना नागदेवभट्टात्मजेन श्रीमदनन्तभट्टेन विरचिते
श्रीमत्प्रातिशाख्यभाष्ये तृतीयोऽध्यायः समाप्तः॥

---

# अथ चतुर्थोऽध्यायः ॥

**अनुस्वारं रोष्मसु मकारः ॥ १ ॥**

(उ० भा०) “अनितावध्याये” इत्यनेन सूत्रेण योऽवधित्वेन वर्णितः। अतोऽवधिपरिज्ञापनार्थमध्यायसमाप्तिः कृता कात्यायनाचार्येण। आह च—

“अनितावध्याय इति कृतं सूत्रं यतः पुरा।
अतस्तद्वधिज्ञप्तिः क्रियतेऽध्यायसङ्ख्यया ॥
अत्रावधिसमाधीतं पदमन्तर्विकारिमत्।
आचार्येणोच्यते तस्य प्रागुक्त्यादिप्रयोजनम् ॥”

मकारोऽनुस्वारमापद्यते रोष्मसु प्रत्ययेषु। रेफे यथा—अपाम् रसेन > “अपाँ रसेन वरुणः”। ऊष्मसु यथा—त्वाम् शश्वन्तः > “त्वां शश्वन्त उपयन्ति वाजाः”। “देवं सवितारमोण्योः”। “तपूंषि”। “उरुं हि राजा”॥

(अ० भा०) अनितावध्याये इत्यनेन सूत्रेणाध्यायोऽवधित्वेन विवक्षितः। अतोऽध्यायसमाप्तिं कृत्वा अस्मिंश्चतुर्थाध्याये अनुस्वारो विकार उच्यते। उक्तं हि—

अनितावध्याय इति कृतं सूत्रं यतः पुरा।
अतस्तदवधिज्ञप्तिः क्रियतेऽध्यायसङ्ख्यया ॥
अत्रावधिसमाधीतं पदमन्तर्विकारि यत्।
आचार्येणोच्यते तस्य प्रागुक्त्यादिप्रयोजनम् ॥

इति। मकारोऽनुस्वारमापद्यते रेफोष्मसु परेषु। यथा—अपां रसेन। त्वां शश्वन्तः। देवं सवितारम्। गच्छ उरुं हि राजा ॥

नुश्चान्तःपदेऽरेफे ॥ २ ॥

(उ० भा०) नकारोऽनुस्वारमापद्यते । चशब्दान्मकारश्च । पदस्य मध्ये अरेफे । रेफशब्दस्य पर्युदासात् । ऊष्मस्वेवानुस्वारापत्तिर्भवति । यथा—जक्षिवान् सः > "जक्षिवांसः" । पपिवान् सः > "पपिवांसः" । तपून् षि > "तपूंष्यग्ने" । हवीन् षि > "हवींषि" । एते नकारप्रकृतयोऽनुस्वाराः ॥

(अ० भा०) नुः इति नकारः अनुस्वारमाप्नोति । चकारान्मकारश्च । पदमध्ये रेफव्यतिरिक्तेषु पूर्वोक्तेषु ऊष्मसु परेषु । यथा—जक्षिवान् सः > जक्षिवांसः । पपिवांसः । तपून् सि > तपूंष्यग्ने । नमः किंशिलाय च । अंशुः । अंशुना ते । अरेफमिति किम्? वम् रः > यद्वम्रो अतिसर्पति । देव्यो वम्रियः ॥

वँश ॥ ३ ॥

(उ० भा०) वनतेर्धातोर्वमतेरुणादेर्यो वशप्रत्ययः । वनतेर्वमतेर्धातोरौणादिकशप्रत्यये नकारप्रकृतिर्मकारप्रकृतिर्वा अनुस्वारः । सन्देहात् सूत्रकारेण कण्ठरवेण सूत्रं कृत्वा पठितः । अतो नकारप्रकृतिर्वा मकारप्रकृतिर्वा अनुस्वारः । किम् शिलाय> "किंशिलाय" । "अक्रंस्त" । "पुंसः" । एते मकारप्रकृतयोऽनुस्वारा भवन्ति । एवमन्येऽप्यन्वेषितव्याः । अरेफ इति किम्? वम्रः । "यद्वम्रो अतिसर्पति" ॥

अनुनासिका चोपधा ॥ ४ ॥

(उ० भा०) अतोऽधिकाराद्यमन्यं विकारं वक्ष्यामो मकारनकारयोस्तत्रानुनासिका चोपधा भविष्यतीत्यधिकृतं वेदितव्यम् । ननु "अनुनासिकमुपधा प्रागन्तस्थायाः" इति उपधानुनासिक्यं विहितमेव । किमनेन सूत्रेण क्रियते? एवन्तर्हि व्यवस्थार्थं वचनम् । यस्मिन् पक्षे अनुस्वारो न भविष्यति तस्मिन् पक्षे उपधाया आनुनासिक्यं भविष्यति । अधिकारार्थोऽयमारम्भः ॥

(अ० भा०) अत ऊर्ध्वं नकारमकारयोः विकारान्तरं ब्रूमः तत्र। उपधानुनासिक्यं स्यात् इत्यधिकृतं वेदितव्यम्। अधिकारसूत्रमेतत्। ननु अनुनासिकमुपधा प्रागन्तस्थाया इति पूर्वं विहितमेव। उपधानुनासिक्यं किमनेनेति चेत् सत्यं। एवन्तर्हि व्यवस्थार्थं वचनम्। यस्मिन् पक्षे अनुस्वारो न भवति तदा आनुनासिक्यमित्यपुनरुक्तिर्द्रष्टव्या ॥

## लोपं काश्यपशाकटायनौ ॥ ५ ॥

**(उ० भा०) काश्यपशाकटायनावाचार्यौ मकारनकारयोर्लोपं मन्येते। अस्मिन् पक्षे वाक्यद्वयम्। अनुनासिका चोपधा भवति। यथा—"अपां रसेन"। पक्षे "अपाँ रसेन"। त्वां शश्वन्तः, "त्वाँ शश्वन्तः"। तां सवितुः > "ताँ सवितुः"। त्वां हि > "त्वाँ हि"। तपूंषि > "तपूँष्यग्ने"। अक्रंस्त > "अक्रँस्त"। किं शिळाय > "किं शिळाय"। यजूंषि > "यजूँषि सामभिः" ॥**

(अ० भा०) एतौ आचार्यौ नकारमकारयोः लोपं मन्येते रेफोष्मसु। अत्र पक्षे अनुनासिका चोपधा भवति। अनुस्वारानुनासिकयोर्भेदस्त्वध्येतृप्रसिद्धः। यथा—अपाँ रसेन। त्वाँ शश्वन्तः। ताँ सवितुः। त्वाँ हि मन्द्रतमम्। अविशेषादपदान्तेऽपि। तपूँष्यग्ने। यजूँषि सामभिः। नमः किंशिलायेत्यादि ॥

## प्रकृत्या सम्राट्साम्राज्ये ॥ ६ ॥

**(उ० भा०) सम्राट्शब्दे समः सम्बन्धी मकारो रेफे परभूते प्रकृत्या भवति। तथा साम्राज्यशब्दे समो मकारो रेफे परे सति प्रकृत्या भवति। यथा—सम्राडिति सम् राट् > "सम्राट् चक्षुः"। "साम्राज्यमिति साम् राज्यम् > "साम्राज्यं गच्छति मे"। "साम्राज्येनाभिषिञ्चामि" ॥**

(अ० भा०) समिति मकारः प्रकृत्या स्यात्। राट्राज्यशब्दयोः परयोः। अनुस्वारादेरपवादः। यथा—सम्राट् चक्षुः। साम्राज्येनाभिषिञ्चामि। साम्राज्यं गच्छतात् ॥

**शं चे पकारादुकारोदयात् ॥ ७ ॥**

(उ० भा०) पकारादुकारोदयात्परो मकारः शकारमापद्यते चकारे परभूते। अनुनासिका चोपधा भवति। यथा—पुम् चली > "पुँश्चली कितवः"। च इति किम्? "पुँसः"। पकारादुकारोदयादिति किम्? "प्रमुञ्च"। "विमुञ्चति" ॥

(अ० भा०) उकारोदयात् पकारोदयात् परः मकारः शकारमापद्यते चकारे परे अनुनासिका चोपधा। पुंचली पुंश्चली > क्लीबः। पकारादुकारोदयात् किम्? प्रतिमुञ्चामि ॥

**समन्तःपदे कखपफेष्वनूष्मपरेषु ॥ ८ ॥**

(उ० भा०) सकारमापद्यते मकारः पदमध्ये कखपफेषु प्रत्ययेषु। किंविशिष्टेषु? अनूष्मपरेषु यद्यूष्माणः परभूता न भवन्ति। अनुनासिका चोपधा। यथा—सम् कृतिः > "सँस्कृतिः"। पुम् खाताः > "पुँस्खाताः"। पुम् पुत्राः > "पुँस्पुत्राः"। पुम् फलाः > "पुँस्फलाः"। अनूष्मपरेष्विति किम्? सम् क्षरे > "सङ्क्षरेऽमृत इति" ॥

(अ० भा०) पदमध्ये मकारः सकारमाप्नोति। कखमफेषु परेषु यद्यूष्माणः तेभ्यः परभूता न भवन्ति। तदा अनुनासिका चोपधा। यथा— संकृतम् > सँस्कृतम्। संस्कृतिर्विश्ववारा। पफयो रूपोदाहरणं दीयते। यथा— पुं पुत्रः > पुँस्पुत्रः। पुं फलम् > पुंस्फलम्। अनूष्मपरेषु किम्? संक्षरे > संक्षरेऽमृत इति ब्राह्मणोदाहरणम्। अत्र कषयोगे क्ष इति ककारानन्तरं षकारस्य ऊष्मणः श्रवणान्न सत्वमिति भावः ॥

**नुश्चाम्रेडिते ॥ ९ ॥**

(उ० भा०) नकारः चशब्दान्मकारः सकारमापद्यते। अनुनासिका चोपधा। आम्रेडिते परे कखपफेष्वनूष्मपरेषु। पदमध्ये यथा— कान् करवाणि > "काँस्करवाणि"। कान् कानामन्त्रयति > "काँस्काना-

मन्त्रयति"। आम्रेडिते किम्? "कान् करवाणि"। इह यान्युदाहरणानि संहितायां नोपलभ्यन्ते तेषामपि लक्षणं प्रसङ्गात् क्रियमाणं न विरुध्यत एव यथा जलाहरणस्य मत्स्याहरणं पुष्पाहरणस्य फलाहरणं च न विरुध्यते ॥

(अ० भा०) नकारः सत्वमेति। कखपफेष्वनूष्मपरेषु। अनुनासिका चोपधा भवति द्विरुक्तं चेत्पदं भवति। यथा—कान् कान् > कांस्कान् मन्त्रयते। आम्रेडिते किम्? तान् करोति। इदं तु शिष्याणां लौकिकप्रयोगसिध्यर्थं उक्तमाचार्येणेत्यवधेयम्। संहितायामुदाहरणाभावात् शाखान्तरोदाहरणसिध्यर्थं वा।

अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् ॥ १० ॥

(उ० भा०) अन्तस्थामापद्यते मकारः अन्तस्थासु परभूतासु परस्या अन्तस्थायाः समानस्थानां यदि नामानुनासिकां समानाम्। यथा—सम् यौमि > "सँय्यौमीदम्"। रासभम् युवम् > "युञ्जाथाँ रासभँय्युवम्"। "सम् वपामि > सँवपामि"। "तम् लोकम् > तँल्लोकं पुण्यम्"। रेफेऽनुस्वारो विहितः ॥

(अ० भा०) अन्तस्थासु परतः मकारः परसस्थानां अनुनासिकामन्तस्थामापद्यते। यथा—संयौमि > जनयत्यै त्वा सँय्यौमि। सं वपामि > सँव्वपामि। तं लोकम् > तँल्लोकं पुण्यं प्रज्ञेषम्। रेफे तु अनुस्वार एव विहितः अपां रसमित्यादौ ॥

हि ॥ ११ ॥

(उ० भा०) "ह्यन्तराः कालाः" इत्युक्तम्। अतस्तत्कालावधिद्योतनार्थं हिशब्दः ॥

(अ० भा०) ह्यन्तराः कालाः इत्युक्तम्। अतस्तत्कालावधित्वेनायं हिशब्दः। अतः परं न परकालः पूर्वकाले पुनरिति निवृत्तम् ॥

स्पर्शे परपञ्चमम् ॥ १२ ॥

(उ० भा०) मकारः स्पर्शे प्रत्यये परस्य प्रत्ययभूतस्य पञ्चममापद्यते। परः स्पर्शो यस्मिन् वर्गे तस्य वर्गस्य पञ्चममित्यर्थः। यथा— व्रतम् कृणुत> “व्रतङ्कृणुत”। व्रतम् चरिष्यामि> “व्रतञ्चरिष्यामि”। एतम् ते देव> “एतन्ते देव सवितः”। इदम् पितृभ्यः> “इदम्पितृभ्यो नमः”। सम् ज्ञानमसि> “सञ्ज्ञानमसि” ॥

(अ० भा०) मकारः स्पर्शे परे परस्य स्पर्शस्य पञ्चमं यस्मिन्वर्गे यः पञ्चमस्तमाप्नोति। यथा—व्रतं कृणुत> व्रतङ्कृणुत। इषुं गिरिशन्त> इषुङ्गिरिशन्त। व्रतं चरिष्यामि व्रतञ्चरिष्यामि। काण्डात्काण्डात्प्ररोहन्ती आनन्दनन्दा आण्डौ मे। रोहित्कुण्डृणाची। तन्ते विष्यामि। त्वमाततन्थ। इदं पितृभ्यो नमो अस्तु। अपाम्फेनेन। इदं व्याकरणे वा पदान्तस्येति पदान्ते विकल्पेनोक्तम्। तथा ह्यत्राचार्येण पदान्तापदान्तसाधारण्येन उक्तमित्यवधेयम् ॥

तकारो ले लम् ॥ १३ ॥

(उ० भा०) तकारो लकारे प्रत्यये लकारमापद्यते। यथा— आसीत् लोकम्> “आसील्लोकम्”। परि चित् लोकम्> “परि चिल्लोकम्”। क्रमसंहितोदाहरणम् ॥

(अ० भा०) तकारे लत्वमैति लकारे परे। अनुनासिकं लकारमाप्नोति। अस्मिन् लोके> अस्मिँल्लोके ॥ त्रीन् लोकान्> त्रीँल्लोकान्। लकारे किम्? अस्मिन् क्षये ॥

नुश्चानुनासिकम् ॥ १४ ॥

(उ० भा०) नकारो लकारप्रत्यये लकारमापद्यते यदि समानानुनासिकम्। यथा—अस्मिन् लोके> “अस्मिँल्लोकेऽस्मिन् क्षये”। त्रीन् लोकान्> “त्रीँल्लोकानुदजयत्” ॥

ङ्नौ क्ताभ्यां सकारे ॥ १५ ॥

(उ० भा०) ङकारनकारौ यथासंख्यं ककारतकाराभ्यां व्यवधीयेते सकारे प्रत्यये। यथा—प्राङ्सोमः > "प्राङ्क्सोमो अतिद्रुतः" प्रत्यङ् सोमः > "प्रत्यङ्क्सोमो अतिद्रुतः"। त्रीन् समुद्रान् > "त्रीन्त्समुद्रान् समसृपत्"। अस्मान् सीते > "अस्मान्त्सीते पयसा"॥

(अ० भा०) ङकारनकारौ यथासङ्ख्यं ककारतकाराभ्यां व्यवधीयेते सकारे परे। यथा—प्राङ्सोमः > प्राङ्क्सोमः। प्रत्यङ्क्सोमः। त्रीन्त्समुद्रान् इत्यादि॥

न दाल्भ्यस्य ॥ १६ ॥

(उ० भा०) दाल्भ्यस्याचार्यस्य मते नैतावागमौ भवतः। "प्राङ्सोमः"। "प्रत्यङ्सोमः"। "त्रीन् समुद्रान्"। "अस्मान् सीते"॥

रलावृऌवर्णाभ्यामूष्मणि स्वरोदये सर्वत्र ॥ १७ ॥

(उ० भा०) रेफलकारौ ऋऌवर्णाभ्यां ऋऌसदृशश्रुतिभ्यां यथासंख्यं व्यवधीयेते ऊष्मणि परभूते स्वरपरे सर्वत्र संहितायां पदे च। अन्तःपदे नानापदे च यौ तौ विधायकावुक्तौ। तौ स्वरावुत व्यञ्जनाविति। शृणु। ऋऌस्वरसदृशौ व्यञ्जनावर्धमात्रकाविति ब्रूमः। तौ स्वरभक्तिरित्यन्येषु पदेषु प्रसिद्धौ। न चैतौ वर्णौ रेफऌकारयोरूष्मणां च मध्यवर्तिनावपि सन्तौ संयोगस्य विघातं कुरुतः। स्वरसदृशत्वात्। तथाचाह शौनकः—

"न संयोगं स्वरभक्तिर्विहन्ति"

यथा—"गार्हपत्यः"। अत्र हकाररेफयोरन्तरावपि स्वरभक्तिः सती रेफहकारयोः संयोगं न विहन्ति। एवमन्यत्रापि द्रष्टव्यम्। "अर्शस उपचितामसि"। "शतवल्शः"। "उपवल्हामसि त्वा"। पदमध्योदाहरणम्। "वेर्होत्रम्"। "सवितुर्हवामहे"। स्वरोदय इति किम्? "पार्श्वतः"। "दिवो वर्ष्मन्"। "मृदं वर्स्वैः"। "अश्रुभिर्ह्रादुनीः"॥

(अ० भा०) रेफलकारौ ऋलृवर्णाभ्यां ऋलृवर्णसदृशश्रवणाभ्यां यथासङ्ख्यं व्यवधीयेते स्वरे परे ऊष्मणि परे सर्वत्र एकपदे भिन्नपदे च। ननु यौ व्यवधायकावुक्तौ तौ स्वरौ व्यञ्जनौ वा। शृणु। ऋलृस्वरसदृशौ व्यञ्जनादर्धमात्राविति ब्रूमः। तौस्वरभक्तिरिति शाखान्तरे प्रसिद्धौ। स्वरभक्तित्वेऽपि रेफलकारयोः ऊष्मणां मध्यवर्तिनावपि सन्तौ न तत्संयोगस्य विघातं कुरुतः। तथाह शौनकः—न संयोगं स्वरभक्तिर्विहन्तीति चिन्तायाः प्रयोजनं वर्णक्रमादावुपयुज्यते। तथा गार्हपत्य इत्यत्र हकाररेफयोर्मध्ये वर्तमानस्वरभक्तिर्हकाररेफयोस्संयोगं न विहन्ति। तत्स्वरूपं तु गार्हपत्यः प्रजावाम्। अर्शस उपचितामसि। वनर्षदो वायवो न सोमाः। इति रेफोदाहरणम्। लकारस्य—शतवल्शो विरोह। सहस्रवल्शा वि वयं रुहेमेत्यादि। अनेकपदे यथा—अग्ने वेर्होत्रं वेः। प्र सवितुर्हवामहे। स्वरोदये किम्? मृदं वर्स्वैः। दिवो वर्ष्मन् समिध्यते। अश्रुभिर्ह्रादुनीः। पार्श्वतश्श्रोणितः। अन्तःपार्श्व्यम्। अत्र स्वरपरत्वाभावान्न जातमित्यर्थः॥

**प्रगृह्यं चर्चायामितिना पदेषु ॥ १८ ॥**

(उ० भा०) **प्रगृह्यसंज्ञकं यत्पदं तच्चर्चायां परभूतायामितिना आगामिकेन व्यवधीयते। चर्चाशब्देन इति करणात्परतो या तस्यैव पदस्य द्विरुक्तिः सोच्यते। पदेष्वित्यधिकारार्थं वचनम्। इतः प्रभृति पदाधिकारो वर्त्तते। यथा—"द्वे इति द्वे"। "शीर्षे इति शीर्षे"। "अस्मे इत्यस्मे"। "त्वे इति त्वे"॥**

(अ० भा०) प्रगृह्यसंज्ञं पदं चर्चायां परतः इतिशब्देन व्यवधीयते पाठेषु। प्रगृह्यसंज्ञा तूक्तैव। चर्चाशब्देन इतिकरणात्परं पुनरुक्तं कथ्यते। इतःपरं कथ्यमानं पदेषु अधिकृतं वेदितव्यम्। अधिकारोऽयम्। यथा—द्वे इति द्वे। शीर्षे इति शीर्षे। बाहू इति बाहू। अस्मे इत्यस्मे। त्वे इति त्वे। अमी इत्यमी॥

**रिफितं च संहितायामनिरुक्तम् ॥ १९ ॥**

(उ० भा०) रिफितं चशब्दादितिना आगमिकेन व्यवधीयते चर्चायां परभूतायां संहितायामनिर्ज्ञातरेफं यत्। यथा—"पुनरिति पुनः"। "स्वरितिस्वः"। संहितायामनिरुक्तमिति किम्? "पुनः मनः" ॥

(अ० भा०) संहितायामनिर्ज्ञातरेफं रिफितसंज्ञं पदं च इतिशब्देन व्यवधीयते चर्चायां परतः। रिफितसंज्ञाप्युक्तैव। तथा पुनरिति पुनः प्राणः। स्वरिति स्वः च मे। अन्तरित्यन्तः समुद्रे। देव सवितरिति सवितः प्र सुव। संहितायामनिरुक्तं किम्? पुनर्मनः। भूर्भुवस्वर्द्यौरिव। ह्यन्तरायुषि। एतत्ते देव सवितर्यज्ञम्। अत्र संहितायां स्पष्टतया रेफश्रवणात् नेतिकरणमित्यर्थः ॥

## पदावृतौ चान्तरेण ॥ २० ॥

(उ० भा०) पदस्यावृत्तिः द्विरुक्तिः। तस्यां पदावृत्तौ सत्यां अन्तरेण इति भवति। सा च नोक्ता अतस्तत्प्रतिपादनार्थमाह—

(अ० भा०) पदद्वयस्य द्विरुक्तौ खलु अन्तरेण इतिशब्द उक्तः प्रगृह्यं चर्चायामितिना। सा च नोक्ता। अतः तत्प्रतिपादनायाह—

## क्रमोक्तावृत्तिः पदेषु ॥ २१ ॥

(उ० भा०) क्रमशास्त्रे या पदावृत्तिरुक्ता सा पदेष्वपि भवति। क्रमशास्त्रातिदेशोऽयम्। तत्र चैतदुक्तमग्रे—"स्थितोपस्थितमवगृह्यस्य"। "अन्तः पददीर्घाभावे"। "विनामे"। "प्रगृह्ये"। "रिफिते निरुक्ते"। अवगृह्ये यथा—"प्रजावतीरिति प्रजा। वतीः"। अन्तः पदेदीर्घाभावे यथा—मामहानः>"ममहान इति ममहानः"। विनामे च भवति। यथा—सुषाव>"सुसावेति सु। साव"। प्रगृह्ये यथा—"इन्द्राग्नी इतीन्द्राग्नी"। रिफिते निरुक्ते भवति। यथा—"पुनरिति पुनः प्राणः" ॥

(अ० भा०) क्रमशास्त्रे या पदावृत्तिरुक्ता सा पदेष्वपि भवति। अतिदेशसूत्रमेतत्। क्रमे पदावृत्तिविधायकं तु स्थितोपस्थितमवगृह्यस्य अन्तः पददीर्घाभावे। विनामे। प्रगृह्ये। रिफितेऽनिरुक्ते इत्यग्रे। वक्ष्यति। अवग्रहे यथा—प्रजापतिरिति प्रजा पतिः। इत्यादि। अन्तःपददीर्घाभावे यथा—मामहानः > महान इति ममहानः। विनामो मूर्धन्यभावः। तत्र यथा—सुषाव > सुसवेति सु साव। इत्यादि। प्रगृह्ये यथा—द्वे इति द्वे इत्यादि। अनिरुक्ते यथा—पुनरिति पुनः प्रागः इत्यादि। इदं क्रमशास्त्रपदेष्विति द्रष्टव्यम्। तेन पदपाठेऽपि तत्र तत्र इतिशब्दो व्यवधायको भवतीत्यर्थः॥

## सुपदावसानवर्जम् ॥ २२ ॥

(उ० भा०) "क्रमोक्तावृत्तिः पदेषु" इत्युक्तम्। तस्यायमपवादः। सुपदावसाने वर्जयित्वा अन्यत्र क्रमोक्तावृत्तिर्भवति। तत्र "सुपदे शाकटायनः" इति शाकटायनमतेनावृत्तिः। सा च कतमानां भवति? अवसाने तु सर्वशाखिनामावृत्तिर्भवति। तदुभयं निषिध्यते॥

(अ० भा०) क्रमोक्तावृत्तिः पदेष्विति उक्तम्। तत्र क्वचिदपवादमाह। सुपदावसाने वर्जयित्वा पदे क्रमोक्तावृत्तिः कर्तव्या। सुपदे शाकटायनः इति सूत्रेण क्रमपाठे सुशब्दस्य आवृत्तिरुक्ता। सापि शाकटायनग्रहणात् क्वचिच्छाखान्तर एव भवति। यथा ऊर्ध्व ऊ षु णः। ॐ इत्यूम्। स्विति सु सु न इत्यादि। अवसाने सर्वशाखिनामावृत्तिर्भवति। यथा—वसोः पवित्रम्। पवित्रमसि। असीत्यसि इत्यादि। एतदुभयं पदपाठे निषिध्यते॥

## अनितावन्तर्विकारागमं प्रागुक्त्वा ॥ २३ ॥

(उ० भा०) "अनितावध्याये" इत्यत आरभ्य यावदध्यायपरिसमाप्तिरस्मिन्नन्तराले यस्य पदस्य अन्तरा विकार आगमो वा विहितस्तदन्तर्विकारागमं पदं पूर्वमुक्त्वा पश्चात् पदावृत्तिः कर्तव्या। स्थितोपस्थितं कर्त्तव्यमित्यर्थः। तत्र चोपचरितषत्वणत्वादिविकारजातमुक्त्वा।

यथा—श्रेयस्कर > “ श्रेयः करेति श्रेयः । कर ” । सुषाव > “ सुसावेति सु । साव ” । परमेष्ठी > “ परमेस्थीति परमे । स्थी ” । वृष्टिमाँ इव > “ वृष्टिमानिवेति वृष्टिमान् । इव ” । अनितावन्तर्विकारागममिति किम् ? अस्यावधेरधस्तादुपरिष्टाच्च प्राग्वचनं मा भूत् । यथा अवधेरधस्ताद्भवति । “ विसर्जनीयः ” “ यछयोः शम् ” । “ दुश्च्यवन इति दुः । च्यवनः ” । “ तथयोः सम् ” । “ तवस्तरमिति तवः । तरम् ” एवमादि । अथोपरिष्टादवधेर्दर्शयिष्यामः । “ अनुस्वारँ रोष्मसु मकारः ” । “ सँसमिति सम् । सम् ” । “ नुश्चान्तःपदेऽरेफे ” । “ पापिवाँस इति पपि । वाँसः ” “ सँस्कृतिः ” । अस्यावधेर्बहिर्यथा संहितायां पदे भवतीत्यर्थः ॥

(अ० भा०) अनितावध्याय इत्यारभ्य यावदध्यायसमाप्तिपर्यन्तं तदन्तराळे यस्य पदस्यान्तर्मध्ये विकार आगमो वा विहितः तत् अन्तर्विकारागमं पदं पूर्वमुक्त्वा पश्चान्निर्विकारागमस्यावृत्तिः कार्या । पदेषु यथा—श्रेयस्कर > श्रेयः करेति श्रेयः कर । सुषाव > सुसावेति सुषाव । प्रवाहणः > प्रवाहन इति प्रवाहनः । वृष्टिमां इव > वृष्टिमानिवेति वृष्टिमान् इव । मामहन्ताम् > मामहन्तां इति ममहन्ताम् । अनितावन्तर्विकारागमं किम्? अस्यावधेरधस्तादुपरिष्टाच्च यथैवं न स्यादिति । अवधेः प्राक् यथा—विसर्जनीयः । चछयोश्शमिति शत्वम् । दुश्च्यवन इति दुः च्यवनः । तथयोस्समिति सत्वम् । तवस्तरमिति तवः तरम् । अवधेरुपरिष्टाद्यथा—अनुस्वारं रोष्मसु मकारः इत्यनुस्वारत्वम् । संसमिति संसम् । नुश्चापदान्ते रेफ इति नकारस्यानुस्वारः पपिवांस इति पपि वांसः । एतदवधेर्हि यथा संहितायां भवति तथैव पदेष्वपि भवति । इत्यर्थः ॥

विश्पतीवेति च ॥ २४ ॥

(उ० भा०) विश्पतीवेत्येतच्च पदं प्रागुक्त्वा पश्चात् पदावृत्तिः कर्तव्या । वेष्टक इत्यर्थः । यथा—आ विश्पतीव > “ विश्पती इवेति विश्पती । इव ” । एतत्पदमस्यावधेर्बहिरन्तः प्रागुक्तिरुच्यते ॥

(अ० भा०) इदं पदं प्रागुक्त्वा पश्चात् पदावृत्तिः कार्या। यथा—आ विश्पतीव > विश्पत्नी इवेति विश्पत्नी इव। एतस्यावधिमूक्तत्वात् पृथगुक्तिः ॥

स्वरछकारे चकारेण सर्वत्र ॥ २५ ॥

(उ० भा०) स्वरो व्यवधीयते छकारे प्रत्यये परभूते चकारेणागमिकेन सर्वत्र संहितायां पदे च। यथा—"अच्छा वदामसि"। "यच्छा नः शर्म सप्रथा"। पदेषूदाहरणं यथा—"आच्छच्छन्दः। प्राच्छच्छन्दः"। "वर्मणा च्छादयामि"। संहितोदाहरणम्—"ककुप्छन्दः"। पदाधिकारात् पदेष्वेव चकारेण व्यवधानं मा भूदिति सर्वत्र ग्रहणात् संहितापदक्रमेष्वपि भवति ॥

(अ० भा०) स्वरः छकारे परे चकारेण व्यवधीयते। सर्वत्र संहितायां पदेषु च। यथा—अच्छा वदामसि। मा च्छन्दः। प्रमा च्छन्दः। कर्मणा च्छादयामि। यच्छा नश्शर्म। स्वरः किम्? व्यञ्जनस्य मा भूदिति। यथा—उष्णिक्छन्दः। विराट् छन्दः॥

यस्यातिहायसहेति न ॥ २६ ॥

(उ० भा०) यस्य अतिहाय सह इत्येतैः पदैरुपहितः स्वरः छकारे प्रत्यये न चकारेण व्यवधीयते। यस्य यथा—"यस्य छाया"। अतिहाय यथा—"अतिहाय छिद्रा गात्राणि"। सह यथा—"सह स्तोमाः सह छन्दसः" ॥

(अ० भा०) यस्य अतिहायसहशब्देभ्यः परः छकारः चकारेण न व्यवधीयते। पूर्वापवादोऽयम्। यथा—यस्य छायामृतम्। अतिहाय छिन्ना गात्राणि। परकीयमेतत्। सह स्तोमास्सह छन्दसः ॥

विश्वा ऊष्मान्तं परिद्विषस्त्वं त्वां यदजयो विराजत्यनिरा अवीवृधन् परिष्ठाः सुक्षितय आशा ओषधीराभाह्यमीवा हि मायास्तेऽसीत्येतेषु ॥ २७ ॥

(उ० भा०) विश्वा इत्येतत्पदं ऊष्मान्तं भवति परिद्विषादिप्रत्ययेषु। परिद्विषशब्दे यथा—"येन विश्वाः परिद्विषः"। त्वं यथा—"विश्वास्त्वम्प्रजा उपावरोह"। त्वां यथा—"विश्वास्त्वाम्प्रजा उपावरोहन्तु"। यदजयो यथा—"विश्वा यदजयस्पृधः"। विराजति यथा—"धियो विश्वा विराजति"। अनिरा यथा—"व्यस्यन्विश्वा अनिराः"। अवीवृधन् यथा—"इन्द्रँ विश्वा अवीवृधन्"। परिष्ठा यथा—"अतिविश्वाः परिष्ठाः"। सुक्षितयो यथा—"विश्वाः सुक्षितयः पृथक्"। आशा यथा—विश्वा आशाः प्रमुञ्चन्"। ओषधीर्यथा—"पृष्ठो विश्वा ओषधीराविवेश"। आभाहि यथा—"विश्वा आभाहि प्रदिशश्चतस्रः"। अमीवा यथा—"विश्वा अमीवाः"। हि माया यथा—"विश्वा हि मायाः"। ते यथा—"विश्वास्ते स्पृधः श्नथयन्त"। असि यथा—"अभि विश्वा असि स्पृधः"। ननु "स्वरसंस्कारयोश्छन्दसि नियमः" इति स्वरसंस्कारावधिकृतौ वेदितव्यौ। न चायं स्वरो न संस्कारः। अत्र हि इदमूष्मान्तं पदं इदं स्वरान्तं पदमित्येतदुच्यते। अप्रस्तुताभिधानमेतत्। उच्यते—पदानां सन्दिह्यमानानां निश्चयो नैव दोषायेति तावत्पश्यामः। अतः साधुपदनिश्चयलक्षणमिति। अनभिज्ञस्य बोधनार्थम् ॥

(अ० भा०) विश्वापदमूष्मान्तं स्यात्। परिद्विष इत्यादिषोळशपदेषु परेषु। यथा—येन विश्वाः परि द्विषः। विश्वास्त्वं प्रजा उपावरोह। विश्वास्त्वां प्रजा उपावरोहन्तु। विश्वायदजयस्पृधः। धियो विश्वा विराजति। व्यस्यन्विश्वा अनिराः। इन्द्रं विश्वा अवीवृधन्। अतिविश्वाः परिष्ठाः। विश्वास्सुक्षितयः। विश्वा आशाः प्रमुञ्चन्। पृष्ठो विश्वा ओषधीः। विश्वा आभाहि। विश्वा अमीवाः। विश्वा हि मायाः। द्वयं परकीयम्। विश्वास्ते स्पृधश्श्नथयन्त

मन्यवे। अभि विश्वा असि स्पृधः। एषु किम्? विश्वा रूपाणि प्रति मुञ्चते। नियमसूत्रमेतत्।

**पृथिव्या स्वरान्तं सम्भवः शुक्रो मन्थी पृथिवीं परो देवेभिरित्येतेषु ॥ २८ ॥**

(उ० भा०) पृथिव्या इत्येतत्पदं स्वरान्तं भवति सम्भवादिषु पदेषु परेषु। सम्भव यथा—"पृथिवी मा विशत पृथिव्या सम्भव"। शुक्रो यथा—"सञ्जग्मानो दिवा पृथिव्या शुक्रः"। मन्थी यथा—"सञ्जग्मानो दिवा पृथिव्या मन्थी"। पृथिवीं यथा—"पृथिव्या पृथिवीम्"। परोदेवेभिर्यथा—"पृथिव्या परोदेवेभिः"। स्वरान्तमिति किम्? "नाभा पृथिव्याः समिधाने"॥

(अ० भा०) पृथिव्या इति पदं स्वरान्तं स्यात् सम्भवादिषु पञ्चसु परेषु। यथा—पृथिव्या सम्भव। सञ्जग्मानो दिवा पृथिव्या शुक्रः। सञ्जग्मानो दिवा पृथिव्या मन्थी। प्रतिधिना पृथिव्या पृथिवीम्। पर एना पृथिव्या परो देवेभिः॥

**च विश्वा वो ब्रह्म विश्वा हरी युक्तास्ते शफानां जजान नु कमित्येतेष्विमा ॥ २९ ॥**

(उ० भा०) चविश्वादिषु प्रत्ययेषु परेषु इमा इत्येतत्पदं स्वरान्तं भवति। चविश्वा यथा—"इमा च विश्वा भुवनानि"। वो यथा—"इमा वो हव्या चकृमा जुषध्वम्"। ब्रह्म यथा—"इमा ब्रह्म पीपिहि सौभगाय"। विश्वा यथा—"य इमा विश्वा भुवनानि जुह्वत्"। हरी यथा—इमा हरी वहतस्तानो अच्छ"। युक्ता यथा—"सवना कृतेमा युक्ता ग्रावाणः"। ते यथा—"इमा ते वाजिन्नवमार्जनानि"। शफा यथा—"इमा शफानां सनितुः"। जजान यथा—"न तं विदाथ य इमा जजान"। नुकं यथा—"इमा नु कं भुवना सीषधाम"॥

(अ० भा०) इमा इति पदं स्वरान्तं स्यात् चविश्वादिदशसु परेषु। यथा—इमा च विश्वा। इमा वो हव्या चकृमा। इमा ब्रह्म पीपिहि सौभगाय। य इमा विश्वा भुवनानि जुह्वत्। इमा हरी वहतस्ताः। सवनाकृतेमा युक्ताः। इमा ते वाजिन्। इमा शफानां सनितुर्निधाना। य इमा जजानान्यत्। इमा नु कं भुवना सीषधामेन्द्रः॥

हवेमोतेमा च॥ ३०॥

(उ० भा०) हवेमा उतेमा एते च द्वे पदे यथागृहीतमेव स्वरान्ते भवतः। हवेमा यथा—"श्रुतम्मे मित्रावरुणा हवेमा"। उतेमा यथा—"विश्वकर्मन्नुतेमा"॥

(अ० भा०) इदं द्वयं स्वरान्तं स्यात्। श्रुतं मे मित्रावरुणा हवेमा। विश्वकर्मन्नुतेमा॥

विष्णो ते बभूव नासत्या भिषजा न आवोढं या देवा हविषो नो मृडातो नो अच्छ विमुञ्चेत्येतेषु ता॥ ३१॥

(उ० भा०) विष्णो इत्यादिषु प्रत्ययेषु परेषु ता इत्येतत्पदं स्वरान्तं भवति। विष्णो यथा—"ता विष्णो पाहि"। ते यथा—"सर्वा ता ते ब्रह्मणा सूदयामि"। बभूव यथा—"परि ता बभूव"। नासत्या यथा—"ता नासत्या सुपेशसा"। भिषजा यथा—"ता भिषजा सुकर्मणा"। न आवोढं यथा—"ता न आवोढमश्विना"। या देवा यथा—"इति ता या देवा देवदानानि"। हविषो यथा—"स्रुचेव ता हविषो अध्वरेषु"। नो मृडातो यथा—"ता नो मृडात ईदृशे"। अच्छ यथा—"इमा हरी वहतस्ता नो अच्छ"। विमुञ्च यथा—"नियुद्भिर्वायविह ता विमुञ्च"॥

(अ० भा०) ता इति पदं स्वरान्तं स्याद्विष्णवादि एकादशसु परेषु। योनौ ता विष्णो पाहि। ता ते विश्वाः परिभूः। परि ता

बभूव। ता नासत्या सुपेशसा। ता भिषजा सुकर्मणा। ता न आवोढम्। ता नः ऊर्जे। ता या देवा देवदानानि सुचेव। ता हविषो अध्वरेषु। ता नो मृडात ईदृशे। हरी वहतस्तानो अच्छ। इह ता विसुञ्च।

ता ता च॥ ३२॥

(उ० भा०) एतौ च ताताशब्दौ पदावयवभूतौ स्वरान्तौ भवतः। यथा—"ता ता पिण्डानां प्रजुहोम्यग्नौ"॥

(अ० भा०) इदमपि स्वरान्तं स्यात्। ता ता पिण्डानां प्रजुहोम्यग्नौ। परकीयमेतदुदाहरणम्॥

हविर्दम्पत्योः साध्या दा॥ ३३॥

साध्यां दा इति द्वयं स्वरान्तं स्यात् क्रमेण हविर्दम्पत्योः परयोः। यथा—याहि साध्या हविरदन्तु। यदाशीर्दा दम्पती। एतयोः किम्? भृगुभिरावशीर्दा वसुभिः॥

धिष्ण्या वरिवो विदं धिष्ण्या युवमिति च॥ ३४॥

(उ० भा०) एतौ च यथागृहीतौ धिष्ण्याशब्दौ स्वरान्तौ भवतः। यथा—"धिष्ण्या वरिवो विदम्"। यथा—"तदश्विना श्रृणुतं धिष्ण्या युवम्"। इति शब्दः पदाधिकारप्रकरणसमाप्तिज्ञापनार्थः॥

(अ० भा०) एतौ धिष्ण्याशब्दौ स्वरान्तौ स्तः वरिवो विदं युवं शब्दयोः परयोः। धिष्ण्या वरिवो विदम्। तदश्विना श्रृणुतम् धिष्ण्या युवम्। एतौ किम्? पुच्छं धिष्ण्याश्शफाः। इतिशब्दः शब्दाधिकारसमाप्तिज्ञापनार्थः।

भाव्युपधश्चरिद्धिसर्जनीयः॥ ३५॥

(उ० भा०) भावी उपधाभूतो यस्य स भाव्युपधः। योऽसौ विसर्जनीयः। रिद्विसर्जनीयश्च "विसर्जनीयो रिफितः" इत्यत आरभ्य यः परिभाषितः। एतौ विसर्जनीयावधिकृतौ वेदितव्यौ। अधिकारसूत्रमेतत् ॥

(अ० भा०) भाविसंज्ञस्वरः उपधाभूतः यस्य सः। तथा तादृशसंज्ञः विसर्जनीयः। विसर्जनीयो रिफित इत्यारभ्य परिभाषितो विसर्जनीयश्च। एतावत्राधिकृतौ वेदितव्यौ अधिकारोऽयं सूत्रः ॥

## रेफे लुप्यते दीर्घं चोपधा ॥ ३६ ॥

(उ० भा०) रेफे प्रत्यये लुप्यते विसर्जनीयः उभयरूपोऽपि भाव्युपधो रिद्विसर्जनीयश्च। उपधाभूतश्च स्वरो दीर्घमापद्यते। भाव्युपधो भवति यथा—रुद्रः रौद्रः > "रुद्रू रौद्रः कवयिः"। मतिभिः रिहन्ति > "मतिभी रिहन्ति"। रिद्विसर्जनीयो भवति यथा—प्रातः रात्रिः > "प्राता रात्रिः"। पुनः रक्तम् > "पुना रक्तम्" रूपोदाहरणमेतत्। उपरितनसूत्रे प्रयोजनं भविष्यति। भावीत्यादि किम्? "परि नो रुद्रस्य" ॥

(अ० भा०) पूर्वोक्त उभयरूपो विसर्जनीयः लुप्यते रेफे परे। उपधास्वरश्च दीर्घमापद्यते। तत्र भाव्युपधो यथा— मतिभिः रिहन्ति > मतिभी रिहन्ति। निःरपांसि > नीरपांसि मृक्षतम्। रुरू रौद्रः। रिद्विसर्जनीयो यथा—प्रातः रात्रिः > प्राता रात्रिः। प्रवर्ग्योदाहरणमिदम्। पुनः राजति > पुना राजति। रूपोदाहरणमिदम् ॥

## रेफँ स्वरधौ ॥ ३७ ॥

(उ० भा०) रेफमापद्यते उभयरूपो विसर्जनीयः स्वरेषु परभूतेषु धिसंज्ञकेषु च परभूतेषु। स्वरे भवति यथा—अग्निः एकाक्षरेण > "अग्निरेकाक्षरेण"। प्रातः अग्निम् > "प्रातरग्निम्"। प्रातः इन्द्रम् > "प्रात-

रिन्द्रम्"। धिसंज्ञकेषु भवति यथा—विरुरुचुः वनेषु > "विरुरुचुर्वनेषु"। सवितः वामम् > "सवितर्वामम्"। भावीत्यादि किम्? "दिवो मूर्धा"।

(अ० भा०) उभयरूपो निसर्जनीयः रेफमापद्यते स्वरे धिसंज्ञे परे। अग्निः एकाक्षरेण > अग्निरेकाक्षरेण। तनूः असि > अग्नेस्तनूरसि। अग्नेः अधि > यो अग्निरग्नेरध्यजायत। वायोरिह इति। भाव्युपधस्य रिद्विसर्जनीयस्य स्वरे यथा। पुनः आसद्य > पुनरासद्य सदनम्। पुनरग्ने। अन्तरग्ने। पुनरेहि। उभयस्यापि धौ यथा—वि रुरुचुर्वनेषु। वाममद्य सवितर्वामम्। अग्निर्मा। अग्निर्भानुना। इत्यादि॥

कण्ठ्यपूर्वो यकारमरिफितः॥ ३८॥

(उ० भा०) अवर्णः कण्ठ्यः अवर्णपूर्वो विसर्जनीयो अरिफितो यकारमापद्यते। स्वरेषु यथा—श्वित्रः आदित्यानाम् > "श्वित्रयादित्यानाम्" इत्येवं स्थिते "यवयोः पदान्तयोः" इत्यादिना यकारलोपः। ततः श्वित्र आदित्यानाम् इति रूपं सिध्यति। इन्द्रः एकम् > "इन्द्र एकं सूर्यम्"। याः ओषधीः > "या ओषधीः"। याः अफलाः > "या अफला अपुष्पाः"॥

(अ० भा०) अवर्णपूर्वो रिफितवर्जितो विसर्जनीयः यकारमाप्नोति स्वरे परे यथा—श्वित्रय् आदित्यानामित्यत्र यवयोः पदान्तयोः स्वरमध्ये लोपः इति यकारलोपे कृते श्वित्र आदित्यानामिति सिध्यति। तथा—इन्द्र एकम्। सूर्य एकम्। या ओषधीः। या अफला अपुष्पा याश्च॥

लोपन्धौ॥ ३९॥

(उ० भा०) अरिफितः कण्ठ्यपूर्वो विसर्जनीयो लोपमापद्यते धिसंज्ञकेषु प्रत्ययेषु। अयक्ष्माः मा > "अयक्ष्मा मा वः"। शततेजः वायुः > "शततेजा वायुरसि"। अरिफित इति किम्? "मा हार्मा ते यज्ञपतिः"॥

(अ० भा०) रिफितः कण्ठ्यपूर्वो विसर्जनीयः लुप्यते यौ परे यथा अयक्ष्माः > मा। अयक्ष्मा मा। देया यज्ञमतन्वत। शततेजा वायुः। अरिफितः किम्? ह्वार्मानि। पुनर्मनः।

भूमेश्चाकारेऽपृक्ते ॥ ४० ॥

(उ० भा०) भूमिशब्दसम्बन्धी विसर्जनीयो लुप्यते आकारेऽपृक्तसंज्ञके परे। यथा—भूमिः आददे > "दिवि सद्भूम्याददे"। आकारेऽपृक्ते इति किम्? "भूमिरावपनम्महत्" ॥

(अ० भा०) भूमिशब्दस्य विसर्जनीयो लुप्यते। अपृक्ते अकारे परे भूमिः आददे दिविषद्भूम्याददे। परकीयमिदम्। आ अपृक्ते किम्? भूमिरावपनं महत् ॥

यकाराकारयोर्जास्पत्ये पदे ॥ ४१ ॥

(उ० भा०) जास्पत्ये पदे यकारस्य च लोपो भवति। जायास्पत्यमिति प्राप्ते यकाराकारयोर्लोपे कृते जास्पत्यमिति रूपं भवति। यथा—"सञ्जास्पत्यँ सुयममाकृणुष्व" ॥

(अ० भा०) जास्पत्ये परे यकाराकारौ लुप्यते। यथा—जायास्पत्यमिति प्राप्ते सञ्जास्पत्यं सुयममाकृणुष्व।

अलोपो माँस्पचन्याः ॥ ४२ ॥

(उ० भा०) अकारलोपो माँस्पचनीशब्दे द्रष्टव्यः। माँसपचनी इति प्राप्ते—"यन्नीक्षणं माँस्पचन्याः"।

(अ० भा०) मांस्पचन्या इति पदे अकारलोपः स्यात्। मांसपचन्या इति प्राप्ते। यन्नीक्षणं मांस्पचन्याः

सर्वो अकार ओकारम् ॥ ४३ ॥

(उ० भा०) सर्वः अकारः ओकारमापद्यते। सर्वग्रहणात् सोपधो विसर्जनीयो घिसंज्ञकेषु प्रत्ययेषु। यथा—अघशंसः धुराः "अघशंसो धुराः" "मातरिश्वनः घर्मः > मातरिश्वनो घर्मः"। अरिफित इति किम्? "पुनर्मनः"॥

(अ० भा०) सर्वो विसर्जनीयः ओकारमेति। घिसंज्ञेषु परेषु सर्वग्रहणादुपधया सह वर्तमानः। यथा—मातरिश्वनोः घर्मः। अरिफित इत्येव। पुनर्मनः। अन्तर्यच्छ॥

अकारे च॥ ४४॥

(उ० भा०) अकारे च प्रत्यये सर्वो अकार ओकारमापद्यते। यथा—वेदः असि > 'वेदोऽसि"। "अग्ने गुवोऽग्ने पुवः"। अरिफित इति किम्? "पुनरग्ने"। "पुनरायुः"॥

(अ० भा०) अकारे परे अपि अकारः ओत्वमेति। अग्ने गुवः अग्ने पुवः > अग्ने गुवोऽग्ने पुवः। देवो अग्निस्स्विष्टकृत्। अरिफित इत्येव। पुनरग्ने॥

एषो ह च॥ ४५॥

(उ० भा०) एष इत्ययं विसर्जनीय ओकारमापद्यते ह इत्येतस्मिन् पदे प्रत्यये। अत्रायमत्र "एष च" इत्यनेन एषशब्दस्य व्यञ्जनमात्रे विसर्जनीयलोपो विहितः तेनात्र ओकारो निपात्यते। यथा—"एषो ह देवः"॥

(अ० भा०) एषसम्बन्धी विसर्जनीयः ओत्वमेति हशब्दे परे। यथा—स्य एष च इति प्राप्तस्यापवादः अयं सूत्रः। यथा—एषो ह देव। हशब्दे किम्? एष ते रुद्रभागः॥

स्वा रुहावहश्च रात्र्याम् ॥ ४६ ॥

(उ० भा०) स्वरित्ययं विसर्जनीयो रुहौ प्रत्यये ओकारमापद्यते अहरित्ययं च रात्रिप्रत्यये । यथा—स्वः रुहाणाः > "स्वो रुहाणा अधिनाकम्" । स्वः रोहाव > "जाय एहि स्वो रोहाव" । अहः रात्रे > "श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे" । "अहोरात्रे उर्वष्ठीवे" । "अहोरात्रास्ते कल्पन्ताम्" ॥

(अ० भा०) स्वरित्ययं विसर्जनीयः ओत्वमेति रुहधातौ परे अहरित्ययं विसर्जनीयोऽपि ओत्वमेति रात्रिशब्दे परे । यथा—स्वः रुहाणाः > स्वो रुहाणा अधि नाकम् । जाया एहि स्वो रोहाव । रुहधातौ किम्? स्वश्चिताना: । अहोरात्रे उर्वष्ठीवे । पत्न्या अहोरात्रे । अहोरात्रास ते कल्पन्ताम् । रात्र्या किम् । अहर्पतये स्वाहा ॥

स्वरे भाव्यन्तस्थाम् ॥ ४७ ॥

(उ० भा०) स्वरेऽपवर्णे प्रत्यये भावी अन्तस्थामापद्यते । यथा—त्रि अम्बकम् > "त्र्यम्बकँ यजामहे" । वाजी अर्वन् > "आशुर्भव वाज्यर्वन्" । द्रु अन्नः > "द्रून्नः सर्पिरासुतिः" । वीडु अङ्गः > "स्थिरो भव वीड्वङ्गः" ॥

(अ० भा०) भाविसंज्ञः स्वरः असवर्णे स्वरे परे अन्तस्थामाप्नोति । यथा त्रि अम्बकम् > त्र्यम्बकं यजामहे । वाज्यर्वन् । द्रुन्नः । वनस्पते वीड्वङ्गः । असवर्णे किम्? अनु उत् अनूज्जेषम् ॥

सन्ध्यक्षरमयवायावम् ॥ ४८ ॥

(उ० भा०) ए ओ ऐ औ एतानि च यथाक्रमं स्वरे प्रत्यये अय अव् आय् आव् द्विवर्णमापद्यते । यथा—इडे एहि > "इड एहि" । कृशानो एते > "कृशानवेते" । सरस्वत्यै अग्रजिह्वम् > "सरस्वत्या

अग्रजिह्वम्" । हिरण्यरूपौ उषसः > "हिरण्यरूपा उषसः" । अत्र च "यवयोः पदान्ततः" इत्यादिना यकारवकारलोपः । "न वकारस्यासस्थान एकेषाम्" इति न वकारस्य लोपः ॥

(अ० भा०) एकार ओकार ऐकार औकाराणि एतानि यथाक्रमं अ आ इति वर्णद्वयमापद्यते स्वरे परे। यथा इळ एहि । अदित एहि । काम्य एहि । इष्टौ > प्रचिकित्सा गइछौ । सरस्वत्या अग्रजिह्वम् । हिरण्यरूपा उषसः । अत्र सर्वत्र यवयोः पदान्तयोः स्वरमध्ये लोप इति यवयोर्लोपः । न परकाल इति सन्ध्यभावः ॥

उदात्तस्यान्तस्थीभावे स्वरितं परमनुदात्तम् ॥ ४९ ॥

(उ० भा०) उदात्तस्य स्वरस्यान्तस्थापत्तौ सत्यां परं यदनुदात्तमक्षरं तत् स्वरितं भवति । त्रि अम्बकम् > "त्र्यम्बकम्" । देवी एतु > "देव्येऽतु सूनृता" । द्रु अन्नः > "द्वन्नः" । नु इन्द्र > "योजान्विन्द्र" । ननु "युवर्णौ यवौ क्षैप्रः" इत्यत्र स्वरो विहितः । पुनः किमर्थमिदमुच्यते ? "स्वरितं पदं परमनुदात्तम्" इति द्वयोः स्वरयोः सन्धावयं स्वरितो निगद्यते । तत्र न ज्ञायते किं पूर्वस्य स्वरस्य स्थाने स्वरित उत उत्तरस्य ? तत्र यत्परमक्षरमनुदात्तं तत् स्वरितं भवतीति सूत्रारम्भार्थः ॥

(अ० भा०) उदात्तस्वरस्य अन्तस्थापत्तौ सत्यां तस्मात्परमनुदात्तं स्विरतः स्यात् । यथा—त्रि अम्बकम् > त्र्यम्बकम् । देवी एतु > प्र देव्येतु सूनृता । नु इन्द्र > न्विन्द्र । ननु युवर्णौ यवौ क्षैप्रः इत्यनेनैवायमर्थः सिद्धः । तत् किमर्थमिदमिति चेत् । सत्यम् । द्वयोस्सन्धौ यः स्वरः विधीयते तत्र न ज्ञायते किं पूर्वस्य स्थाने स्वरो विधीयते उतोत्तर स्येति । तत्रोत्तरस्यैवेति नियमार्थमिदं सूत्रमित्यदोषः ॥

कण्ठ्य ऋकारे ह्रस्वम् ॥ ५० ॥

(उ० भा०) कण्ठ्यः स्वरः ऋकारे प्रत्यये ह्रस्वस्वरमापद्यते। यथा—विश्वकर्मा ऋषिः > "विश्वकर्म ऋषिः"। स्वाहा ऋषभम् > "स्वाह ऋष मिन्द्राय"। येन ऋषयः > "येन ऋष भस्तपसा"। यत्र ऋषयः > "यत्र ऋषयो जग्मुः"। ह्रस्वस्य स्थाने ह्रस्वो विधीयमानोऽन्यस्याः संहिताया निवृत्तिं करोति। विवृत्तिसंहितैवात्र भवति न स्वरसंहिता॥

(अ० भा०) कण्ठ्यस्वरः ऋकारे परे ह्रस्वमाप्नोति। यथा—विश्वकर्मा ऋषिः> विश्वकर्म ऋषिः। स्वाह ऋषभमिन्द्राय। कण्ठ्य इति सामान्ये निर्देशात् ह्रस्वस्य ह्रस्वो विधीयते। ह्रस्वस्य ह्रस्वविधानं च सन्ध्यन्तरव्यावृत्यर्थम्। येन ऋषयस्तपसा। यत्र ऋषयो जग्मुः। सप्त ऋषयः। आर्त्ये इत्यादौ विशेषो वक्ष्यति।

## अथैकमुत्तरश्च॥ ५१॥

(उ० भा०) अथानन्तरमुत्तरो वर्णः चशब्दात् पूर्वश्च एकं वर्णं विकारभूतमापद्यते॥ इत्येतदधिकृतं वेदितव्यम्॥

(आ० भा०) अथ अनन्तरमुत्तरो वर्णः चशब्दात्पूर्वो वर्णश्च एकवर्णमापद्यते। इत्यधिकृतं वेदितव्यम्। अधिकारोऽयमुत्तरार्थः।

## सिँ सवर्णे दीर्घम्॥ ५२॥

(उ० भा०) "सिमादितोऽष्टौ स्वराणाम्" इत्युक्तम्। सिसंज्ञकः स्वरः सवर्णे स्वरे प्रत्यये परे पूर्व उत्तरश्च एकं वर्णं दीर्घमापद्यते। यथा—प्र अर्पयतु > "प्रार्पयतु"। तत्र अयम् > "तत्रायम्"। नासत्या अश्वावत् > "नासत्याश्वावत्"। स्रुचि इव > "स्रुचीव घृतम्"। हि इम् > "विशीमिद्धः"। अनु उत् > "अनूज्जेषम्॥

(अ० भा०) सिमादितोऽष्टौ स्वरा इत्युक्तम्। सिसंज्ञः स्वरः सवर्णे परे दीर्घमापद्यते। स चोभयस्थाने वेदितव्यः। अधिकारात् > यथा—प्र अर्पयतु

प्रार्पयतु । नासत्याश्वावत । स्रुचि इव > स्रुचीव घृतम् । हि ईम् > विहीमिद्धः । अनु उत् > अनूज्जेषम् ॥

अनुनासिकवत्यनुनासिकम् ॥ ५३ ॥

(उ० भा०) अनुनासिकवत्येकीभावे पूर्वश्च परश्च एकमनुनासिकमापद्यते । यथा—उप अँशुः > "उपाँशुः" । उप अँशुना > "उपाँशुना सममृतत्वम्"। "अनुनासिका चोपधा" इत्यादिना एकस्मिन् पक्षे उपधानुनासिक्यम् एकस्मिन् पक्षे अनुस्वारो विहितः । तत्र यस्मिन् पक्षे उपधानुनासिक्यं तमधिकृत्योच्यत एतत् "अनुनासिकवत्यनुनासिकम्" इति ॥

(अ० भा०) अनुनासिकवत्युत्तरस्वरे अनुनासिकदीर्घमाप्नोति । यथा—उप > अंशुः उपांशुश्च मे । उपांशोर्वीर्येण ॥

कण्ठ्यादिवर्ण एकारम् ॥ ५४ ॥

(उ० भा०) कण्ठ्यात्पर इवर्णः पूर्वस्वरश्च परश्च कण्ठ्य एकमेकारं वर्णमापद्यते । यथा—वरुण इह > "वरुणेह बोधि"। आ इदम् > "एदमगन्म" ॥

(अ० भा०) कण्ठ्यात्पर इवर्णः पूर्वश्च एकारमापद्यते । यथा—वरुण इह > अहेळमानो वरुणेह बोधि । अ इदम् > एदमगन्म ॥

उवर्ण ओकारम् ॥ ५५ ॥

(उ० भा०) कण्ठ्यादुत्तरे उवर्णे कण्ठ्य उवर्णश्चैकमोकारमापद्यते । यथा—त्वा ऊर्जे > "त्वोर्जे" । त्वा उत्तरतः > "मित्रावरुणौ त्वोत्तरतः" ॥

(आ भा०) कण्ठ्यपूर्वे उत्तरवर्णश्च ओकरमाप्यते । यथा—त्वा उत्तरतः > मित्रावरुणौत्वोत्तरतः । इहोर्जं दधात ॥

समुद्रस्येमँस्त्वेमँस्त्वोज्मन्निति च ॥ ५६ ॥

(उ० भा०) "सन्ध्यक्षर ऐकारौकारौ" इति वक्ष्यति। तस्य पुरस्तादपवादभूत उत्तरसन्ध्यक्षरस्वरूप एकादेशो निपात्यते। यथा—समुद्रस्य एमन् > "समुद्रस्येमन्"। त्वा एमन् > "अपान्त्वेमन्"। त्वा ओज्मन् > "अपान्त्वोज्मन्" ॥

(अ० भा०) सन्ध्यक्षर एकारौकाराविति वक्ष्यति। तस्यायं पुरस्तादपवादः। समुद्रस्येमन्नित्यादि त्रिषु पदेषु कण्ठ्यस्य एकारओकारयोः परतः एकार ओकारश्च यथाक्रमं स्यात्। यथा—समुद्रस्य एमन् > अपां पृष्ठे समुद्रस्येमन्। अपान्त्वेमन्। अपान्त्वोज्मन् ॥

एजत्योजोरेकेषाम् ॥ ५७ ॥

(उ० भा०) अवर्णात् पूर्वस्मादेजत्योजसोः प्रत्यययोरेकेषामाचार्याणां मतेन उत्तरसवर्ण आदेशो भवति। एजति यथा—न एजति > "नेजति"। ओजः यथा—सह ओजः > "वागोजः सहोजः"। एकेषामिति किम्? तदेजति तन्नैजति। वागोजः सहौजः ॥

(आ० भा०) अवर्णस्य एजत्योजशब्दयोः परयोरुभयोः स्थाने पररूपः स्यादेकेषां आचार्याणां मते। एकशब्दोऽत्र मुख्यवचनः। मुख्ये भवत्वात् प्रथमशाखिनामित्यर्थः। न एजति > तदेजति तन्नेजति। सह ओजः > वागोजःसहोजः। एकेषां किम्? माध्यन्दिनादीनां मा भूदिति। यथा तन्नैजति। सहौजः ॥

सन्ध्यक्षर ऐकारौकारौ ॥ ५८ ॥

(उ० भा०) अवर्णः सन्ध्यक्षरे प्रत्यये पूर्व उत्तरश्च एकदक्षरमापद्यते ऐकारं औकारं च। अत्र चत्वारि सन्ध्यक्षराणि। द्वावेतौ विकारौ ऐकारौकारौ। तत्र यथासम्भवात् "विकारी यथासन्नम्" इति एकारे

ऐकारे च प्रत्यये ऐकारो भवति। ओकारे औकारे च प्रत्यये औकारो भवति। एकारे भवति यथा—स्वाहा एकशताय > “स्वाहैकशताय”। ऐकारे भवति यथा—इन्द्राय ऐन्द्रम् > “इन्द्रायैन्द्रम्”। ओकारे भवति यथा—इन्द्र ओजिष्ठ > “इन्द्रौजिष्ठ”। औकारे भवति यथा—प्र औक्षन > “प्रौक्षन्”॥

(अ० भा०) अवर्णः सन्ध्यक्षरे परे ऐकारमौकारं चाप्नोति। अवर्णस्य एकारे ऐकारे च परे ऐकारः भवति। अवर्णस्य ओकारे औकारे च परे ओकारो भवतीत्यर्थः। विकारी यथासन्नम् इति परिभाषितत्वात्। यथा स्वाहा एकशताय शताय > स्वाहैकशताय स्वाहा। इन्द्राय ऐन्द्रम् > इन्द्रायैन्द्रं सदस्कृतम्। इन्द्र ओजस्वन् > इन्द्रौजस्वन्। प्र औक्षन् > प्रौक्षन्पुरुषम्॥

## वाह्रौ च स्वरभूते ॥ ५९ ॥

(उ० भा०) वाहौ च प्रत्यये स्वरभूते पूर्वः कण्ठ्यः उत्तरश्च वाहेः सम्बन्धी उवर्ण एकमौकारमापद्यते। यथा—तुर्य्य ऊही > “तुर्यौही”। पष्ठ ऊही > “पष्ठौही”। स्वरभूत इति किम्? “पष्ठवाद् च मे”। “उवर्ण ओकारम्”। इत्यस्यायमपवादः॥

(अ० भा०) अवर्णस्वरभूते वाहधातौ परे उकारं औकारमापद्यते। यथा—तुर्य ऊहि > तुर्यौही च मे। पउ ऊहि > पठौही च मे। स्वरभूत इति किम्? पष्ठवाट् च मे। उवर्ण ओकारमित्यस्यापवादः।

## आरमृकारोऽपृक्तात् ॥ ६० ॥

(उ० भा०) अपृक्तात्पदात् पर ऋकार आरमापद्यते सहापृक्तेन। यथा—आ ऋत्यै > “आर्त्यै परिवित्तम्” अत्र स्वरो रेफस्तकारमारोहति॥

(अ० भा०) अपृक्तपदात् पर ऋकारः पूर्वेण सह आर्त्यैभावमेति। यथा—आ ऋत्यै > आर्त्यै परिवित्तम्। अत्र रेफः तकारमाप्नोति। लेखनदशायांकण्ठ्य ऋकारे ह्रस्वमित्यस्यापवादोऽयं सूत्रम्॥

**ऌकारश्चाल्कारम्॥ ६१॥**

**(उ० भा०) इदं सूत्रं केचिन्न पठन्ति व्यर्थत्वात्। ऌकारश्चाल्कारमापद्यते। आ ऌकारः > "आल्कारः"॥**

(अ० भा०) अपृक्तपदात्परः ऌकारः पूर्वेण सह अल्भावमाप्नोति। यथा—आ ऌकारः > आल्कारः। रूपोदाहरणमिदम्। संहितायामुदाहरणाभावेऽपि यल्लक्षणमुच्यते तच्छिष्याणां लौकिकप्रयोगव्युत्पत्यर्थं प्रसङ्गादाचार्येणोक्तं शाखान्तरोदाहरणसिध्यर्थं वेत्यवधेयम्॥

**एदोद्भ्यां पूर्वमकारः॥ ६२॥**

**(उ० भा०) एकारौकाराभ्यां पर अकारः पूर्वरूपमापद्यते। यथा—ते अवन्तु > "तेऽवन्त्वस्मान्"। ते अप्सरसाम् > "तेऽप्सरसाम्"। वेदः असि > "वेदोऽसि"। स्तुपः असि > "स्तुपोऽसि"। "सर्वो अकार ओकारम्"। "अकारे च" इत्यनेन च ओकारः॥**

(अ० भा०) एकारोकाराभ्यां पर अकारः पूर्वरूपमापद्यते यथा—ते अवन्तु > तेऽवन्तु। ते अप्सरसाम् > तेऽप्सरसाम्। वेदः असि > वेदोऽसि। कृष्णः असि > कृष्णोऽसि। सर्वो अकार ओकारम्। अकारे च। इत्यनेनात्र विसर्जनीयस्य ओकारः॥

**तौ चेदुदात्तावनुदात्ते स्वरितौ॥ ६३॥**

**(उ० भा०) तौ यदि एकारौकारौ उदात्तौ भवतः तदा अनुदात्ते अकारे परे स्वरितौ भवतः। यथा—वेदो असि >**

"वेशोऽसि"। स्तुपो असि > "स्तुपोऽसि"। ते अप्सरसाम् > "तेऽप्सरसाम्"। "एदोद्भ्यामकारो लुगभिनिहितः" इति स्वरितत्वं विहितमेव। इह त्वपवादार्थं तदुच्यते ॥

(अ० भा०) तौ एदोतौ उदात्तौ सन्तौ अनुदात्ते परे स्वरितौ स्तः परश्चेत्पूर्वरूपमापद्यते। उक्तान्येवोदाहरणानि। अयं च स्वरः अभिनिहत इत्युक्तः। एदोद्भ्यामकारो लुगभिनिहत इति सूत्रेण ॥

न देशे भवति ॥ ६४ ॥

(उ० भा०) देशे इत्ययमेकारः अभवदित्यस्मिन् प्रत्यये न स्वरितो भवति। यथा—देशे अभवत् > "सो देशेऽभवत्सरित्" ॥

(अ० भा०) अत्र परे लुप्तेऽपि स्वरितः न स्यात्। पूर्वापवादः। सो देशेऽभवत्सरित् ॥

गाहमानः शिवा भरन्तो द्वेषोभ्यो जम्भयन्तो वाजे वाजजितः मदन्तः शोचेऽवसे सुषुवे ज्योते सुपर्णो वीरुधः सुवीरो धातवे सूनवे द्रूणानो आशवो वहतः सङ्क्रन्दनो बाहवोऽयुध्योऽद्रुहः ॥ ६५ ॥

(उ० भा०) एतेभ्य एकारैकारेभ्यः परोऽकारोऽभिनिधीयते। अभिनिधानं च पूर्वरूपता। गाहमानो यथा—"गाहमानोऽद्यः"। शिवो यथा—"अहिं सन्नः शिवोऽतीहि"। भरन्तो यथा—"भरन्तोऽश्वायेव तिष्ठते"। द्वेषोभ्यो यथा—"द्वेषोभ्योऽन्यकृतेभ्यः"। जम्भयन्तो यथा—"जम्भयन्तोऽहिम्"। वाजे यथा—"वाजे वाजेऽवत"। वाजजितो यथा—"वाजजितोऽध्वनः"। मदन्तो यथा—"मदन्तोऽग्ने मा ते"। शोचे यथा—"भद्रशोचेऽपूरम्"। अवसे यथा—"अवसेऽग्निमन्वारभामहे"। सुषुवे यथा—"सुषुवेऽग्रे सोमम्"। ज्योते

यथा—“ज्योऽदितिं सरस्वति”। सुपर्णो यथा—“सुपर्णोऽसि गरुत्मान्”। वीरुधो यथा—“वीरुधोऽस्यै सन्दत्त”। सुवीरो यथा—“सुवीरोऽवीरहा”। धातवे यथा—“सरस्वति तमिह धातवेऽकः”। सूनवे यथा—“सूनवेऽग्ने सूपायनो भव”। द्रूणानो यथा—“द्रूणानोऽस्तासि”। आशवो यथा—“आशवोऽस्तम्”। वहतो यथा—“वहतोऽप्रतिधृष्टशवसम्”। सङ्क्रन्दनो यथा—“सङ्क्रन्दनोऽनिमिषः”। बाहवो यथा—“बाहवोऽनाधृष्या यथासथ”। अयुध्यो यथा—“अयुध्योऽस्माकं सेनाः”। अद्रुहो यथा—“अद्रुहोऽनमीवा इषो महीः”। ननु “एदोद्भ्यां पूर्वमकारः” इत्यनेनैवाभिनिहितः सिद्धः। किमर्थं गाहमानादिभ्य उत्तरस्याकारस्याभिनिधानमुच्यते? नैवाभिनिहितः सिद्धः “प्रकृतिभाव ऋक्षु” इति प्रकृतिभावमृक्षु वक्ष्यति। तस्यायं पुरस्तादपवादः॥

(अ० भा०) गाहमान इत्यादि चतुर्विंशतिपदेभ्यः परः अकारः पूर्वरूपमापद्यते। एदोद्भ्यां पूर्वमकार इति पूर्वरूपे सिद्धेऽपि प्रकृतिभावमृक्ष्विति प्रकृतिभावः वक्ष्यति। तस्यायमपवादः। यथाक्रमेणोदाहरणम्—गाहमानोऽदायो वीरः। अहिं सन्नः शिवोऽतीहि। भरन्तोऽश्वायेव तिष्ठते घासमस्मै। द्वेषोभ्योऽन्यकृतेभ्यः। जम्भयन्तोऽहिं वृकम्। वाजे वाजेऽवत। वाजजितोऽध्वनः स्कभ्नन्तः। परेषामिदम्। मदन्तोऽग्ने मा ते। भद्रशोचेऽपूपं देव। सोमं राजानमवसेऽग्निम्। प्रसवस्सुपुवेऽग्रे सोमम्। ज्यानेऽदिते सरस्वति। सुपर्णोऽसि गरुत्मान्। सर्वास्सङ्गत्य वीरुधोऽस्यै। सुवीरोऽवीरहा। सरस्वति तमिह धातवेऽकः। अकरिति अस्य रिफितसंज्ञा। ह्वास्सवितरिति सूत्रेण। स नः पितेव सूनवेऽग्ने सूपायनो भव। प्रसितिन्द्रूणानोऽस्तासि विध्यरक्षसः। आशवोऽस्तन्नित्यासो वाजिनः। हरी वहतोऽप्रतिधृष्टशवसम्। सङ्क्रन्दनोऽनिमिषः। बाहवोऽनाधृष्याः। अयुध्योऽस्माकम्। अद्रुहोऽनमीवाः। अत्र सुपर्णोऽसीति त्रयाणामपि ग्रहणात् चतुर्विंशतिसङ्ख्योपपत्तिः।

वोऽहँ सोऽहँ सोऽस्मकं तेऽभिगिरो वोऽर्वाची॥ ६६॥

(उ० भा०) एते द्विपदा यथागृहीतमेवाभिनिधीयन्ते। वोऽहं यथा—"तेषां विशि प्रियाणां वोऽहम्"। सोऽहं यथा—"सोऽहँवाजम्"। सोऽस्माकं यथा—"उपस्तिरस्तु सोऽस्माकम्"। तेऽभिगिरो यथा—"अनुष्टुप्तेऽभिगिरः"। वोऽर्वाची यथा—"आवोऽर्वाची सुमतिः"॥

(अ० भा०) एतेषामकारः पूर्वरूपमापद्यते। विशि प्रियाणां वोऽहम्। सोऽहं वाजं सनेयमग्ने। उपस्तिरस्तु सोऽस्माकम्। अनुष्टुप्तेऽभिगिरः। आवोऽर्वाची॥

## येऽन्नात्रयोः॥ ६७॥

(उ० भा०) ये इत्येतस्मात् परयोः अन्नात्रयोः सम्बन्धी अकारोऽभिनिधीयते। अन्न यथा—"येऽन्नेषु"। अत्र यथा—"येऽत्र स्थ पुराणाये च नूतनाः"॥

(अ० भा०) येपदात्परः अकारः पूर्वरूपमेति। अन्नात्रसम्बन्धी चेत्। यथा—येऽन्नेषु विविध्यन्ति। येऽत्र स्थ पुराणाः॥

## अविद्यासम्भूत्योश्च॥ ६८॥

(उ० भा०) अविद्या-असम्भूतिसम्बन्धी अकारोऽभिनिधीयते। चशब्दात् ये इत्यस्मात् परः। अविद्या यथा—"येऽविद्यामुपासते"। असम्भूति यथा—"येऽसम्भूतिमुपासते"। इत्येतयोरिति किम्? "अथो ये अस्य सत्वानः"॥

(अ० भा०) अनयोः अकारः पूर्वरूपमेति। चशब्दात् येशब्दात्परः। यथा—येऽविद्यामुपासते। येऽसम्भूतिमुपासते। एषामेव किम्? अथो ये अस्य सत्वानः॥

उपस्थेऽन्तस्तेभ्योऽकरम् ॥ ६९ ॥

(उ० भा०) एतौ च द्विपदौ यथागृहीतमेवाभिनिधीयेते । उपस्थेऽन्तो यथा—"शेषे मातुर्यथोपस्थेऽन्तरस्याम्"। तेभ्योऽकरं यथा—"अहन्तेभ्योऽकरन्नमः" ॥

(अ० भा०) अनयोः अकारः पूर्ववत्। शेषे मातुर्यथोपस्थेऽन्तरस्याम्। अहं तेभ्योऽकरं नमः ॥

नमोऽस्त्वसौत्रामण्याम् ॥ ७० ॥

(उ० भा०) नमोऽस्तु। एतच्च द्विपदं यथागृहीतमेवाभिनिधीयते सौत्रामण्यां चेन्न भवति। यथा—"नमोऽस्तु सर्पेभ्यः"। असौत्रामण्यां किम्? "नमो अस्त्वग्र ये" ॥

(अ० भा०) नमःशब्दात्परः अस्तुशब्दस्य अकारः पूर्वरूपमेति। सौत्रामणीमन्त्रान्वर्जयित्वा। नमोऽस्तु सर्पेभ्यः। नमोऽस्तु रुद्रेभ्यः। असौत्रामण्यां किम्? इदं पितृभ्यो नमो अस्तु। स्वाद्वीं त्वाध्यायो हि सौत्रामणीयागे विहितः। अतस्तत्र न भवतीत्यर्थः। तेभ्यो नमो अस्तु इत्यस्य तु असौत्रामणीमन्त्रत्वेऽपि अग्रे प्रकृतिभावं सूत्रकारो वक्ष्यतीति ज्ञेयम् ॥

विश्वेऽग्रे विशो रायोऽनग्नौ ॥ ७१ ॥

(उ० भा०) विश्वे इत्यादिभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते अग्नौ चेन्न भवति। युञ्जानः प्रथममित्यत आरभ्य स्वाद्वीन्त्वेति यावदग्निरुच्यते। विश्वे यथा—"विश्वेऽहुङ्धर्मम्"। अग्रे यथा—"ते अग्रेऽश्वमयुञ्जन्"। विशो यथा—"अथा न इन्द्रा इद्विशोऽसपत्नाः"। रायो यथा—"त्वष्टा सुदत्रो विदधातु रायोऽनु"। अनग्नाविति किम्? "विश्वे अद्य मरुतः"। "मयि गृह्णाम्यग्रे अग्निम्"। "भवा पायुर्विशो अस्याः"। "अस्मे रायो अमर्त्य" ॥

(अ० भा०) विश्वादिचतुर्भ्यः परः अकारः पूर्वरूपमेति। अग्निचयनमन्त्रान्वर्जयित्वा। युञ्जानः प्रथममित्यारभ्य स्वाद्वीन्त्वाध्यायपर्यन्तं अग्निचयनं कथ्यते। अतः तत्र न भवतीत्यर्थः। क्रमेणोदाहरणम्। विश्वेऽसुङ्घर्मम्। ते अग्नेऽश्वमयुञ्जन्। अथा न इन्द्र इद्विशोऽसपत्नाः। रायोऽनु मार्ष्टु। अनग्नौ किम्? पायुर्विशो अस्याः। अस्मे रायो अमर्त्य।

सूर्योऽग्नेऽभौ ॥ ७२ ॥

**(उ० भा०) सूर्यो अग्ने इत्येताभ्यां परः अभिशब्दस्याकारोऽभिनिधीयते। सूर्यो यथा—"सूर्योऽभिताप्सीत्"। अग्ने यथा—"अग्नेऽभ्यावर्तिन्"। अभाविति किम्? "चक्षोः सूर्यो अजायत"। "अग्ने अच्छा वदेह नः"॥**

(अ० भा०) सूर्याग्निशब्दाभ्यां परः अभिशब्दस्याकारः पूर्वरूपमेति। मा त्वा सूर्योऽभिताप्सीत्। अग्नेऽभ्यावर्त्तिन्। अभाविति किम्? चक्षोस्सूर्यो अजायत। अग्ने अच्छ॥

रिषो यवसे पुरुप्रियोऽन्नपतेऽर्णवे ॥ ७३ ॥

**(उ० भा०) एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। रिषो यथा—"मा सुरिषोऽम्ब"। यवसे यथा—"प्रोथदश्वो न यवसेऽविष्यन्"। पुरुप्रियो यथा—"पुरुप्रियोऽग्ने"। अन्नपते यथा—"अन्नपतेऽन्नस्य"। अर्णवे यथा—"अर्णवेऽन्तरिक्षे भवाः"॥**

(अ० भा०) रिषादिपञ्चभ्यः पर अकारः पूर्ववत्। यथा—मा सुरिषोऽम्ब-धृष्णु। न यवसे विष्यन्। पुरीष्यः पुरुप्रियोऽग्ने। अन्नपतेऽन्नस्य। अस्मिन्न इत्यर्णवेऽन्तरिक्षे॥

व्यपरे च ॥ ७४ ॥

(उ० भा०) एकारौकारेभ्यः परोऽकारोऽभिनिधीयते स चेद्-कारो वकारपरो यकारपरो वा भवति। यथा—"सहस्रयोजनेऽवधन्वानि"। "तिग्मतेजोऽयस्मयम्" ॥

(अ० भा०) एदोद्भ्यां पर अकारः पूर्वरूपमापद्यते स चेत् वकारपरः यकारपरो वा भवति। यथा—तेषां सहस्रयोजनेऽवधन्वानि। ब्रह्मा कृष्णश्च नोऽवतु। तिग्मतेजोऽयस्मयम् ॥

**गवे मे मनसो वाजयन्तः सोम्यासः पाशिनो विदानोऽनृते मूजवते वृष्णेऽपाको दीदिवस्त्रयस्त्रिंशे ब्रह्मणे यको रथो विश्वतः पादो वसन्तः ॥ ७५ ॥**

(उ० भा०) एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। गवे यथा—"गवेऽश्वाय"। मे यथा—"विशो मेऽङ्गानि"। मनसो यथा—"मनसोऽसि विलायकः"। वाजयन्तो यथा—"वाजयन्तोऽश्याम"। सोम्यासो यथा—"सोम्यासोऽग्निष्वात्ताः"। पाशिनो यथा—"पाशिनोऽति धन्वेव"। विदानो यथा—"संविदानोऽनु द्यावापृथिवी"। अनृते यथा—"अश्रद्धामनृतेऽदधात्"। मूजवतो यथा—"मूजवतोऽतीहि"। वृष्णे यथा—"त्वष्टा दधच्छुष्ममिन्द्राय वृष्णेऽपाकः"। अपाको यथा—"अपाकोऽचिष्टुर्यशसे"। दीदिवो यथा—"स नः पावक दीदिवोऽग्ने"। त्रयस्त्रिंशे यथा—"त्रयस्त्रिंशेऽमृताः"। ब्रह्मणे यथा—"अस्मै ब्रह्मणेऽस्मै क्षत्राय"। यको यथा—"यकोऽसकौ शकुन्तकः"। रथो यथा—"दृडभो रथोऽस्मान्"। विश्वतो यथा—"विश्वतोऽदब्धासः"। पादो यथा—"पादोऽस्य विश्वा भूतानि"। वसन्तो यथा—"वसन्तोऽस्यासीत्" ॥

(अ० भा०) गवे इत्यादि एकोनविंशतिपदेभ्यः पर अकारः पूर्वरूपमापद्यते। यथा—गवेऽश्वाय पुरुषाय। ।वशो मेऽङ्गानि। मनसोऽसि

विलायकः । वाजयन्तोऽश्याम द्युम्नम् । सोम्यासोऽभिष्वात्ताः । पाशिनोऽतिधन्वेऽव तान् । संविदानोऽनु द्यावापृथिवी । अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये । परो मूजवतोऽतीहि । इन्द्राय वृष्णेऽपाकोऽचिष्टुः । स नः पावक दीदिवोऽग्ने देवान् । त्रयस्त्रिंशेऽमृता स्तुताः । अस्मै ब्रह्मणेऽस्मै क्षत्राय । यकोऽसकौ शकुन्तक । परि ते दूळभो रथोऽस्मान् । विश्वतोऽदब्धासो अपरीतासः । पादोऽस्य विश्वा भूतानि । वसन्तोऽस्यासीदाज्यम् ॥

**अवोऽस्त्वग्ने गृहपतेऽभि सत्त्वानोऽहं नोऽजस्रया विमानोऽजस्रः सुतेऽश्विना नमोऽग्नये तेऽग्रं तेऽग्रे वृक्षस्य प्रथमोऽन्तस्तेऽन्येन ॥ ७६ ॥**

(उ० भा०) एतेषां च द्विपदानां उत्तरपदादिर्यथागृहीतमेवाकारोऽभिनिधीयते । अवोस्तु यथा—"महि त्रीणामवोऽस्तु" । अग्ने गृहपते यथा—"अग्ने गृहपतेऽभिद्युम्नम्" । सत्त्वानो यथा—"अस्य सत्वानोऽहम्" । नोऽजस्रया यथा—"पुरो नोऽजस्रया" । विमानोऽजस्रो यथा—"विमानोऽजस्रो घर्मो हविः" । सुतेऽश्विना यथा—"तनूपा भिषजा सुतेऽश्विनोभ" । नमोऽग्नये यथा—"ब्रह्मा कृष्णश्च नोऽवतु नमोऽग्नये" । तेऽग्रं यथा—"माता च ते पिता च तेऽग्रम्" । तेऽग्रे वृक्षस्य यथा –"तेऽग्रे वृक्षस्य क्रीडतः" । वृक्षस्येति किम् ? "तेऽग्रेऽश्वमयुञ्जन्" । प्रथमोऽन्तो यथा –"सभूः स्वयम्भूः प्रथमोऽन्तः" । तेऽन्येन यथा—"महिमा तेऽन्येन" ॥

(अ० भा०) अवोऽस्त्वित्याद्येकादशपदेभ्यः पर अकारः पूर्वरूपमापद्यते । यथा—महि त्रीणामवोऽस्तु । अग्ने गृहपतेऽभिद्युम्नम् । अस्य सत्वानोऽहम् । पुरो नोऽजस्रया । विमानोऽजस्रो धर्मः । अन्यदीयम् । तनूपा भिषजा सुतेऽश्विना । ब्रह्मा कृष्णश्च नोऽवतु नमोऽग्नये । पिता च तेऽग्रं वृक्षस्य । पिता च तेऽग्रे वृक्षस्य । वृक्षस्येति विशिष्टं किम् ? ते अग्रेऽश्वमयुञ्जन् । प्रथमोऽन्तर्महत्यर्णवे । महिमा तेऽन्येन न सन्नशे ॥

पणयो जहीमोऽम्बिके ॥ ७७ ॥

(उ० भा०) पणयः जहीमः अम्बिके एतेभ्य एकारौकारेभ्यः परोऽकारोऽभिनिधीयते। पणयो यथा--"अपेतो यन्तु पणयोऽसुम्नाः" जहीमो यथा--"अत्रा जहीमोऽशिवा ये"। अम्बिके यथा—"अम्बेऽम्बिकेऽम्बालिके" ॥

(अ० भा०) एभ्यः त्रिभ्यः अकारः तथा। यथा। अपेतोऽन्यं तु पणयोऽसुम्नाः। अत्रा जहीमोऽशिवाये ॥ अम्बेऽम्बिकेऽम्बालिके ॥

नोनुमोऽदुग्धा इव प्रचेतसोऽश्वान्नरोऽस्माकँ वृषपाणयोऽश्वाः प्रदिशोऽनूदितेऽनागा अन्धसोऽर्चा पनस्य तेऽद्धा यज्ञियेभ्योऽमृतत्वँ विपश्चितोऽभिजनोऽनमीव आयुवोऽनु नोऽद्य देशेऽभवद्वयुनेऽजनिष्ट विद्मनापसोऽजायन्त पूर्व्यासोऽरेणवो नोऽश्मा नोऽदितिर्नोऽहिः ॥ ७८ ॥

(उ० भा०) एते च द्विपदा यथागृहीतमेवाभिनिधीयन्ते। नोनुमोऽदुग्धा इव यथा—"अभि त्वा शूर नोनुमोऽदुग्धा इव"। प्रचेतसोऽश्वान् यथा—"अश्वाजनि प्रचेतसोऽश्वान्"। नरोऽस्माकं यथा—"नो नरोऽस्माकमिन्द्र"। वृषपाणयोऽश्वा यथा—"वृषपाणयोऽश्वा रथेभिः"। प्रदिशोऽनु यथा—"प्रदिशोऽनु सर्वाः"। उदितेऽनागा यथा—"यदद्य सूर उदितेऽनागाः"। अन्धसोऽर्चा यथा—"अन्धसोऽर्चा विश्वानराय"। पनस्य तेऽद्धा यथा—"पनस्य तेऽद्धा देव महाँ असि"। यज्ञियेभ्योऽमृतत्वं यथा—"यज्ञियेभ्योऽमृतत्वँ सुवसि भागमुत्तमम्"। विपश्चितोऽभिर्यथा—"पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैः"। जनोऽनमीवो यथा--"सर्व इज्जनोऽनमीवः"। आयवोऽनु यथा—"आयवोऽनुष्टुवन्ति"। नोऽद्य यथा—अनुनोऽद्यनुमतिः"। देशेऽभवद्यथा—"सो देशेऽभवत्सरित्"। वयुनेऽजनिष्ट यथा—"इडायास्पुत्रो

वयुनेऽजनिष्ट"। विघ्नापसोऽजायन्त यथा—"विघ्नापसोऽजायन्त मरुतः"। पूर्व्यासोऽरेणवो यथा--"पूर्व्यासोऽरेणवः सुकृताः"। नोऽश्मा यथा--"नोऽश्मा भवतु नस्तनूः"। नोऽदितिर्यथा—"अधि ब्रवीतु नोऽदितिः"। नोऽहिर्यथा—"उत नोऽहिर्बुध्न्यः"॥

(अ० भा०) एतद्विंशतिपदसम्बन्धी अकारः पूर्वरूपमापद्यते यथा— अभि त्वा शूरनो नुमोऽदुग्धा इव। अश्वाजनि प्रचेतसोऽश्वान्। समश्वपर्णाश्चरन्तः नो नरोऽस्माकम्। वृषपाणयोऽश्वा रथेभिः। इदं द्वयं परकीयम्। एषो ह देवः प्रदिशोऽनु सर्वाः। यदद्य सूर उदितेऽनागाः। मन्दमानायान्धसोऽर्चा विश्वानराय। महिमापनस्य तेऽध्दा देव। प्रथमं यज्ञियेभ्योऽमृतत्वम्। शुचयो विपश्चितो ऽभिस्तोमैः। सर्व इज्जनोऽनमीवाः। आयवोऽनुष्टुवन्ति। अनुनोऽद्यानुमतिः। एतन्त्रयं परकीयम्। सो देशेऽभवत्सरित्। न देशे भवति तु स्वरितनिषेधकमिति न पुनरुक्तिः। इळायास्पुत्रो वयुनेऽजनिष्ट। कवयो विघ्नापसोऽजायन्त। पूर्व्यासो ऽरेणवः। परिवृङ्धि नोऽश्मा भवतु नस्तनूः। सोमो अधिब्रवीतु नोऽदितिः। इदं द्वयं अन्यदीयम्। उत नोऽहिर्बुध्न्यः॥

ब्राह्मणः॥ ७९॥

(उ० भा०) ब्राह्मण इत्येतस्मादोकारात् परोऽकारोऽभिनिधीयते। यथा—"ब्राह्मणोऽस्य मुखम्"॥

(अ० भा०) ब्राह्मणशब्दात्परः अकारः पूर्वरूपमापद्यते। यथा— ब्राह्मणोऽस्य मुखमासीत्।

यजुष्षु च॥ ८०॥

(उ० भा०) "गाहमानः०" इत्यादिभिः सूत्रै ऋक्सम्बन्ध्यभिनिधानमुक्तम्। इदानीं यजुष्वाह। यजुष्षु च विशेषेण एकारादोकाराच्च परोऽकारोऽभिनिधीयते। यथा—वेदः असि > "वेदोऽसि"। कः असि > "कोऽसि"। ते अप्सरसाम् > "तेऽप्सरसाम्॥

(अ० भा०) गाहमानादिसूत्रैः ऋक्षु पूर्वरूपमभिधाय यजुर्मन्त्रेष्वाह ॥ एदोद्भ्यां पर अकारः पूर्वरूपमापद्यते यजुष्ष्वपि। यथा—वेदोऽसि। कृष्णोऽसि। कोऽसि। कतमोऽसि। तेऽप्सरसाम् ॥

## सङ्क्रमे च सर्वत्र ॥ ८१ ॥

(उ० भा०) गलत्पदमतिक्रम्यागलता सह सन्धानं सङ्क्रमः। "त्रिपदाद्यावर्त्तमाने सङ्क्रम" इति वक्ष्यति। तत्र सङ्क्रमे एकारौकाराभ्यां परोऽकारोऽभिनिधीयते। चशब्दात् सर्वत्र यजुष्षु ऋक्षु च। यजुष्षु भवति यथा—"शूद्रे यदर्ये"। अत्र पदेषु सङ्क्रमो भवति। यथा—"शूद्रे अर्ये"। "तार्क्ष्यः अरिष्टनेमिः"। अत्र क्रमसंहिताभिमायनिहितो भवति। यथा—"शूद्रेऽर्ये" "तार्क्ष्योऽरिष्टनेमिः"। ऋक्षु भवति यथा—यज्ञः अभि > "यज्ञोऽभि"। सङ्क्रम इति किम्? "स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥

(अ० भा०) गळत्पदमतिक्रम्योत्तरेण अगळता पदेन सह सन्धिः सङ्क्रमः। तत्र एदोद्भ्यां परः अकारः पूर्वरूपमापद्यते ऋक्षु यजुष्षु च। यथा—यच्छूद्रे यदर्ये यदेनश्चकृमा वयम्। तस्य तार्क्ष्यश्चारिष्टनेमिश्च। प्राणश्च मेऽपानश्च मे। अत्र पुनरुक्तानि पदानि लुप्यते इति पुनरुक्तस्य लोपं वक्ष्यति। तथा अतिपदेषु क्रमो भवति। शूद्रेऽर्ये। तार्क्ष्योऽरिष्टनेमिः। प्राणोऽपानः। सङ्क्रम इति किम्? स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥

## प्रकृतिभाव ऋक्षु ॥ ८२ ॥

(उ० भा०) गाहमानादिभिः सूत्रैर्ऋक्ष्वभिनिहितोऽभिहितः। ततोऽन्यत्र ऋक्षु प्रकृतिभावो भवति। यथा—"उप प्रयन्तो अध्वरम्"। "आरे अस्मे च शृण्वते" ॥

(अ० भा०) गाहमानादिभ्यः अन्यत्र ऋक्षु प्रकृतिभावः स्यात्।

यथा—उपप्रयन्तो अध्वरम् । आरे अस्मे च शृण्वते । चत्वारि शृङ्गा त्रयो अस्य पादाः । सप्त हस्तासो अस्य । अन्यांस्ते अस्मत् इत्यादि बहुद्रष्टव्यम् ॥

## जुषाणश्चानध्वनि ॥ ८३ ॥

(उ० भा०) "यजुष्षु च॥" इत्यनेन सूत्रेण यजुष्वभिनिधानमुक्तम् । तदपवादभूतमिदमारभ्यते । जुषाणशब्दसम्बन्धी ओकारः अनध्वनि प्रत्यये प्रकृत्या भवति । यथा—"जुषाणो अप्तुराज्यस्य वेत्तु स्वाहा" । अनध्वनीति किम्? "जुषाणोऽध्वाज्यस्य वेत्तु स्वाहा" । इदमुदाहरणं शाखान्तरीयम् ॥

(अ० भा०) यजुष्षु च इत्यनेन यजुष्षु पूर्वरूपमुक्तम् । तदपवादभूतमिदमारभ्यते । जुषाणशब्दसम्बन्धी ओकारः प्रकृत्या स्यात् अध्ववर्जिते पदे परे । यथा—जुषाणो अप्तु राज्यस्यजुषाणो अग्निराज्यस्य । अध्वनीति किम्? जुषाणोऽध्वाज्यस्य ॥

## ते चानुदात्तमनुदात्ते ॥ ८४ ॥

(उ० भा०) ते इत्येतच्च पदं अनुदात्तं चेत् प्रकृत्या भवति अनुदात्ते च प्रत्यये । यथा—"या ते अग्ने यः शया" । अनुदात्तमिति किम्? "तेऽप्सरसाम्" ॥

(अ० भा०) अनुदात्तं ते इति पदं प्रकृत्यास्यात् अनुदात्ते परे । यथा—ते अग्ने > या ते अग्ने यश्शया । अनुदात्तमिति किम्? ते अवन्तु > तेऽवन्तु ॥

हेड आपो गुवोऽपाग्ने धीरासो देवास उरो रक्षाणो मो वैश्वानरो वृषभो वचः प्राणः उदानोअङ्ग इमा मे वृष्णो दशमा-

स्योऽन्ध आवित्तोऽरिष्टो अर्जुनः प्रत्याश्रावः स्विष्टो घासे प्रणीतस्तेभ्यो नमो अस्तु दूरे नो अद्य यज्ञे सधस्थे सो अध्वरायेन्द्रे हिरण्यपर्णो द्वारो देवोऽब्दो रथिभ्यो महद्भ्यः सँसदः ॥ ८५ ॥

(उ० भा०) एते च एकारौकारा ऋक्षु यजुष्षु च प्रकृत्या भवन्ति अकारे प्रत्यये । अत्र च यत्र द्वयोः पदयोः पाठः सूत्रे तत्र नियमार्थः स तेनैव पदेन परभूतेनाधस्तनपदस्य प्रकृतिभावः । एकपदे सामाम्नाये त्वकारात्रे प्रकृतिभावः । हेडो यथा—"देवस्य हेडो अव यासिसीष्ठाः" । ऋक्ष्वयं प्रकृतिभावः । "व्यपरे च" इत्यनेनाभिनिहिते प्राप्ते "देवीरापो अपान्नपात्" । द्वितीयमुदाहरणम् । आपो यथा—"आपो अस्मान्" । गुवो यथा—"देवीरापो अग्रे गुवो अग्रे पुवः" । अपाग्ने यथा—"अपाग्ने अग्निम्" । धीरासो यथा—"तामु धीरासो अनु दिश्य" । देवासो यथा—"यत्र देवासो अजुषन्त" । उरो यथा—"द्यावापृथिवी उरो अन्तरिक्ष" । रक्षा णो यथा—"रक्षा णो अप्रयुच्छन्" । मो यथा—"मो अहन्तव वीरम्" । वैश्वानरो यथा—"वैश्वानरो अदब्धः" । वृषभो यथा—"अस्तभ्नाद्याँ वृषभो अन्तरिक्षम्" । वचो यथा—"उग्रँ वचो अपावधीत्" । प्राणो यथा—"प्राणो अङ्गे अङ्गे" । उदानो यथा—"उदानो अङ्गे अङ्गे निधीतः" । इमा मे यथा—"इमा मे अग्न इष्टकाः" । वृष्णो यथा—"वृष्णो अँशुभ्याम्" । दशमास्यो यथा—"दशमास्यो अस्रत्" । अन्धो यथा—"अन्धो अच्छेतः" । आवित्तो यथा—"आवित्तो अग्निः" । "अरिष्टो अर्जुनः" । द्विपदमेतत् । प्रत्याश्रावो यथा—"प्रत्याश्रावो अनुरूपः" । स्विष्टो यथा—"स्विष्टो अग्निरग्निना" । घासे यथा—"घासे अज्राणाम्" । प्रणीतो यथा—"प्रणीतो अग्निरग्निना" । तेभ्यो नमो अस्तु यथा—"तेभ्यो नमो अस्तु ते नोऽवन्तु" । तेभ्यो नमो इति किम्? "नमोऽस्तु नीलग्रीवाय" । दूरे यथा—"दूरे अमित्रश्च गणः" । नो यथा—"सम्मितासो नो

**अद्य"। यज्ञे यथा—"यज्ञे अस्मिन्"। सधस्थे यथा—"पृथिव्याः सधस्थे अङ्गिरस्वत्"। सो यथा—"सो अध्वराय परिणीयते"। इन्द्रे यथा—"सुदेवमिन्द्रे अश्विना"। हिरण्यपर्णो यथा—"हिरण्यपर्णो अश्विभ्याम्"। द्वारो यथा—"देवीर्द्वारो अश्विना"। देवो यथा—"देवो अग्निः स्विष्टकृत्"। अब्दो यथा—"सजूरब्दो अयवोभिः"। रथिभ्यो यथा—"नमो रथिभ्यो अरथेभ्यः"। महद्भ्यो यथा—"महद्भ्यो अर्भकेभ्यः"। सँसदो यथा—"सँसदो अष्टमी"॥**

(अ० भा०) हेळ इत्यादि एकोनचत्वारिंशत्पदानि प्रकृत्यास्युः अकारे परे ऋक्षु यजुष्षु च। अत्र सूत्रे अप अग्ने उदानो अङ्ग इत्यादि यत्र पदद्वयस्य पाठः तत्रैव प्रकृतिभावः नान्यत्रेति नियमार्थमिति ज्ञेयम्। अत्र वपरे चेति प्राप्तस्य पूर्वरूपस्यापवादः। यथाक्रमेणोदाहरणानि—देवस्य हेळो अव। व्यपरे चेति पूर्वरूपे प्राप्ते ऋक्षु तन्निषिध्यते। देवीरापो अपां नपात्। देवीरापो अग्रे गुवो अग्रे पुवः। अपाग्ने अग्निम्। तां धीरासो अनुदिश्य। यत्र देवासो अजुषन्त। द्यावापृथिवी उरो अन्तरिक्ष। परेषामिदम्। काण्वानां द्यावापृथिवी उर्वन्तरिक्ष इति पाठात्। रक्षा णो अप्रयुच्छन्। मो अहं तव वीरान्। वैश्वानरो अदब्धस्तनूपा अग्निः। द्यामृषभो अन्तरिक्षम्। उग्रं वचो अपावधीत्। प्राणो अङ्गे अङ्गे। उदानो अङ्गे अङ्गे। इमा मे अग्न इष्टकाः। वृष्णो अंशुभ्याम्। दशमास्यो असृक्। अन्धो अच्छेतः। आवित्तो अग्निर्गृहपतिः। अरिष्टो अर्जुनो मरुताम्। परेषामिदम्। अरिष्टः फल्गुनः इति काण्वपाठात्। प्रत्याश्रावो अनुरूपः। स्विष्टो अग्निरग्निना। तेभ्यो नमो अस्तु। तेभ्यो नम इति किम्? नमोऽस्तु सर्वेभ्यः। दूरे अमित्रश्च गणः। सम्मितासो नो अद्य। सौरसो मरुतो यज्ञे अस्मिन्। पृथिव्यास्सधस्थे अङ्गिरस्वत्। सो अध्वराय परिणीयते। सुदेवमिन्द्रे अश्विना। हिरण्यपर्णो अश्विभ्याम्। देवीर्द्वारो अश्विना। देवो अग्निः स्विष्टकृत्। सजूरब्दो अयवोभिः। नमो रथिभ्यो अरथेभ्यश्च। महद्भ्यो अर्भकेभ्यश्च। सप्तसंसदो अष्टमी।

छन्दो अङ्कुपमङ्काङ्कमस्त्रीवयः ॥ ८६ ॥

( उ० भा० ) छन्द इत्ययमोकारः अङ्कुपं अङ्काङ्कं अस्त्रीवय इत्येतेषु प्रकृत्या भवति । अङ्कुपं यथा—"काव्यं छन्दो अङ्कुपम्" । अङ्काङ्कं यथा—"तन्द्रं छन्दो अङ्काङ्कम्" । अस्त्रीवयो यथा—"प्रतिमाच्छन्दो अस्त्रीवयश्छन्दः" । एतेष्विति किम् ? "सँस्तुप्छन्दोऽनुष्टुप्छन्दः" ॥

( अ० भा० ) छन्दश्शब्दस्य ओकारः प्रकृत्या स्यात् अङ्कुपादि त्रिषु परेषु । काव्यं छन्दो अङ्कुपं छन्दः । तन्द्रं छन्दो अङ्काङ्कं छन्दः । प्रतिमा छन्दो अस्त्रीवयश्छन्दः । एष्विति किम् ? सस्तुप्छन्दोऽनुष्टुप्छन्दः ॥

काध्रुवोतिसदनाहोताराज्यास्वधापृथिवीप्रतिमेमसद-
न्नश्यामाकर्मोर्ध्वमियमवस्तादुतास्तिषु ॥ ८७ ॥

( उ० भा० ) का ध्रुवा ऊती सदना होतारा ज्या स्वधा पृथिवी प्रतिमा एतानि पदानि प्रकृत्या भवन्ति ईम् असदन् अश्याम अकर्म ऊर्ध्वं इयम् अवस्तात् उत अस्ति इत्येतेषु प्रत्ययेषु यथासङ्ख्यम् । का यथा—"का ईमरे" । ध्रुवा यथा—"ध्रुवा असदन्" । ऊती यथा—"ऊती अश्याम रयिम्" । सदना यथा—"सुगावो देवा सदनाः अकर्म" । होतारा यथा—"दैव्या होतारा ऊर्ध्वम्" । ज्या यथा—"ज्या इयम्" । स्वधा यथा—"स्वधा अवस्तात्" । पृथिवी यथा—"पृथिवी उतद्यौः" । प्रतिमा यथा—"न तस्य प्रतिमा अस्ति" ॥

( अ० भा० ) का ध्रुवा ऊती सदना होतारा ज्या स्वधा पृथिवी प्रतिमा एतानि नव पदानि प्रकृत्या स्युः ई असदन् अश्याम अकर्म ऊर्ध्वम् इयम् अवस्तात् उत अस्ति इत्येतेषु क्रमेण परेषु । का ईमरे पिशङ्गिला । ध्रुवा असदनृतस्य । ऊती अश्याम रयिम् । देवास्सदना अकर्म ये । दैव्या होतारा ऊर्ध्वम् । धन्वन् ज्या इयं समरे । स्वधा अवस्तात् प्रयतिः । सिन्धुः पृथिवी उत द्यौः । न तस्य प्रतिमा अस्ति । कण्ठ्यादिकार ओकार-मित्यनेन प्राप्तस्य सन्धेरपवादः ॥

**प्रगृह्यँ स्वरे ॥ ८८ ॥**

**(उ० भा०) प्रगृह्यं पदं स्वरे प्रत्यये प्रकृत्या भवति। यथा— "इन्द्राग्नी आगतम्"। "स्वर्थे अन्यान्या"। स्वरसन्धेरपवादः ॥**

(अ० भा०) प्रगृह्यसंज्ञपदं प्रकृत्या स्यात् स्वरे परे। इन्द्राग्नी आगतम्। इन्द्रवायू इमे। द्वे विरूपे चरतस्वर्थे अन्यान्या। मो अहं तव वीरान् ॥

**न रोदसीमे ॥ ८९ ॥**

**(उ० भा०) रोदसी इत्येतत् पदं प्रगृह्यं इमे इत्येतस्मिन् पदे न प्रकृत्या भवति। यथा—"राये नु यञ्जज्ञतू रोदसीमे"। इमे इति किम्? "आ पप्रिवान् रोदसी अन्तरिक्षम्" ॥**

(अ० भा०) रोदसीपदं इमे शब्दे परे प्रकृत्या स्यात्। पूर्वापवादः। राये नु यं जज्ञतू रोदसीमे। इमे इति किम्? आ पप्रिवान् रोदसी अन्तरिक्षम् ॥

**विश्पतीवोपस्थिते ॥ ९० ॥**

**(उ० भा०) विश्पती इत्येतत्पदं इवे परभूते उपस्थिते इतिकरणे प्रकृत्या भवति। यथा—"विश्पती इवेति विश्पती इव"। उपस्थित इति किम्? "आ विश्पतीव बीरिटे" ॥**

(अ० भा०) विश्पती इति शब्दः इवशब्दे परे सेतिकरणे प्रकृत्या स्यात्। आ विश्पती इव इति। उपस्थिते किम्? अनुपस्थिते मा भूदिति। यथा आ विश्पतीव बीरिटे ॥

**उकारोऽपृक्तोऽस्पर्शात् ॥ ९१ ॥**

**(उ० भा) उकारोऽपृक्त एकवर्णः अस्पर्शात् परः प्रकृत्या भवति**

**स्वरे प्रत्यये। यथा—"न वा उ एतत्"। "एतवा उ अञ्जी"। अपृक्त इति किम्? "योजान्विन्द्र"। अस्पर्शादिति किम्? "किम्वा वपनं महत्"॥**

(अ० भा०) अस्पर्शात्परः अपृक्त उकारः प्रकृत्या स्यात् स्वरे परे। यथा नवा उ एतन्म्रियसे। एतवा उ अञ्जि। अपृक्तः किम्? योजान्विन्द्र। द्रवन्नः। अस्पर्शादिति स्पर्शपरस्य मा भूदिति। यथा—किं वा वपनं महत्। तद्दूरे तद्वदन्तिके इत्यादि जटायामपि एतवाउ अञ्ज्यञ्जु। एतवा एतवाउ। आञ्ज। तथा इदुतत्तद्विदिदुतत्। स्पर्शस्य सन्धिर्भवतीत्यूहनीयम्॥

## प्लुतमितौ॥ ९२॥

**(उ० भा०) प्लुतान्तं पदं प्रकृत्या भवति इतौ प्रत्यये। यथा—"विवेशा इति"॥**

(अ० भा०) प्लुतान्तं पदं प्रकृत्या स्यात् इतिशब्दे परे। यथा विवेशा इति विवेशा इत्यादि। तेषु विश्वं भुवनमाविवेशा। इतावित्युत्तरार्थं प्लुतान्तपदस्य संहितायां स्वरान्तपरत्वाभावेन इताविति नियमाभावात्। उत्तर-सूत्रोदाहरणस्य तु स्वरान्तपरत्वसम्भवेन नियमसम्भवाच्च। तदेवाह—

## ओकारश्च॥ ९३॥

**(उ० भा०) ओकारः पदान्तीयः प्रकृत्या भवति इतौ प्रत्यये। यथा—"चित्रभानो इति"। "कृशानो इति"। इतावित्यनुवृत्तिः कस्मात्। स्वरमात्रे मा भूत् इतावित्येव "कृशानवेते वः"॥**

(अ० भा०) पदान्तीय ओकारः प्रकृत्या स्यात्। इतिशब्दे परे। यथा—चित्रभानो इति। कृशानो इति। वष्णो इति। इतौ किम्? रोदसी विष्ण एते। इन्द्र इन्द्रियावतः। वाय इह ता विमुञ्च। येगइष्टौ येत्वत्र अध्वर्यो ना अद्रिभिरिति त्रयो अस्य पादा इत्यादौ इतिशब्दपरत्वाभावेऽपि प्रकृतिभाव तत्तु प्रकृतिभाव ऋक्ष्विति विशिष्य विधानादिति द्रष्टव्यम्॥

## उकारोऽपृक्तो दीर्घमनुनासिकम् ॥ ९४ ॥

(उ० भा०) उकारोऽपृक्त एकवर्णो दीर्घमनुनासिकं चापद्यते। यथा—"ऊँ इति"। इतावित्येव। यथा—"न वा उ एतत्"। नात्र दीर्घमनुनासिकं च। इतावविद्यमानत्वात् ॥

(अ० भा०) अपृक्त उकारः इतौ परे दीर्घं अनुनासिकमापद्यते। ऊँ इत्यूम्। उदुत्वा विश्वेदेवा इत्यादि। इतौ किम्? नवा उ एतन्म्रियसे ॥

## इतेश्च परं पदं चर्चायाम् ॥ ९५ ॥

(उ० भा०) इतिकरणाच्च परं उ इत्येतत् पदमपृक्तं दीर्घमनुनासिकमापद्यते पदचर्चायाम्। चर्चापदस्वरूपमुक्तम्। एतदुक्तं भवति—वेष्टने यदितिकरणात्परं पदं चर्चा तदेवमुच्यते तत्पदस्वरूपज्ञापनार्थम्। यत्र तु तथाभूतं पदस्वरूपं न भवति तत्र उ इत्येतत् स्वरूपं हि तत् पदं भवति। अयं चार्थोऽनेन सूत्रावयवेन ज्ञाप्यते। इतिकरणात् परतो यत् पदवचनं तत् स्वरूपज्ञापनार्थमिति। "उत् ऊँ इत्यूम्"। "त्यम् जातवेदसमिति जात वेदसम्"। पदचर्चायामिति किम्? "उ इति" ॥

(अ० भा०) इतेः परः अपृक्त उकारः दीर्घमनुनासिकं आप्नोति पदपाठे। उ इत्यादि पदचर्चायाम् अवेष्टके यदितिकरणात्परं पदं तत् पदचर्चेत्युच्यते। पदचर्चायां किम्? संहितायां माभूदिति। उदुत्यं जातवेदसम् ॥

## तकारवर्गश्चकारवर्गे चकारवर्गम् ॥ ९६ ॥

(उ० भा०) तकारवर्गः पदान्तीयः चकारवर्गे प्रत्यये परे चकारवर्गमापद्यते। यथा—तत् चक्षुः > "तच्चक्षुः"। आरात् चित् > "आराच्चिद्द्वेषः"। आच्छत् छन्दः > "आच्छच्छन्दः"। उत् जिहानाः > "प्रवयामुज्जिहानाः"। झकारादि ञकारादि च पदानामुदाहरणं संहितायां न विद्यते। नकारस्य चकारछकारप्रत्यययोः सन्धिरुक्तः। "नुः"

'चछयोः शम्"। जकारे उदाहरणं यथा—"वाजान् जयतु > वाजाञ्जयतु"॥

(अ० भा०) पदान्तीयतवर्गः चवर्गे परे चवर्गमाप्नोति यथासङ्ख्येन। तत् चक्षुः > तच्चक्षुर्देवहितम्। आरात् चित् > आराच्चित्। इत् जगत् > सर्वमिज्जगत्। आच्छत् छन्दः > आच्छच्छन्दः। वाजान् जयतु > वाजाञ्जयतु॥

## शकारे च ॥ ९७ ॥

(उ० भा) शकारे च प्रत्यये परे तकारवर्गश्चकारवर्गमापद्यते। यथा—"तत् शकेयम् > तच्छकेयं तन्मे"। उत् शिषः > "मामीषां कञ्चनोच्छिषः"। स्वधावान् शुक्रः > "स्वधावाञ्छुक्रः"। पिशङ्गान् शिशिराय > "पिशङ्गाञ्छिशिराय"। आदित्यान् श्मश्रुभिः > "आदित्याञ्श्मश्रुभिः"॥

(अ० भा०) पदान्तीयतवर्गश्चवर्गमेति शकारे परे॥

## परश्चास्पर्शपरश्छम् ॥ ९८ ॥

(उ० भा०) परश्च शकारः अस्पर्शपरश्छकारमापद्यते। यथा—"तच्छकेयम्"। "मामीषां कञ्चनोच्छिषः"। "स्वधावाञ्छुक्रः"। "पिशङ्गाञ्छिशिराय"। अस्पर्शपर इति किम्? "आदित्याञ्श्मश्रुभिः"॥

(अ० भा०) परश्च शकारः अस्पर्शपरश्छकारमाप्नोति। यथा— तत् शकेयम् > तच्छकेयम्। उत् शिषः > कञ्चनोच्छिषः। स्वधावान् शुक्रः > स्वधावाञ्छुक्रः। अदधाच्छ्रद्धाम्। अस्पर्शपरमिति किम्? आदित्यान् श्मश्रुभिः। सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति वचनात् शकारे चेति सूत्रे तवर्गस्य चवर्गोऽप्यत्र न भवति। सन्नियोगशिष्टत्वं च सूत्रयोरुपजीव्योपजीवकत्वेन। तस्मात् आदित्यान् श्मश्रुभिरित्येव॥

**उदस्तभाने लोपम् ॥ ९९ ॥**

(उ० भा०) उत् उपसर्गात् परस्तभाने प्रत्यये सकारो लोपमापद्यते। यथा—उत् स्तभान > "ज्योतिषा दिवमुत्तभान"। उत् स्तम्भनम् > "उत्तम्भनम्" ॥

(अ० भा०) उदः परस्य स्तभानशब्दस्य सस्य लोपः स्यात्। तस्मात् इत्युत्तरस्यादेः इत्युक्तत्वात् सस्यैव लोपः स्यात्। यथा—उत् स्तभान उत्तभान तेजसा दिशः धातुग्रहणात् उत्तम्भनम्। वरुणस्योत्तम्भनमसि ॥

**अश्वात् स्थे तकारं संज्ञायाम् ॥ १०० ॥**

(उ० भा०) अश्वशब्दादुत्तरः सकारः तकारमापद्यते संज्ञायां स्थे प्रत्यये। अश्वः अशनव्यापारोऽग्निरस्मिंस्तिष्ठतीत्यश्वत्थो वृक्षः। यथा— "अश्वत्थे वो निषदनम्"। संज्ञायां किम्? अश्वस्थः पुरुषः ॥

(अ० भा०) अश्वशब्दात्परः सकारः तकारमाप्नोति दकारे परे संज्ञायां गम्यमानायां अशनव्यापारो अग्निरस्मिंस्तिष्ठतीति अश्वत्थः। अश्वत्थे वो निषदनम्। संज्ञायां किम्? अश्वस्थानम् ॥

**स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र ॥ १०१ ॥**

(उ० भा०) इत उत्तरं द्विर्भावप्रकरणं वर्तिष्यते। स्वरात्परः संयोगादिभूतो वर्णो द्विरुच्यते सर्वत्र। अधस्तनविधानं पदान्तपदाद्योः। इदं तु सर्वत्र पदान्तपदाद्योर्मध्ये च पदान्तपदाद्योर्भवति। यथा—सम्यक् स्रवन्ति < "सम्यक्क्स्रवन्ति"। द्वौ ककारौ सकारौ रेफश्च संयोगः। तत्र पूर्वककारो द्विरुक्तिजः। "अनुष्टुप्पृशारदी"। द्वौ पकारौ शकारश्च संयोगः। तत्र प्रथमः पकारो द्विरुक्तिजः। पदमध्ये भवति यथा— "अश्श्वः"। द्वौ शकारौ वकारश्च संयोगः। तत्र प्रथमः शकारो द्विरुक्तिजः। स्वरादिति किम्? "श्रुधि श्रुत्कर्ण"। अत्र शकाररेफौ संयोगः ॥

(अ० भा०) इत ऊर्ध्वं द्विर्भावप्रकरणं वर्त्तिष्यते। तत्र स्वरात्परः संयोगादिभूतो वर्णः द्विरुच्यते। पदान्तपदाद्योर्मध्ये च स्वरादिति सामान्यनिर्देशात् ह्रस्वाद् दीर्घादपि पदान्ते। यथा—सम्यक् स्रवन्ति > सम्यक्क्स्रवन्ति। अनुष्टुप् शारदी > अनुष्टुप्प्छारदी। पदादौ यथा—इषेत्त्वा ऊर्जे त्त्वा। पदमध्ये यथा—अग्निः इत्यादि। स्वरात्परः किम्? श्रुत्कर्णम्। श्रुधिश्रुत्कर्ण वन्हिभिः स्वाहा। कायस्वाहा। अत्र पदपाठे स्वरात्परत्वाभावात् न द्विरुक्तिः॥

## परं तु रेफहकाराभ्याम्॥ १०२॥

**(उ० भा०) रेफहकाराभ्यां परं व्यञ्जनं द्विरुच्यते न तु रेफहकारौ। यथा—"ऊर्ज्जे"। रेफो द्वौ जकारौ संयोगः। तत्र प्रथमो जकारः क्रमजः। "सूर्य्यः"। रेफो द्वौ यकारौ संयोगः। तत्र पूर्वो यकारः क्रमजः। "बाह्व्वोः"। हकारो द्वौ वकारौ संयोगः। तत्र प्रथमो वकारः क्रमजः॥**

(अ० भा०) पूर्वसूत्रप्राप्तस्य क्वचिदपवादः आरभ्यते। स्वरात् पराभ्यां रेफहकाराभ्यां परं व्यञ्जनं द्विरुच्यते। न तु रेफहकारौ। ऊर्ज्जे निर्म्ममाय। आर्त्यै त्त्र्यै बाह्व्वोः।

## ऊष्मान्तस्थाभ्यश्च स्पर्शः॥ १०३॥

**(उ० भा०) ऊष्माणः शषसहाः। अन्तस्था यरलवाः। एतेभ्यः परः स्पर्शो द्विरुच्यते। यथा—"पृश्निः"। एकः शकारो द्वौ नकारौ संयोगः। तत्र प्रथमो नकारः क्रमजः। "अश्म्मा"। शकारो द्वौ मकारौ संयोगः। तत्र प्रथमो मकारः क्रमजः। "पार्ष्ण्ण्यां"। रेफः षकारो द्वौ णकारौ यकारश्च संयोगः। तत्र प्रथमो णकारः क्रमजः। "सस्निनतमम्"। सकारो द्वौ नकारो संयोगः। तत्र प्रथमो नकारः क्रमजः। "राष्ट्ट्रदा। राष्ट्ट्रम्"। षकारो द्वौ टकारौ रेफश्च संयोगः। तत्र प्रथमष्टकारः क्रमजः। "हस्त्ते"। सकारो द्वौ तकारौ संयोगः। तत्र प्रथमस्तकारः क्रमजः। हकारस्य द्विर्भावो निषिद्धः। यकारस्य परभूतैः स्पर्शैः संयोगो न विद्यते।**

**रेफस्य द्विर्भावो निषिद्धः। "शल्म्मलिः"। लकारो द्वौ मकारौ संयोगः। तत्र प्रथमो मकारः क्रमजः। "उल्ब्बम्"। लकारो द्वौ बकारौ संयोगः। तत्र प्रथमो बकारः क्रमजः। "दधिक्क्राव्ण्णः"। वकारो द्वौ णकारौ संयोगः। तत्र प्रथमो णकारः क्रमजः ॥**

(अ० भा०) स्वरपूर्वेभ्यः शषसहयरलवेभ्यः परः स्पर्शः द्विरुच्यते। यथा—अश्म्मा च मे। राष्ट्ट्रदाः। राष्ट्ट्रम्। हस्त्त आधाय। आब्रह्म्मन् ब्राह्म्मणः। यकारस्य परभूतैः स्पर्शैः संयोगो नोपलभ्यते रेफस्य तु स्वाहा धर्म्माय इत्यादि। लस्य तु उल्ब्बं जहाति। वस्य तु दधिक्राव्ण्णः ॥ ननु रेफहकारयोः परस्यानेनैव द्वित्वसिद्धिः। किमर्थं परं तु रेफहकाराभ्याम् इति पृथग्योगकरणमिति चेत् सत्यम्। अत्र स्पर्शमात्रस्य द्वित्वमुच्यते। तत्र व्यञ्जनमात्रस्य द्विर्भावो वक्ष्यति। न पुनरुक्तिरित्यवधेयम्। अन्यथा—सूर्य्यः बाह्व्वोः इत्यादौ द्वित्वं न सिध्येत् ॥

## जिह्वामूलीयोपध्मानीयाभ्यां च ॥ १०४ ॥

**(उ० भा०) जिह्वामूलीयादुपध्मानीयाच्च परः स्पर्शो द्विर्भवति। जिह्वामूलीयाद्भवति यथा—"मयि वः क्कामधरणम्"। जिह्वामूलीयो द्वौ ककारौ संयोगः। तत्र प्रथमः ककारः क्रमजः। "ततः क्खनेम"। जिह्वामूलीयः ककारखकारौ संयोगः। तत्र प्रथमः ककारः क्रमजः। उपध्मानीयाद्भवति यथा—"या ओषधीः प्पूर्वा जाताः"। उपध्मानीयो द्वौ पकारौ संयोगः। तत्र प्रथमः पकारः क्रमजः। "यः प्फलिनीः"। उपध्मानीयः पकारफकारौ संयोगः। तत्र प्रथमः पकारः क्रमजः। एतौ च जिह्वामूलीयोपध्मनीयौ काण्वादिविषयौ। तथाहि वक्ष्यति–"तस्मिँळ्ळह-जिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम्" इति ॥**

(अ० भा०) आभ्यां परः स्पर्शः द्विरुच्यते। मयि वः क्कामधारणम्ँ। ततः क्खनेम। या ओषधीः प्पूर्वा जाताः। याः प्फलिनीर्याः। एतौ जिह्वामूलीयो-पध्मानीयौ काण्वविषयौ न माध्यन्दिनानाम् तस्मिन् ळ्ळहजिह्वामूलियोपध्मानीय-नासिक्या न सन्ति माध्यन्दिनानाम् इति सूत्रकृत्तैव निषेधः करिष्यते ॥

यैस्तु परं तैर्न पूर्वम् ॥ १०५ ॥

(उ० भा०) यैस्तु संयुक्तं परं व्यञ्जनं द्विरुच्यते यैः संयोगे सति परस्य द्विर्भाव उक्तः तैः संयुक्तं न पूर्वव्यञ्जनं द्विर्भवति। ऊष्मणामन्तस्थानां च परस्य स्पर्शस्य द्विर्भाव उक्तः। तत्र यद्युभयतः संयुक्ता ऊष्माणोऽन्तस्था वा स्पर्शैर्भवन्ति। तत्र प्रथमस्य स्पर्शस्य द्विर्भावः प्राप्नोति स्वराव्यवधानात् स निषिध्यत इति सूत्रार्थः। "पक्ष्म्माणि"। "सुक्ष्म्मा"। "अयक्ष्म्माः"। तत्र ककारषकारमकाराः संयोगः। तत्र ककारस्य द्विर्भावः प्राप्नोति। स निषिध्यते। उक्तं च—

"यत्र चोभयतः स्पर्शैः संयुक्ताः शषसाः सह।
न तत्राद्यः क्रमो ज्ञेयो न परो बोधितो बुधैः॥"

(अ० भा०) यैस्तु संयुक्तं परं व्यञ्जनं द्विरुच्यते। तैः संयुक्तं पूर्वं व्यञ्जनं न द्विरुच्यते। ऊष्मान्तस्थाभ्यश्च स्पर्शः इति परस्य स्पर्शस्य द्विर्भाव उक्तः। ते उभयतः संयुक्ता ऊष्माणः अन्तस्था वा स्पर्शैर्भवन्ति। तत्र प्रथमस्य स्पर्शस्य द्विर्भावो निषिध्यते। उत्तरस्यैव स्थाप्यत इति सूत्रार्थः। यथा—पक्ष्म्माणि सुक्ष्म्मा। अयक्ष्म्माः। अत्र ककारषकारौ द्वौ मकारौ। एवं चत्वारस्संयोगः। अत्र ककारस्य स्वरात्संयोगादिरिति प्राप्तं द्विर्भावं वर्जयित्वा यैस्तु परमिति मकारस्यैव द्विर्भावः स्थाप्यत इति निगळितोऽर्थः। उक्तं हि—

यत्र चोभयतः स्पर्शैः संयुक्ताश्शशषसाः सह।
तत्र नाद्यक्रमो ज्ञेयो न परो बाधितो बुधैः॥

इति। क्रमाऽत्र द्विर्भाव इत्यर्थः॥

नास्वरपूर्वा ऊष्मान्तस्थाः ॥ १०६ ॥

(उ० भा०) ऊष्मणामन्तस्थानां च परस्य स्पर्शस्य द्विर्भाव उक्तः। तदपवादोऽयं योगः। अस्वरपूर्वा ऊष्माणोऽन्तस्थाश्च परान् स्पर्शान न द्विर्भावयन्ति। "स्थालीभिः स्थालीः"। अत्र सकारथकारौ संयोगः।

"दिवः स्कम्भनीः"। अत्र सकारककारौ संयोगः। अस्वरपूर्वा इति किम्? "विष्णोः स्थ्थानम्"। "विष्णोः" पवित्रे स्थ्थाः"। "राष्ट्ट्रम्"। अत्र द्विर्भावो भवति। विसर्जनीयात् परः स्पर्शो व्यञ्जनपरः सन् द्विरुच्यते। यथा— "विष्णोः क्क्रमः"। "नीलङ्गोः क्क्रिमिः"। विसर्जनीयः द्वौ ककारौ रेफश्च संयोगः। यथा—"देव सवितः प्प्रसुव"। "युञ्जानः प्प्रथमम्"। विसर्जनीयः द्वौ पकारौ रेफश्च संयोगः। व्यञ्जनपर इति किम्? "न्यङ्कुः पक्कटः। गौरमृगः ह्रिद्रुः"। "वसोः पवित्रम्"। "याः फलिनीः"। अत्र द्विर्भावो न भवति॥

(अ० भा०) ऊष्मान्तस्थाभ्यश्च स्पर्शस्य परस्य द्विर्भावः उक्तः। तत् क्वचित् अपोद्यते। अस्वरपूर्वा ऊष्माणः अन्तस्थाश्च परान् स्पर्शान् न द्विर्भावः। यथा—स्थालीभिस्स्थालीराप्नोति। अत्र अस्वरपरत्वात् सकारात्स्वरस्य थकारस्य न द्विर्भावः। एवं दिवः स्कम्भनीत्यादौ ज्ञेयम्। अस्वरपूर्वा इति किम्? श्नप्त्रे स्थः। विष्णो श्नप्त्रे स्थ्थः। राष्ट्ट्रम्॥

## विसर्जनीयाद्व्यञ्जनपरः॥ १०७॥

(अ० भा०) विसर्जनीयात् परः स्पर्शः व्यञ्जनपरस्सन् द्विरुच्यते। यथा—विष्णोः क्क्रमोऽसि। नीलङ्गोः क्क्रिमिः। देवसवितः प्प्रसुव। युञ्जानः प्प्रथमम्। व्यञ्जनपरः किम्? वसोः पवित्रम्। याः फलिनीः। इदं तु माध्यन्दिनविषयम्। काण्वानां तु जिह्वामूलीयोपध्मानीयाभ्यां चेति द्विर्भाव उक्तः॥

## ङ्नौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ॥ १०८॥

(उ० भा०) ङकारनकारौ पदान्तीयौ द्विर्भवतो ह्रस्वस्वरपूर्वौ स्वरे प्रत्यये। यथा—"युङ्ङसि"। "तमुत्त्वादध्यङ्ङृषिः"। द्वौ ङकारौ। "अश्मन्नूर्जम्"। "अक्षन्नमीमदन्त"। द्वौ नकारौ। ह्रस्वपूर्वाविति किम्? "सुप्राङ्जो मेम्यत्"। "तानुञ्जेषम्"॥

(अ० भा०) ङकारनकारौ पदान्तीयौ द्विर्भवतः स्वरे परे। ह्रस्व-

पूर्वौ चेद्भवतः । यथा—दध्यङ्ङृषिः । युङ्ङसि । अश्मन्नूर्जम् । अक्षन्नमीमदन्त । नक्षन्नृतम् । ह्रस्वपूर्वौ चेत् किम्? सु प्राङजः ॥

संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्राः ॥ १०९ ॥

(उ० भा०) संयोगात् पूर्वः संयोगपूर्वः। यथा—"अग्निः"। "विष्णुना"। व्यञ्जनमन्ते यस्य सः व्यञ्जनान्तः। यथा—"दध्यङ्"। अवसानं प्राप्तोऽवसानगतः। यथा—"पाहि"। "रक्ष"। एते स्वरा द्विमात्राकाला भवन्ति न तु दीर्घाः। गुरव एते भवन्ति। अत्रोच्यते—गुरवो द्विगुणकालाः। व्यञ्जनद्विरुक्तिप्रसङ्गेन स्वराणामपि गौरवमुक्तम्। तत्र हि द्विगुणः कालो भवति ॥

(अ० भा०) संयोगात्पूर्वः संयोगपूर्वः। व्यञ्जनमन्ते यस्य सः व्यञ्जनान्तः। अवसानं गताः प्राप्ताः अवसानगताः। संयोगपूर्वश्च व्यञ्जनान्तश्च अवसानगतश्च संयोगपूर्वव्यञ्जनान्तावसानगताः स्वरा द्विमात्रा स्युः। गुरुसंज्ञा भवन्ति। न तु दीर्घा भवन्तीत्यर्थः। संयोगपूर्वो यथा—अग्निः। अत्र द्वौ गकारौ नकारश्च संयोगः। तस्मात्पूर्व अकारः गुरुसंज्ञः। एवं विष्णुनेत्यादौ द्रष्टव्यम्। व्यञ्जनान्तो यथा—दध्यङ्। प्रत्यङ्। अत्र द्वितीयोऽकारो गुरुः। अवसानगता यथा—स्थ। कर्म। एहि। रक्ष। एते द्विमात्राकालाः। व्यञ्जनद्विरुक्तिप्रसङ्गेन स्वराणामपि गुरुत्वमुक्तम् ॥

प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थाः ॥ ११० ॥

(उ० भा०) संयोगस्यादिभूतस्य वर्णस्य द्विर्भावो ह्युक्तः। सोऽन्यथापि क्वचिद्भवतीत्याह—प्रथमैः स्ववर्गीयैः सह द्वितीया द्विरुच्यन्ते तृतीयैश्च स्ववर्गीयैः सह चतुर्था द्विरुच्यन्ते। यथा—वि ख्याय> "विक्ख्याय"। ककारखकारौ यकारश्च संयोगः। "विष्प्फुरन्ति"। षकारः पकारफकारौ संयोगः। यथा—"गोष्ट्ठानाम्"। "आखरेष्ट्ठः"। षकारटकारठकाराः संयोगः। "पात्थ्यः"। "रात्थ्यः"। तकारथकारौ

यकारश्च संयोगः। चतुर्था यथा—"आजिघ्र"। गकारघकारौ रेफश्च संयोगः। डकारस्यापि सम्भवः—"मीड्ढ्वः" डकारढकारौ वकारश्च संयोगः। "अद्ध्वनस्पातु"। दकारधकारौ वकारश्च संयोगः। "विब्भ्राट्"। बकारभकारौ रेफश्च संयोगः॥

(अ० भा०) संयोगादेः द्वित्वमुक्तम्। सः अन्यथापि क्वचिद्भवति इत्युच्यतेऽनेन। प्रथमैः स्ववर्गीयैः सह द्वितीया द्विरुच्यते। तृतीयैः स्ववर्गीयैः सह चतुर्था द्विरुच्यते। यथा—विक्ख्याय। अत्र ककारखकारौ यकारश्च संयोगः। अच्छ्यति। गोष्ट्ठानम्। पात्थ्यः। विष्प्फुरन्ती। इति द्वितीयाः। अथ चतुर्थाः। आजिग्घ्र। उज्झिम्। लौकिकोदाहरणम्। मीड्ढ्वः। अद्ध्वनः। विब्भ्राट्॥

नानुस्वारः॥ १११॥

(उ० भा०) संयोगपूर्व इत्यनुवर्त्तते। संयोगपूर्वोऽनुस्वारो न द्विरुच्यते। "इमँस्तनम्"। "सोमानँ स्वरणम्"। असंयोगपूर्वस्य ह्यनुस्वारस्योपरिष्टाद्वक्ष्यति—"अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रा" इति। यथा—"हँसः"॥

(अ० भा०) संयोगपूर्व इति वर्त्तते। संयोगपूर्वः अनुस्वारो न द्विरुच्यते। यथा—इमं स्तनेम्। सोमानं स्वरणम्। असंयोगपूर्वस्य तु उपरिष्टाद्वक्ष्यति। अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रेति सूत्रेण॥

सवर्णे॥ ११२॥

(उ० भा०) सवर्णे प्रत्यये न द्विरुक्तिर्भवति। अन्तस्थासंयोगोऽत्रोदाहरणम्। "स्ववर्गीये चानुत्तमः" इति स्पर्शानां वक्ष्यति। यथा—सम् यौमि > "सँय्यौमि"। द्वौ यकारौ सयोगः। संव्वपामि > "सँवपामि"। द्वौ वकारौ संयोगः॥

(अ० भा०) अनुस्वारो द्विरुच्यते सवर्णे परे। अन्तस्थासंयोगः अत्र

उदाहरणम् । स्ववर्गीये चानुत्तम इति स्पर्शानां तु वक्ष्यति यथा—सँय्यौमि । अत्र द्वावेव यकारौ संयोगः । तृतीयस्य निषिद्धत्वात् । तथा—सँव्वपामि । तँ ल्लोकम् । स्वरात् संयोगादिरिति प्राप्तस्यापवादः ॥

ऋवर्णे ॥ ११३ ॥

(उ० भा०) ऋवर्णे प्रत्यये न द्विरुक्तिर्भवति । यथा—"अनिष्कृतः" । षकारककारौ संयोगः । "ऊष्मान्तस्थाभ्यश्च स्पर्शः" ॥ इति प्राप्तस्य प्रतिषेधः ॥

(अ० भा०) ऋवर्णे परे पूर्वो न द्विरुच्यते । यथा अनिष्कृतः । अत्र ऊष्मान्तस्थाभ्यश्च स्पर्श इति प्राप्तषकारद्वित्वस्यापवादः ॥

ऌवर्णे ॥ ११४ ॥

(उ० भा०) ऌवर्णे प्रत्यये न द्विरुक्तिर्भवति । यथा—"ऋद्धिः" "कॢप्तम्" । "विसर्जनीयाद्व्यञ्जनपरः" इति प्राप्तिः । ऌकारस्य मध्ये लकारस्यार्धमात्रां पश्यताचार्येण निषेधः कृतः । वक्ष्यति च—"ऋऌवर्णा रेफलकारौ संश्लिष्टावश्रुतितरावेकवर्णौ" ॥

(अ० भा०) ऌवर्णे परेऽपि पूर्वं न द्विरुच्यते । ऋद्धिः कॢप्तम् । अत्र विसर्जनीयाद्व्यञ्जनपर इति जिह्वामूलीयोपध्मानीयानां चेति प्राप्तककारद्वित्वापवादः । क्रमसंहितेयम् ॥

यमे ॥ ११५ ॥

(उ० भा०) यमे प्रत्यये न द्विरुक्तिर्भवति । यथा—"सक्थ्ना देदिश्यते नारी" । ककारः थकारयमौ नकारश्च संयोगः । तत्र "स्वरात्संयोगादिः" इति द्विरुक्तिः प्राप्ता । सा यमे प्रत्यये निषिध्यते । यथा—"सम्ज्ञानमसि" । मकारजकारयमौ ञकारश्च संयोगः । अत्रापि "स्वरात् संयोगादिः" इति जकारस्य द्विरुक्तिः प्राप्ता । सा यमे प्रत्यये

इति नास्ति विरोधः। रुक्मपाप्मप्रभृतीन्युदाहरणानि वदन्ति। तेषां "संयोगादिः पूर्वस्य" "यमश्च" इत्यनेन सह विरोधः प्राप्नोति ॥

(अ० भा०) यमे परे पूर्वं न द्विरुच्यते। यथा—सक्थ्ना। अत्र ककारयम्गौ नकारश्च संयोगः। अत्र स्वरात्संयोगादिरिति ककारस्य द्विर्भावः प्राप्तः। सः यमे परे निषिद्धः। तथा सञ्ज्ज्ञानमसि। अत्र ञकारः जकारयमौ ञकारश्च संयोगः। अत्र स्वरात्संयोगादिरिति जकारस्य प्राप्तद्वित्वापवादः। अन्यान्यप्येवंजात्युदाहरणानि द्रष्टव्यानि। ये त्वत्र रुक्मः पाप्मा प्रभृतीन्युदाहरणानि उदाहरन्ति तेषां संयोगादिः पूर्वस्य यमश्च इत्यनेन सह विरोधः प्राप्नोति ॥

विसर्जनीयः ॥ ११६ ॥

(उ० भा०) द्विसर्जनीयो न द्विरुच्यते। व्यञ्जनत्वाविसर्जनीयस्य द्विरुक्तौ प्राप्तायां प्रतिषेधोऽयम्। यथा—"दिवः ककुत्पतिः पृथिव्याः"। "याः फलिनीः" ॥

(अ० भा०) विसर्जनीयो न द्विरुच्यते। व्यञ्जनत्वात् द्वित्वप्राप्तौ निषिध्यते। यथा—दिवः ककुत्। याः फलिनीः। ततः खनेम। नात्र विसर्जनीयस्य द्वित्वम् ॥

स्ववर्गीये चानुत्तमे ॥ ११७ ॥

(उ० भा०) स्ववर्गीये च प्रत्ययेऽनुत्तमे पूर्वो वर्णो न द्विरुच्यते। यथा—तत् देवानाम् > "तद्देवानामवो अद्य"। द्वौ दकारौ संयोगो द्विरुक्तेर्निषिद्धत्वात्। "अन्तरिक्षम्पुरीतता"। मकारपकारौ संयोगः। अनुत्तम इति किम्? "तन्नो मित्रो वरुणः"। अत्र द्विरुक्तिर्भवत्येव ॥

(अ० भा०) उत्तमोऽन्त्य इत्यर्थः। उत्तमे वर्जे स्ववर्गीये परे पूर्वो न द्विरुच्यते। यथा—तत् देवानाम् > तद्देवानाम्। अत्र तकारस्य द्वित्वं निषिद्धम्।

तथा अन्तरिक्षं पुरीतता। अत्र पकारस्य न द्वित्वम्। अनुत्तमे किम्? तत् नः > तन्न्नो मित्रः। अत्र नकारस्य द्विरुक्तिर्भवत्येव ॥

## अवसितं च ॥ ११८ ॥

(उ० भा०) निरर्थकं व्यञ्जनमवसानगतमवसितशब्देनोच्यते। अवसितं व्यञ्जनं न द्विरुच्यते। यथा—"ऊर्क्"। रेफककारौ संयोगः। अवसितमिति किम्? ऊर्क्क् च मे"। "परन्तु रेफहकाराभ्याम्" इति प्राप्तिः। रेफस्यात्र द्विरुक्तिर्न भवति ॥

(अ० भा०) अवसानगतं व्यञ्जनं न द्विरुच्यते। यथा—ऊर्क्। पूषण्वान्। अवसितं किम्? संहितायां मा भूत्। ऊर्क्क् च मे पूषण्वन्तम्। अत्र परं तु रेफहकाराभ्याम् इति द्वित्वम् ॥

## नान्तःपदे स्वरपञ्चमान्तस्थासु ॥ ११९ ॥

(उ० भा०) स्वरे प्रत्यये पञ्चमे च परे अन्तस्थासु च प्रत्ययभूतासु यद्वक्ष्यति तदन्तःपदे न भवति। पदान्तीयस्य स विकार इत्यर्थः। यथा—"पूषन्"। पकारस्य प्रथमस्य स्वरे तृतीयभाव उक्तः। सोऽन्तःपदे न भवति। पञ्चमे यथा—"त्मन्या समञ्जन्"। "अक्तर्नी इमे विष्फुरंती अमित्रान्"। अत्र "पञ्चमे पञ्चमम्"। इति पञ्चमभाव उक्तः सोऽन्तःपदे न भवति। अन्तस्थासु यथा—"इषे त्वा"। "आ प्यायस्व"। प्रथमस्य तृतीयभाव उक्तः। सोऽन्तःपदे न भवति। वक्ष्यमाण प्रकरणस्यापवादभूतोऽयं योगः। अधिकारसूत्रमेतत् ॥

(अ० भा०) वक्ष्यमाणप्रकरणस्यापवादोऽयम्। स्वरे पञ्चमेऽतस्थास्सु च परतः स्पर्शोऽपञ्चम इत्याद्युक्तं सूत्रोक्तकार्यं न स्यात् एकपदे। तत्र स्वरे परे यथा—पूषन्नित्यत्र पकारस्य प्रथमस्य उकारे स्वरे परे वर्गतृतीयभावः बकारः प्राप्तः। सः अनेनान्तःपदे निषिद्धः। अन्यथा पूषन्निति स्यात्। पञ्चमे यथा—त्मन्या। अत्र पञ्चमे पञ्चम इति तकारस्य पञ्चमभावो नकारः न भवतीत्यर्थः।

अन्या समञ्जन् । एवं आर्त्नी इमे विष्फुरन्ती । अन्तस्थासु यथा—त्वा । अत्र तकारस्य वकारे परे अन्तःपदे तृतीयो दकारो निषिध्यते । मित्रावरुणौ त्वोत्तरतः । एवं आप्यायस्व । एवमन्यान्यप्येवंजातीयकान्युदाहरणानि योज्यानि । अन्तःपदे किम् ? यत् इन्द्रः यदिन्द्रो अपिबत् ॥

## स्वर्शोऽपञ्चमः स्वरधौ तृतीयम् ॥ १२० ॥

(उ० भा०) अपञ्चमः स्पर्शः स्वरे प्रत्यये धिसंज्ञके च तृतीयमापद्यते। स्वरे परे भवति यथा—उत् एनम्> "उदेनमुत्तरान्नय" । समुद्रात् ऊर्मिः> "समुद्रादूर्मिः" । धौ परे यथा—यत् ग्रामे> "यद्ग्रामे" । यत् वर्मी > "यद्वर्मी" ॥

(अ० भा०) अपञ्चमः स्पर्शः स्वरे धिसंज्ञे च परे तृतीयभावमाप्नोति । स्वरे यथा—उत् एनम् > उदेनम् । समुद्रात् ऊर्मि > समुद्रादूर्मिः । धिसंज्ञे यथा—यत् ग्रामे > यद्ग्रामे यदरण्ये । यत् वर्मी > यद्वर्मी याति । यद्वम्र अतिसपति ॥

## जिति प्रथमम् ॥ १२१ ॥

(उ० भा०) जित्संज्ञके प्रत्यये स्पर्शोऽपञ्चमः प्रथममापद्यते । यथा—"अनुष्टुप्तेऽभिगरः" । "ऊर्क् च मे" । "तत्सवितुः" । "अनुष्टुप्शारदी" ॥

(अ० भा०) अपञ्चमस्पर्शो जित्संज्ञे परे प्रथममाप्नोति । न तृतीयम् । यथा अनुष्टुप्तेऽभिगरः । अनुष्टुप्छारदी । उर्क्च मे । तत्सवितुर्वरेण्यम् ॥

## असस्थाने मुदि द्वितीयँ शौनकस्य ॥ १२२ ॥

(उ० भा०) असमानस्थाने मुत्संज्ञके प्रत्यये स्पर्शोऽपञ्चमो द्वितीयमापद्यते शौनकस्याचार्यस्य मतेन । यथा—सम्यक् स्रवन्ति >

"सम्यख्स्रवन्ति"। अनुष्टुप् शारदी > "अनुष्टुफ्शारदी"। असस्थान इति किम्? "तत्सवितुः"। केचिदत्र "तृतीयं अवसाने च" इत्येतत्सूत्रं पठन्ति। सोऽपपाठः। यतः "प्रथमोत्तमाः पदान्तीयाः" इत्यधस्तादुक्तम् ॥

(अ० भा०) न विद्यते पूर्वेण समानस्थानं यस्य सः तथा। अस-स्थाने मुत्संज्ञे शषसे परे पञ्चमस्पर्शो द्वितीयमाप्नोति शौनकाचार्यमतेन। यथा—सम्यङ् स्रवन्ति > सम्यख्स्रवन्ति। अनुष्टुप् शारदी > अनुष्टुफ्छारदी। असस्थाने किम्? तत् सवितुः > तत्सवितुः। शौनकस्य किम्? सम्यक्स्र-वन्तीत्यादि प्रथमभाव एव। केचित् अत्र तृतीयमवसाने चेत्येतत्सूत्रं पठन्ति। सोऽपपाठः। यतः प्रथमोत्तमाः पदान्तीया इत्यधस्तादेवोक्तम् ॥

## पञ्चमे पञ्चमम् ॥ १२३ ॥

(उ० भा०) पञ्चमे स्पर्शे प्रत्यये अपञ्चमः स्पर्शः पञ्चममापद्यते। यथा—वाक् मात्या > "वाङ्मात्या"। बट् महान् > "बण्महान्"। तत् मित्रस्य > "तन्मित्रस्य" ॥

(अ० भा०) अपञ्चमः स्पर्शः पञ्चमे परे स्ववर्गीयं पञ्चममाप्नोति। यथा—वाक् मात्या > वाङ् मात्या। बट् महान् > बण्महान्। तत् मित्रस्य > तन्मित्रस्य। त्रिष्टुप् माध्यन्दिनम् > त्रिष्टुम्माध्यन्दिनम्। इदमुदाहरणं प्रवर्ग्यकाण्ड-स्थम् ॥

## हश्च तस्मात्पूर्वचतुर्थम् ॥ १२४ ॥

(उ० भा०) हश्च तस्मादपञ्चमात् स्पर्शात्तृतीयभूतादुत्तरः सन्नधस्त-नस्य स्पर्शस्य चतुर्थमापद्यते। यथा—"उत् हर्षय > उद्धर्षय"। अवाट् हव्यानि > "अवाड्ढव्यानि" ॥

(अ० भा०) हकारश्चापञ्चमात् स्पर्शात् तृतीयभावं प्राप्तात्परस्सन् पूर्वस्पर्शस्य चतुर्थभावमाप्नोति। यथा—उत् हर्षय > उद्धर्षय। अवाट् हव्यानि >

थवाह्वयानि । वाक् हुतः > वाग्धुतः । तत्र स्पर्शोऽपञ्चमः स्वरधाविति तृतीयभावो द्रष्टव्यः ॥

## नकारपरो जातूकर्ण्यस्य ॥ १२५ ॥

(उ० भा०) ऋकारपरो हकारः अपञ्चमस्पर्शादुत्तरो न चतुर्थमापद्यते । न च पूर्वस्तृतीयं जातूकर्ण्यस्याचार्यस्य मतेन । यथा—सममुस्रोत् हृदः > "सममुस्रोद्हृदः" । जातूकर्ण्यस्येति किम् ? "सममुस्रोद्धृदो वा" ॥

(अ० भा०) उक्तलक्षणो हकारः ऋकारपरश्चेत् न पूर्वचतुर्थमाप्नोति । जातूकर्ण्यस्याचार्यस्य मतेन । यथा—समसुस्रोत् हृदो वा । जातूकर्ण्यस्येति किम् ? काण्वाचार्यस्य मतेन मा भूत् ॥ यदाकूतात्सममस्रोद्धृदो वा ॥

## हि ॥ १२६ ॥

(उ० भा०) "ह्यन्तराः कालाः" इत्यधस्तादुक्तम्, कालशब्दश्चेहावधिवचनः । अतोऽवधिपरिज्ञापनार्थमिदं सूत्रम् । अवधेः प्रयोजनं "न परकालः पूर्वकाले पुनः" इत्यधस्तादेवोक्तम् ॥

(अ० भा०) हिशब्दोऽत्रावधिवचनः । अवधिप्रयोजनं तु न परकालः पूर्वकाले पुनरिति प्रागुक्तमेव । ह्यन्तराः काला इति च ॥

## यवयोः पदान्तयोः स्वरमध्ये लोपः ॥ १२७ ॥

(उ० भा०) यकारवकारयोः पदान्तभूतयोः स्वरमध्ये वर्त्तमानयोर्लोपो भवति । अश्रवणमनुच्चारणं भवतीत्यर्थः । अधस्तात् सूत्रकारेण यौ यकारवकारौ विहितौ तयोरनेन लोपः क्रियते पदान्तीययोर्यकारवकारयोरसम्भवात् । "आकारोपधो यकारम्" । यथा—महाँय् इन्द्रः > "महाँ इन्द्रः" । स्वाँय् अहम् > "स्वाँ अहम्" । तथा "कण्ठ्यपूर्वो यकारमरिफितः" । श्वित्रय् आदित्यानाम् > "श्वित्र आ-

दित्यानाम्"। ताय् अस्य> "ता अस्य सूददोहसः"। "सन्ध्यक्षरमयवायावम्"। इडय् एहि> "इड एहि"। अदितय् एहि> "अदित एहि"। भूम्याय् आखून्> "भूम्या आखून्"। विष्णव् उरुगाय> "विष्ण उरुगाय"। ताव् उभौ> "ता उभौ चतुरः"। लुप्तयोश्च यकारवकारयोर्यः स्वरसन्धिः प्राप्नोति। सः "न परकालः" इत्यादिना निषिध्यते ॥

(अ० भा०) पदान्तयोः स्वरमध्ये वर्त्तमानयोर्यवयोः लोपः स्यात् लोपमनुच्चारणमित्यर्थः। यथा—महाँय् इन्द्रः> महाँ इन्द्रः। स्वाँय् अहम्> स्वाँ अहम्। आकारोपधो यकारम् इति सूत्रेण कृतस्य यकारस्यात्र लोपो ज्ञेयः। यथा—श्वित्रः आदित्यानाम्> श्वित्र आदित्यानाम्। अत्र कण्ठ्यपूर्वो यकारः रिफित इति कृतस्य यकारस्यात्र लोपः। तथा ताः अस्य> ता अस्य सूददोहसः। तथा इळा एहि। अदित एहि। काम्य एहि। भूम्या आखून्। वाय ऋतस्पते हिरण्यरूपा उषसः। अत्र सन्ध्यक्षरमयवायावमिति प्राप्तयोर्यवयोर्लोपः। एवमन्यदपि उदाहरणं वेदितव्यम्। अत्र यवयोर्लोपे सति स्वरसन्धिस्तु न परकालः पूर्वकाले पुनरिति निषिद्धत्वात् न भवति ॥

न वकारस्यासस्थान एकेषाम् ॥ १२८ ॥

(उ० भा०) वकारस्य पदान्तस्य असस्थाने स्वरे प्रत्यये लोपो न भवत्येकेषामाचार्याणां मतेन। यथा—"विष्णवे ते दाधर्थ"। "कृशानवे ते वः"। असस्थान इति किम्?। "विष्ण उरुगाय"। "हिरण्यरूपा उषसः" ॥

(अ० भा०) वकारस्य लोपो न स्यात् असस्थाने परे एकेषामाचार्याणां मतेन। यथा—विष्णवे ते दाधर्थ। कृशानवेते। इदं क्रमोदाहरणम्। असस्थाने किम्? विष्ण उत वा हिरण्यरूपा उषसः। एकदेशेन समानस्थानत्वात् अत्र एकेषामित्येकशब्दस्य एके मुख्यान्यकेवलाः इत्यभिधानादन्यार्थता। न मुख्यार्थता। व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् इति न्यायात्। तेन मुखे

स्थित इति मुख्यः इति व्युत्पत्या पञ्चदशसु शाखासु आद्यायां काण्वशाखायां नायं विधिरिति भावः ॥

**असौ च शाकटायनः ॥ १२९ ॥**

**(उ० भा०) असावित्येतस्य पदस्य असस्थाने प्रत्यये वकारो न लुप्यते शाकटायनस्य मतेन। असौ एहि > "असावेहि"। एके एतत्सूत्रं पठन्ति सोऽपपाठः पूर्वेणैव सिद्धत्वात् ॥**

(अ० भा०) असौपदस्य वकारो न लुप्यते असस्थाने स्वरे परे शाकटायनस्याचार्यस्य मतेन। काण्वशिष्यःसः पुराणे तद्दर्शनात्। तेन शिष्याचार्ययोः एकमतत्वात् काण्वमतेनाप्येवमेव। यद्वा शाकटायन इति काण्वाचार्यस्यैव नामान्तरमुदाहरणम्। यथा—असावेह्यसावेह्यसावेहि। योसावसौ पुरुषस्सोऽहमस्मि। अत्र अनथो इति शेषं पूरयन्ति अथोशब्दं वर्जयित्वेत्यर्थः। तेन सुप्रजास्त्वाय चासा अथो जीव। इतिशब्देनैवमिति सप्तमे वक्ष्यति। यथा निदधामि दधाम्यौ असा इत्यसौ ॥

**प्रउगमिति यकारलोपः ॥ १३० ॥**

**(उ० भा०) प्रयुगमित्येतस्मिन् पदे यकारलोपः प्रत्येतव्यः कर्त्तव्यो वा। प्रयुज्यत इति प्रयुगम्। तत्र युजेर्यकारो लुप्यते। यथा— "प्रउगमुक्थ्यमव्यथायै"। "न परकालः" इत्यनेन स्वरसन्धिर्न भवति ॥**

(अ० भा०) प्रयुज्यत इति प्रयुगम्। अपदान्तार्थोऽयमारम्भः। यथा—प्रउगमुक्थमव्यथायै स्तभ्नातु। न परकाल इत्यसिद्धिः ॥

**अनादेशोऽविकारः ॥ १३१ ॥**

**(उ० भा०) इत उत्तरं स्वराणामुदात्तानुदात्तस्वरितप्रचितानामेकीभावगतं विकारं विवक्षुः परिभाषां चकाराचार्योऽनादेशोऽविकार इति।**

यत्रोदात्तादीनां स्वराणां सन्धावादेशो न क्रियते तत्राविकारः प्रत्येतव्यः। यथा—"अग्निर्मूर्द्धा दिवः ककुत्"। तथा "इयमुपरि"॥

(अ० भा०) इतः परमुदात्तानुदात्तस्वरितप्रचितस्वराणां एकीभावगतं विकारं विवक्षुराचार्यः परिभाषामाचष्टे अनादेशेऽविकार इति यत्र उदात्तादीनां स्वराणां परस्परं सङ्गता वा यद्वाचो वार्थः। कुऽप्वोः कऽपौ चेति चेत् प्रत्ययादौ तथा व्याख्यातत्वात् विकल्पोऽपि व्यवस्थितः असावेति। योसावसौ। चासा अथो जीव। व्यवस्थितविकल्पस्येमानि क्रमेण उदाहरणानि। इतिशब्देऽप्येवमेव व्यवस्थां वक्ष्यति सप्तमे। लोके निदधाम्यसाविति। तदुदाहरणं प्रयुगमिति यकारलोप प्रयुगमिति पदे यकारो लुप्यते देशोऽनुक्रियते। तत्र न विकारभावः प्रत्येतव्यः। यथा—अग्निर्मूर्धा दिवः ककुत्। इयमुपरि मतिस्तस्यै।

प्रागुवर्णादक्षराणामेकीभावः॥ १३२॥

(उ० भा०) उवर्णोपलक्षितात् सूत्रात् "उदात्ताच्चानुदात्तं स्वरितम्। इत्येतस्मात् प्राग्यदित ऊर्ध्वमनुक्रमिष्यामस्तत्राक्षराणामेकीभावोऽधिकृतो वेदितव्यः। "स्वरोऽक्षरम्" इत्यधस्तादुक्तमित्यतः स्वराणामेकीभावोऽधिकृतो वेदितव्यः। अधिकारसूत्रमेतत्॥

(अ० भा०) उवर्णोपलक्षितत्वात् उदात्ताच्चानुदात्तं स्वरितमित्यस्मात् सूत्रात् प्राक् इत ऊर्ध्वं यत् अनुक्रमिष्यामः तत्र अक्षराणामेकीभावोऽधिकृतो वेदितव्यः। स्वरोऽक्षरमित्यधस्तात् उक्तम्। अतः स्वराणामेकीभावोऽधिक्रियते। अधिकारोऽयम्॥

स्वरितवान् स्वरितः॥ १३३॥

(उ० भा०) स्वरितवानेकीभावः स्वरितो भवति। यथा—पथ्या इव > "पथ्येव"। चम्वी इव > "चम्वीव सोमः"। जात्योदाहरणे। यथा—ब्रह्म असृज्यत > "ब्रह्मासृज्यत"। मृत्यवे असितः > "मृत्यवेऽसितः"। तैरोव्यञ्जनोदाहरणे॥

(अ० भा०) स्विरतः अस्मिन्निति स्वरितवान्। एकीभावः स्वरितः स्यात् यथा—पथ्या इव> पथ्येव सूरेः। स्रुचि इव > स्रुचीव घृतम्। चम्वी इव > चम्वीव सोमः। जात्योदाहरणे इमे। ब्रह्मासृज्यत। मृत्यवेसितः। तैरोव्यञ्जनमिदम् ॥

**उदात्तवानुदात्तः ॥ १३४ ॥**

(उ० भा०) उदात्तोऽस्मिन्नस्तीति उदात्तवान्। उदात्तवानेकीभाव उदात्तो भवति। स चोदात्तः पुरस्तात् पश्चाद्वा भवति। इतरत्रोदात्तानुदात्तस्वरितप्रचिताः। यथा उभयत्रोदात्तो भवति—ये अन्नेषु> "येऽन्नेषु"। द्रूणानः अस्ता> "द्रूणानोऽस्तासि"। उदात्तपूर्वोऽनुदात्तपरो भवति यथा—प्र अर्पयतु> "प्रार्पयतु"। आ इदम्> "एदम्"। उदात्तपरोऽनुदात्तपूर्वो यथा—त्वा आशाभ्यः> "त्वाशाभ्यः"। मे अङ्गानि> "मेऽङ्गानि सर्वतः"। उदात्तपूर्वः स्वरितपरो यथा—सु ऊर्व्याय> "नम ऊर्व्याय च सूर्व्याय च"। अवग्रह एतदुदाहरणम्। स्वरितपूर्व उदात्तपरो यथा—अद्भूत्ये अवसे> "अद्भूत्येऽवसे"। सुप्वा इति> "सुप्वेति"। पदसंहितायामुदाहरणम्। अत्रोदात्तस्वरितसन्धौ "विप्रतिषेध उत्तरं बलवदलोपः" इति परिभाषासूत्रेणोदात्त एव भवति उदात्तशास्त्रस्य परत्वात्। न तु स्वरितः स्वरितशास्त्रस्य पूर्वत्वात्। उदात्तपरः प्रचितपूर्वो यथा—ओजिष्ठ ओजिष्ठः> "इन्द्रौजिष्ठौः"। वाजजितः अध्वनः> "वाजिनो वाजजितोऽध्वनः"। अधस्तनयोगापवादः ॥

(अ० भा०) उदात्तवानेकीभाव उदात्तः स्यात्। स चोदात्तः पुरस्तात्पश्चाद्वा भवति। क्रमेणोदाहरणानि—उभयतोदात्तो यथा—ये अन्नेषु> येऽन्नेषु विविध्यन्ति। द्रूणानः अस्ता> द्रूणानोऽस्तासि। उदात्तपूर्वोऽनुदात्तपरो यथा—प्रा अर्पयतु> प्रार्पयतु। आ इदम्> एदमगन्म। एदं बर्हिः। अनुदात्तपूर्वः उदात्तपरो यथा—त्वा आशाभ्यः> विश्वाभ्यस्त्वाशाभ्यः। विशः मे अङ्गानि> विशो मेऽङ्गानि। उदात्तपूर्वस्वरितो यथा—सु ऊर्व्याय> नम ऊर्व्याय च सूर्व्याय च। स्वरितपूर्व उदात्त एव भवति न स्वरितः उदात्तानुदात्त इत्यस्य परत्वेन

प्राबल्यादिति भावः । प्रचितपूर्व उदात्तपरो यथा—ईळितः जातवेदः अवाट् > त्वमग्न ईळितो जातवेदोऽवाढव्यानि । अत्र पूर्वसूत्रापवादो ज्ञेयः ॥

**इवर्णमुभयतो ह्रस्वमुदात्तपूर्वमनुदात्तपरँ स्वरितम् ॥ १३५ ॥**

**(उ० भा०) इकारो वर्णो यस्याक्षरस्येति इवर्णमक्षरम् । बहुव्रीहिरयमक्षरप्रधानः । इवर्णमक्षरं स्वरितं भवति । कथम्भूतम् ? उभयतोह्रस्वम् । उभयत इवर्णो ह्रस्वस्याक्षरस्येत्युभयतोह्रस्वस्तम् । उदात्तपूर्वो यस्याक्षरस्येत्युदात्तपूर्वमक्षरम् । अनुदात्तपरो यस्येत्यनुदात्तपरमक्षरम् । यथा—स्रुचि इव > "स्रुचीव घृतम्" । अभि इन्धताम् > "अभीन्धताम्मुखे" । उभयतोह्रस्वमिति किम् ? हि ईम् > "विहीमिद्धः" । उदात्तपूर्वमिति किम् ? "इमे इतीमे" । "वीध्यायेति वि ईध्याय" । अधस्तनयोगापवादः ॥**

(अ० भा०) उभयतोह्रस्वः यस्य तत्तथा । उदात्तपूर्वो यस्य तत्तथा । अनुदात्तपरो यस्य तत्तथा । बहुव्रीहिरयं अक्षरप्रधानः । तथाच उभयतोह्रस्वमुदात्तपूर्वं अनुदात्तपरं सन्धि इवर्णमेकीभावे सति स्वरितं स्यात् । यथा—अभि इन्धताम् > अभीन्धतामुखे । स्रुचि इव > स्रुचीव घृतम् । दिवि इव > दिवीवचक्षुः । उभयतोह्रस्वं किम् ? हि ई > सद्योजज्ञानो विहीमिद्धः । उदात्तपूर्वं किम् ? वीध्यायेति वि ईध्याय । परकीयम् । काण्वानां ईध्यायेति पाठात् । अधस्तनस्य योगापवादः ॥

**वीक्षितायेति च ॥ १३६ ॥**

**(उ० भा०) वीक्षितायेत्ययं च एकीभावः स्वरितो भवति । यथा—"वीक्षितायेति वि ईक्षिताय" । उदात्तपूर्वोऽनुदात्तपर एकीभावो भवति । उभयतो ह्रस्वस्तु न भवति । अतो निपात्यते ॥**

(अ० भा०) अत्र सन्धिजः पूर्वोक्तलक्षण इवर्णस्वरितः स्यात् । उभयतोह्रस्वाभावोऽयमारम्भः । यथा—वि ईक्षिताय > वीक्षिताय स्वाहा ॥

उदात्ताच्चानुदात्तँ स्वरितम् ॥ १३७ ॥

(उ० भा०) अक्षराणामेकीभावस्य पूर्वो विधिः। इदानीमक्षरा- णां व्यञ्जनव्यवहितानां यः स्वरसंहितायां भवति स उच्यते। उदात्ता- च्चाक्षरात् परं व्यञ्जनव्यवहितमनुदात्तमक्षरं स्वरितं भवति। यथा—"स्वा- हा"। "वाजः"। "पयः"। "नमः"। "मो सु नः > मो षू णः"। "हि स्म > हि ष्मा ते" ॥

(अ० भा०) स्वराणामेकीभावे स्वरविशेषमुक्त्वाधुना व्यञ्जनव्यवहि- तानां स्वराणां यः स्वरितः संहितायां भवति तमाहानेन सूत्रेण। उदात्तात्परं व्यञ्जनेन व्यवहितं अनुदात्तमक्षरं स्वरितं स्यात्। यथा—स्वाहा। वाजः। पयः। नमः। मनः। मो षू णः। हि ष्म। इत्यादि बहु ज्ञेयम् ॥

निहितमुदात्तस्वरम् ॥ १३८ ॥

(उ० भा०) निहन्यते स्वरितमुदात्तपरं स्वरितपरं च। "स्वाहा सोमाय"। नमः हिरण्यबाहवे > "नमो हिरण्यबाहवे"। "अस्थूरि णो गार्हपत्यानि सन्तु"। "भासे त्वा ज्योतिषे त्वा"। "स्वर्णघर्मः। "स्वर्ग्यायेति स्वः ग्याय"। "प्रसवेऽश्विनोः"। "अयुध्योऽस्माकम्"। "परमेष्ठ्यभिधीयतः"। "स्रुचीवेति स्रुचि इव घृतम्"। "दिवीवेति दिवि इ। चक्षुः"। एवमेतत्तैरोव्यञ्जनजात्याभिनिहितक्षैप्रप्रश्लिष्टाः स्वरि- ता उदात्तेऽनुदात्तीभूताः प्रदर्शिताः। अथेदानीं स्वरिते यथासम्भवं प्रदर्श्यन्ते। "भूर्भुवः स्वः द्यौरिव"। "स्वर्ण घर्मः स्वाहा स्वर्णार्कः" ॥

(अ० भा०) उदात्तश्च स्वरितश्च उदात्तस्वरितौ। उदात्तस्वरितौ परौ यस्य तत् उदात्तस्वरितपरमिति विग्रहः। तथाचोदात्तपरं स्वरितपरं च स्वरितं निहन्यते। अनुदात्तं स्यादित्यर्थः। तत्र उदात्तपरं स्वरितं यथा— स्वाहा सोमाय। स्वाहा विष्णवे। नमो हिरण्यबाहवे। अस्थू रिणो गार्हपत्यानि सन्तु। भासे त्वा ज्योतिषे त्वा। अयुध्योऽस्माकम्। स्वर्ण।

मीवाः । कृष्णग्रीवः । शितिकक्षः । एवमेतस्मिंश्चतुष्प्रकारेऽपि समासपदेऽवग्रहो भवति । द्वयोः पदयोः पृथग्ग्रहणमवग्रहः । नानाग्रह इत्यर्थः । ह्रस्वसमकालो ह्रस्वाक्षरतुल्यकालो भवति । यथा—“ ऋक्सामाभ्यामित्यृक् सामाभ्याम् ” । “ सन्तरन्त इति सम् तरन्तः ” । अधिकारसूत्रमेतत् ॥

(अ० भा०) पूर्वं स्थितोपस्थितमवगृह्यस्येति अवग्रहपदस्य वेष्टनमुक्तम् । तज्ज्ञानाय पञ्चमाध्याये अवग्रहो निरूप्यते । समासश्चतुर्विधः—अव्ययीभावः तत्पुरुषः द्वन्द्वः बहुव्रीहिः इति । स च द्विपदो बहुपदश्च । तत्र पूर्वपदप्रधानोऽव्ययीभावः । यथा—रूपं रूपमनुरूपम् । यथायथम् इत्यादि । उत्तरपदप्रधानस्तत्पुरुषः । यथा—अघशंसः । व्रतपते । प्रजापतिः । आखरेष्ठः । अष्टाकपालः । एकादशकपालः । दुच्छूनाम् । इत्यादि । उभयपदप्रधानो द्वन्द्वः । यथा—अग्नीषोमौ । इन्द्राग्नी । मित्रावरुणौ । दीक्षातपसोः इत्यादि । अन्यपदप्रधानो बहुव्रीहिः । शुद्धबालः । सर्वशुद्धबालः । मणिवालः । अनमीवाः । अयक्ष्माः कृष्णग्रीवः । शितिकक्षः इत्यादि । एवमेतस्मिन् चतुष्प्रकारे समासेऽवग्रहः स्यात् । अवग्रहो नाम द्वयोः पदयोः पृथक्करणम् । स च ह्रस्वाक्षरसमकालो भवति । यथा—रूपं रूपमिति रूपं रूपम् । अधुः सुते । विषुरूपमिति विषु रूपम् । इत्यादिपूर्वोक्तान्येवोदाहरणानि । अधिकारोऽयम् ॥

तरतमयोश्चातिशयेऽदक्षिणप्रत्यासङ्गे ॥ २ ॥

(उ० भा०) तरतमयोश्च प्रत्यययोः परभूतयोरतिशयवाचिनोः अवग्रहो भवति न चेद्दक्षिणशब्दस्तत्र प्रत्यासक्तो भवति । यथा—“ पूर्णतरमिति पूर्ण तरम् ” । “ वन्हितमम् इति वन्हि तमम् ” । “ सस्नितममिति सस्नि तमम् ” । अतिशय इति किम् ? “ कारोतरेण दधतः ” । “ यदा पिपेष मातरम् ” । अदक्षिणप्रत्यासङ्ग इति किम् ? “ द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषां देवानामुत्तरम् ” । असमासार्थ आरम्भः ॥

(अ० भा०) असमासार्थोऽयमारम्भः । तरतमयोः प्रत्यययोः अतिशयार्थकयोः परयोः पूर्वपदेऽवग्रहः स्यात् । तत्र दक्षिणशब्दश्चेन्न प्रत्यासन्नः ।

यथा—पूर्णतरमिति पूर्ण तरम् । वन्हितममिति वन्हि तमम् । पप्रितममिति पप्रि तमम् । इत्यादि । अतिशय इति किम् ? कारोतरेण दधतः । यदा पिपेष मातरम् । अदक्षिणप्रत्यासङ्गे किम् ? द्यावापृथिव्योर्दक्षिणं । पार्श्वं विश्वेषां देवानामुत्तरम् । नात्रावग्रहः ।

वीतमहूतमसूनमगोपातमरत्नधातमवसुधातमाः पूर्वेण ॥ ३ ॥

(उ० भा०) एतानि पदानि तमपः पूर्वेण पदेनावगृह्यन्ते । वीतम यथा—"देववीतम इति देव वीतमः"। "देवहूतममिति देव हूतमम्"। "इन्द्राय सुषुतमम् सुसूतममिति सु सूनमम्"। "सुगोपातम इति सु गोपातमः"। "रत्नधातममिति रत्न धातमम्"। 'वसुधातम इति वसु । धातमः ॥

(अ० भा०) एतानि षट् पदानि तमपूर्वपदेनावगृह्यते । अधस्तन-सूत्रापवादोऽयम् । यथा देववीतम इति देव वीतमः । देवहूतममिति देव हूत-मम् । सुसूतममिति सु सूतमम् । सुगोपातम इति सु गोपातमः । रत्नधातममिति रत्न धातमम् । वसुधातम इति वसु धातमः ।

सर्पदेवजनेभ्यश्च ॥ ४ ॥

(उ० भा०) सर्पदेवजनेभ्य इत्येतच्च पदं पूर्वेण पदेनावगृह्यते । यथा—"सर्पदेवजनेभ्य इति सर्प देवजनेभ्यः" । उपरिष्ठाद्वक्ष्यति "बहुप्रकृतावागन्तुना पर्वणा" इति । अस्यापवादः ॥

(अ० भा०) इदं पदं प्रथमपदेनावगृह्यते । यथा—सर्वदेवजनेभ्य इति सर्व देवजनेभ्यः । बहुप्रकृतावागन्तुना पर्वणेत्यस्यापवादः ॥

तूणवध्ममुत्तरेण ॥ ५ ॥

(उ० भा०) तूणवध्ममित्येतत्पदं उत्तरेण पदेनावगृह्यते । यथा—"क्रोशाय तूणवध्ममिति तूणव ध्मम्" ॥

(अ० भा०) इदं उत्तरशब्देनावगृह्यते । यथा—तूणवध्ममिति तूणव ध्मम् ॥

रायस्पोषदे विजावेति च ॥ ६ ॥

(उ० भा०) रायस्पोषदे विजावा इत्येते च पदे चशब्दादुत्तरेण पदेनावगृह्येते । यथा—"रायस्पोषद इति रायस्पोष दे" । "स्यात् नः सूनुः तनयः विजावेति वि जावा" ॥

(अ० भा०) इदं पदद्वयं चशब्दादुत्तरपदेनावगृह्यते । यथा—रायस्पोषद इति रायस्पोष दे । विजावेति विजा वा ॥

बहुप्रकृतावागन्तुना पर्वणा ॥ ७ ॥

(उ० भा०) बहूनि पदानि यत्र तद्बहुप्रकृतिपदम् तत्र । आगन्तुना पर्वणा समासलक्षणेन यत्पश्चात्कालिकं पदं भवति तेनावग्रहो भवति । यथा—"प्रजापतिरिति प्रजा पतिः" । "प्रजापतिगृहीतयेति प्रजापति गृहीतया" । समासलक्षणेन यदागन्तुकं पदं तदिह गृह्यते न तु पाठेन । तेनैतद्भवति—यथा—"सुप्रजा इति सु प्रजाः" । "सुप्रायना इति सु प्रायनाः" ॥

(अ० भा०) बहूनां पदानां प्रकृतिभूते समासे यत्पश्चात् तं अङ्कं पदं तदागन्तुपर्वेत्युच्यते । तेनावगृह्यते । प्रजापतिगृहीतयेति प्रजापति गृहीतया । तथा अदब्धव्रतप्रमतिरित्यदब्धव्रत प्रमतिः । अत्रागन्तुशब्देन समासे यदन्त्यं पदं तदेवाभिप्रेतम् । न तु पाठतः । तेनान्तिमपदस्य पदद्वयात्मकत्वेऽपि एकपदवत् पूर्वपदेऽपि वावग्रहः । यथा—सुप्रजा इति सुप्रजाः । सु प्रायना इति सु प्रायनाः । इत्यादि ॥

तद्धति तद्धिते न्यायसँहितं चेत् ॥ ८ ॥

(उ० भा०) तद्वतीत्यत्र एकस्य वतिशब्दस्य तन्त्रेणोच्चारणं द्रष्टव्यम्। तद्वति मत्वर्थीये तद्धिते वतौ च परभूते अवग्रहो भवति न्यायसंहितं व्याकरणशास्त्रोक्तसन्धिमत् पदं चेद्भवति। यथा—"मधुमदिति मधु मत्"। "हिरण्यवदिति हिरण्य वत्"। वतौ खल्वपि यथा—"वरिष्ठाम् अनु सँवतमिति सम् वतम्"। तद्वतीति किम्? "एतावान् अस्य महिमा"। न्यायसंहितमिति किम्? "ऊर्ज्जस्वन्तम् पयस्वन्तम् मरुत्वन्तम्"॥

(अ० भा०) तद्वतीत्यत्र एकस्य वतिशब्दस्य तन्त्रेणोच्चारणं द्वेधा द्रष्टव्यम्। तद्वति मत्वर्थीये तद्धिते वतौ परभूते अवग्रहः स्यात् न्यायसंहितं चेत् पदं भवति। यथा—मधुमदिति मधु मत्। गोमदिति गो मत्। वतौ च यथा—संवतमिति सम् वतम्। मत्वर्थीये किम्? एतावान् अस्य महिमा। अयं वतिप्रत्ययो न मत्वर्थीयः। किन्तर्हि परिमाणार्थकम्। अतः अत्र नावग्रहः। न्यायसंहितं किम्? ऊर्जस्वन्तम् पयस्वन्तम् मरुत्वन्तम्। नेदं न्यायेन व्याकरणेन संहितम्। अतः अत्र नेत्यर्थः॥

## शस्त्वन्त्रातातिषु च॥ ९॥

(उ० भा०) शस् त्वं त्रा ताति एतेषु तद्धितेषु अवग्रहो भवति। शस् यथा—"कति होतारः ऋतुश इत्यृतु शः"। त्वं यथा—"मर्त्यस्य देवत्वमिति देव त्वम्"। त्रा यथा—"देवत्रेति देव त्रा यन्तम्"। ताति यथा—"ज्येष्ठतातिमिति ज्येष्ठ तातिम् बर्हिषदम्"॥

(अ० भा०) शः त्वम् त्रा ताति एतेषु तद्धितेषु परेषु पूर्वमवग्रहः स्यात्। यथा—ऋतुश इत्यृतु शः। कति होतार ऋतुशः। देव त्वमिति देव त्वम्। तन्मर्त्यस्य देवत्वम्। देवत्रेति देव त्रा यन्तम् अवसे। ज्येष्ठतातिमिति ज्येष्ठ तातिम् बर्हिषदम्॥

## धात्वर्थे यकारे स्वरपूर्वे॥ १०॥

( उ० भा० ) प्रातिपदिकं सुब्धातुर्भवतीति कृत्वा यकार उपादीयते स धात्वर्थो यकारः "सुप आत्मनः क्यच्"। इत्यादिभिः सूत्रैर्यो विहितः स इह गृह्यते। तस्मिन् धात्वर्थे यकारे प्रत्यये स्वरपूर्वेऽवग्रहो भवति। यथा—"वृषायमाणः वृषयमाण इति वृष यमाणः"। "अघायतः अघयत इत्यघ यतः"। धात्वर्थ इति किम्? "यदक्रन्दः प्रथमं जायमानः"। स्वरपूर्वे इति किम्? "इन्द्राय पच्यते मधु"। रूपोदहरणम् ॥

( अ० भा० ) धातुः अत्र सुब्धातुः। सुप आत्मनः क्यजित्यादिभिः सूत्रैर्विहितः यः यकारस्तदिह उपादीयते। तस्मिन् धात्वर्थे यकारे स्वरपूर्वे परे पूर्वमवग्रहः स्यात्। यथा वृषायमाणः वृषयमाण इति वृषय यमाणः वृषभः तुराषाठ्। तथा अघायतः अघयत इत्यघ यतः : समस्मात्। तथा अरातीयतः अरातियत इत्यराति यतः हन्ता। तथा शत्रूयतः शत्रुयत इति शत्रु यतः हन्ता इत्यादि। धात्वर्थे किम्? जायमानः। यदक्रन्दः प्रथमं जायमानः। स्वरपूर्वे किम्? विध्यति। पच्यते। रूपोदाहरणमिदम् ॥

## वाँसौ च भूतकाले स्वरेण ह्रस्वादनुषि ॥ ११ ॥

( उ० भा० ) वांसौ च प्रत्यये परभूतेऽवग्रहो भवति भूतकालार्थाभिधायिनि स्वरेण ह्रस्वात् स्वरात् परभूते स्वरेण वा ह्रस्वेनोपहिते। एवं तृतीया पञ्चम्यर्थे इति विभक्तिव्यत्ययेन योजना। अनुषि वांसौ उषिरूपभूतेऽवग्रहो न भवति। यथा—"जक्षिवाँस इति जक्षि वाँस"। "पपिवाँस इति पपि वाँस" "ससृवाँस इति ससृ वाँस"। भूतकाल इति किम्? "सुविद्वाँस इति सु विद्वाँसः"। स्वरेण ह्रस्वादिति किम्? "जिगीवाँसः"। स्वरादिति किम्? "चिकित्वान्तसादय"। अनुषीति किम्? "सूर्य्यः आत्मा जगतः तस्थुषः" ॥

( अ० भा० ) भूतकालार्थाभिधायिनि पूर्वं पश्चाच्च ह्रस्वेन स्वरेणोपहिते वांसप्रत्यये परे पूर्वमवग्रहः स्यात्। उषिरूपे वांसौ च न भवति। अत्र ह्रस्वा-

दिति पञ्चमी तृतीयार्थे व्याख्यातव्या । गोत्रेण गार्ग्य इतिवत् । यथा—जक्षिवांस इति जक्षि वांसः । जक्षे इति जक्षिवान् । पपिवांस इति पपिवांसः । पपौ इति पपिवान् । भूतकाले इति किम् ? सुविद्वांस इति सु विद्वांसः वितेनिरे । वदिन्त विद्वांस इति । नायं भूतकालः । किं तर्हि ? वर्तमातकालः । स्वरेण ह्रस्वादिति किम् ? जिगीवांसौ । परेषामिदम् । स्वरादिति किम् ? चिकित्वान् सादया यज्ञम् । अनुषीति किम् ? सूर्य आत्मा जगतस्तस्थुषश्च ॥

## प्रत्नपूर्वविश्वेमर्त्तुभ्यस्था ॥ १२ ॥

(उ० भा०) एभ्यः परस्थाप्रत्ययोऽवगृह्यते । प्रत्न यथा—"प्रत्नथेति प्रत्न था"। "पूर्वथेति पूर्व था"। "विश्वथेति विश्व था"। "इमथेतीम था"। "ऋतुथेत्यृतु था"।

(अ० भा०) प्रत्नेत्यादिभ्यः पञ्चभ्यः थाप्रत्ययोऽवगृह्यते । यथा—प्रत्नथेति प्रत्न था । पूर्वथेति पूर्व था । विश्वथेति विश्व था । इमथेतीम था । ऋतुथेति ऋतु था ॥

## ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये ॥ १३ ॥

(उ० भा०) ह्रस्वात् स्वराद्व्यञ्जनाच्च परभूते भकारादिविभक्तिप्रत्ययेऽवग्रहो भवति । ह्रस्वाद्भवति यथा—"तक्षभ्य इति तक्ष भ्यः" । "अग्निभिरित्यग्नि भिः" । व्यञ्जनाद्भवति यथा—"तिष्ठद्भ्य इति तिष्ठत् भ्यः"। "धावद्भ्य इति धावत् भ्यः"। ह्रस्वव्यञ्जनाभ्यामिति किम्? "रथकारेभ्य इति रथ कारेभ्यः"। "कुलालेभ्यः"। भकारादौ विभक्तिप्रत्यय इति किम्? "कर्णो गर्दभः"। "कुम्भो वनिष्ठुः"। भकारादाविति किम्? "अग्निषु"॥

(अ० भा०) ह्रस्वस्वरात् व्यञ्जनाच्च भकारादौ विभक्तिप्रत्यये परे अवग्रहः स्यात् । ह्रस्वाद्यथा—तक्षभ्य इति तक्ष भ्यः । अर्चिभिरित्यर्चि भिः । भानुभिरिति भानु भिः । पितृभ्य इति पितृ भ्यः । इत्यादि । व्यञ्जनाद्यथा—

बृहद्भिरिति बृहत् भिः। तिष्ठद्भ्य इति तिष्ठत् भ्यः। ह्रस्वव्यञ्जनाभ्यामिति किम्? रथकारेभ्य इति रथ कारेभ्यः। कुलालेभ्यः। अत्र समासे अवग्रह इत्यवग्रहः भकारादौ विभक्तिप्रत्यये किम्? कर्णः गर्दभः कुम्भः वनिष्ठुः ॥

स्विति चानतौ ॥ १४ ॥

(उ० भा०) सु इत्येतस्मिंश्च विभक्तिप्रत्ययेऽनताववग्रहो भवति। यथा—"अप्स्वित्यप् सु अग्ने सधिः"। "अभि प्रजहि निः दह हृत्स्विति हृत् सु"। अनताविति किम्? "ऋक्षु" "अग्निषु"। "स्नुषु"। विभक्तीति किम्? "असुम्"। ह्रस्वव्यञ्जनाभ्यामिति पूर्वसूत्रादनुवर्त्तते। ताभ्यामिति किम्? "यासु" ॥

(अ० भा०) सु एतस्मिन् विभक्तिप्रयत्यये च परे तथा अनतौ दन्त्यस्य मूर्धन्यभावे भवतीत्यर्थः। यथा—अप्स्वित्यप् सु। अग्ने हृत्स्विति हृत् सु शोकैः। अनतौ किम्? दिक्षु अग्निषु ॥

वर्णसङ्ख्येऽन्यतरतः ॥ १५ ॥

(उ० भा०) वर्णसमासः सङ्ख्यासमासश्चान्यतरतो विकल्पेनावगृह्यते। वर्णसमासो भवति यथा—"धूम्ररोहित इति धूम्र रोहितः। कर्कन्धुरोहित इति कर्कन्धु रोहितः"। सङ्ख्यासमासो भवति यथा—"पञ्चदशेति पञ्च दश"। "त्रयोदशेति। त्रयः दश" ॥

(अ० भा०) वर्णसमासः सङ्ख्यासमासश्च अन्यतरतो विकल्पेनावगृह्येत। विकल्पोऽपि व्यवस्थितः। वर्णसमासे यथा—धूम्ररोहित इति धूम्र रोहितः। कर्कन्धुरोहित इति कर्कन्धु रोहितः। सङ्ख्यासमासे यथा—पञ्चदशेति पञ्च दश। सप्त दशेति सप्त दश। इत्यादि ॥

अनुदात्तोपसर्गे चाख्याते ॥ १६ ॥

(उ० भा०) अनुदात्त उपसर्गोऽस्येत्यनुदात्तोपसर्गमाख्यातम्। तस्मिन्नवग्रहो भवति। यथा—"यत् अश्वाय वासः उपस्तृणन्तीत्युप। स्तृणन्ति"। "अभि शूलम् निहतस्येति नि हतस्य अवधावतीत्यव धावति"॥

(अ० भा०) अनुदत्त उपसर्गोऽस्येत्यनुदात्तोपसर्गम्। तादृशे आख्याते परे अवग्रहः स्यात्। यथा—उपस्तृणन्तीत्युप स्तृणन्ति। यदश्वाय वास उपस्तृणन्त्यधीवासम्। अवधावन्तीत्यव धावन्ती। अभिशूलं निहतस्यावधावति। विभातीति वि भाति। द्युमद्विभाति क्रतुमज्जनेषु। समास इत्यनुवर्त्तते। अनुदात्तोपसर्गे किम्? वि। भाति। दिविस्पृशाद्युमद्विभाति भरतेभ्यः शुचिः। पूर्वोदाहरणे यद्वृत्तोपपदाच्च इति सूत्रेण आख्यातपदस्य प्रकृतिस्वरत्वेन उदात्तत्वे सति उदात्तवतातिजातैः समासवचनमिति कुगतिप्रादय इति व्याकरणसूत्रवार्त्तिकेन समासः। एवं विशं हरिप्रं प्रवहन्ति देवीः। इत्यादि शब्दादियोगेन तिङ् उदात्तवत्वेन समास इति स्वबुध्या ऊह्यमित्यलम्॥

## गिरित्रशयोः॥ १७॥

(उ० भा०) गिरिशब्दोऽवगृह्यते त्रशयोः प्रत्यययोः परयोः। यथा—"शिवाम् गिरित्रेति गिरि त्र"। 'गिरिशेति गिरि श अच्छ वदामसि"॥

(अ० भा०) गिरिशब्दोऽवगृह्यते त्रशयोः परयोः। यथा—शिवाम् गिरित्रेति गिरि त्र। गिरिशेति गिरिश अच्छ वदामसि॥

## इवकाराम्रेडितायनेषु च॥ १८॥

(उ० भा०) इव कार आम्रेडित अयन एतेषु सुप्रत्ययेषु परभूतेषु अवग्रहो भवति। इवे यथा—"स्रुचीवेति स्रुचि इव। घृ म्"। "चर्म्वावेति चर्म्वी इव। सोमः"। कारे यथा—"हिङ्कारायेति हिम् काराय"। "वषट्कारेभिरिति वषट् कारेभिः आहुतीरित्या हुतीः"।

आम्रेडिते यथा—“यज्ञा यज्ञेति यज्ञा यज्ञा वः”। “सँसमिति सम् सम् इत्”। “यतो यत इति यतः यतः”। अयने यथा—“आयनायेत्या अयनाय”। “प्रायनायेति प्र अयनाय”॥

(अ० भा०) इवः कारः आम्रेडितः अयन एषु परेषु अवगृह्यते। यथा—स्रुचीवेति स्रुचि इव। घृतं हिङ्कारायेति हिं काराय। वषट्कारेभिरिति वषट् कारेभिः। वषट्कारानिति वषट् कारान्। आम्रेडिते यथा—यज्ञा यज्ञेति यज्ञा यज्ञा वः। संसमिति सं सम् इत् युवसे। वृषन् प्रप्रेति प्र प्र अयम् अग्निः। उपोपेत्युप उप इत् नु मघवन्निति मघवन्। अयने यथा—यनायेत्या अयनाय। प्रायणाय प्रायनायेति प्र अयनाय॥

एकात्समीची ॥ १९ ॥

(उ० भा०) एकशब्दात्परः समीचीशब्दोऽवगृह्यते। यथा—“शिशुम् एकम् समीची इति सम् ईची”। एकादिति किम्? “स्वर्विदेति स्वः विदा समीची इति समीची उरसा त्मना”॥

(अ० भा०) एकशब्दात्परः समीचीशब्दः अवगृह्यते। यथा—शिशुं एकम् समीची इति सं ईची। एकात् किम्? समीची इति समीची उरसा। एकशब्दस्यात्र एकशब्दमात्रपरत्वम्। न सर्वनामत्वम्। तेन एकादिति साध्विति ज्ञेयम्॥

त्वायवः शँय्योर्बहिर्द्धास्मयुं मृण्मयीं सुम्नयाशुया साधुया धृष्णुया विशालमनुया ॥ २० ॥

(उ० भा०) एतानि पदानि सावग्रहाणि भवन्ति। त्वायवो यथा—“सुताः इमे त्वायव इति त्वा यवः”। शँय्योर्यथा—“शिवम् शग्मम् शँय्योरिति शम् योः”। बहिर्द्धा यथा—“इदम् अहम् तप्तम् वाः बहिर्धेति बहिः धा यज्ञात्”। अस्मयुं यथा—“अग्निम् भरन्तम् अस्मयुमित्यस्म युम्”। मृण्मयीं यथा—

"हीम्। मृण्मयीमिति मृत् मयीम् योनिम् अग्नये"। सुम्नया यथा —"धीराः देवेषु सुम्नयेति सुम्न या"। आशुया यथा— "तव भ्रमासः आशुयेत्याशु या"। साधुया यथा —"आसीद साधुयेति साधु या"। धृष्णुया यथा—" चित्र वज्रहस्तेति वज्र हस्त धृष्णुयेति धृष्णु या"। विशालं यथा— "वृष्णिः विशालमिति वि शालम् पुरुषः"। अनुया यथा— "अहः अनुयेत्यनु या आत्र्या रात्रीम् उशिजा वसुभ्य इति सु, भ्यः"॥

( अ० भा० ) त्वायव इत्यादि एकादश पदानि सावग्रहाणि स्युः। यथा—सुताः इमे त्वायवः। शिवम् शग्मम् शंयोरिति शंयोः। इदम् अहम् तप्तम् वाः बर्हिर्धेति बर्हिः धा। अग्निम् भरन्तम् अस्मयुमित्यस्मयुम्। मृण्मयोमिति मृत् मयीम् योनिम् अग्नये। धीराः देवेषु सुम्नयेति सुम्न या। तव भ्रमासः आशुयेत्याशु या पतन्ति। ध्रुवम् योनिम् आसीद साधुयेति साधुया। वज्रहस्तेति वज्र हस्त धृष्णुयेति धृष्णु या। वृष्णिः विशालमिति वि शालम्। अहः अनुयेत्यनु या आत्र्या। अत्र पदग्रहणम् प्रदर्शनार्थम्। तेन शंयोरशंयोरित्यादि द्वितीयपदेऽपि भवतीति ज्ञेयम्॥

मृगयुमुभयादतोऽपामार्गकिम्पूरुषमिति च ॥ २१ ॥

( उ० भा० ) एतानि पदानि सावग्रहाणि भवन्ति। मृगयुं यथा— "मृत्यवे मृगयुमिति मृग युम्"। उभयादतो यथा—"ये के च उभयदत इत्युभय दतः"। अपामार्गं यथा—"अपामार्ग। अपमार्गेत्यप मार्ग त्वम् अस्मत्"। किम्पूरुषं यथा—"पर्वतेभ्यः किम्पूरुषम् किम्पुरुषमिति किम् पुरुषम्"॥

( अ० भा० ) एषु चतुर्षु अवग्रहः स्यात्। यथा—मृगयुमिति मृग युम् अन्तकाय। ये के च उभयादतः उभयदत इत्युभय

दतः । अपामार्ग अपामार्गेत्यप मार्ग त्वम् । पर्वतेभ्यः किम्पूरुषम् किम्पुरुष-मिति किम् पुरुषम् ॥

## पारावतानाग्निमारुताश्चेति जातूकर्ण्यस्य ॥ २२ ॥

(उ० भा०) पारावतान् आग्निमारुता इत्येते पदे सावग्रहे भवतो जातूकर्ण्यस्याचार्यस्य मतेन। यथा—"अन्हे पारावतान् इति पारा वातन्"। "कल्माषाः आग्निमारुता इत्याग्नि मारुताः"। जातूकर्ण्य-स्येति किम्? "पारावतान्"। "आग्निमारुताः" ॥

(अ० भा०) पारावतान् आग्निमारुताः इति पदद्वयं सावग्रहं स्यात् जातूकर्ण्यस्य मतेन। जातूकर्ण्यस्य ग्रहणं विकल्पार्थम्। सोऽपि व्यवस्थितं एव। काण्वादेर्नास्ति अन्येषामस्तीति। यथा—अन्हे पारावतानिति पारा वतान्। कल्माषाः आग्निमारुता इत्याग्निमारुताः। जातूकर्ण्यस्य किम्? पारावतान्। आग्निमारुताः ॥

## अधीवासमित्येके ॥ २३ ॥

(उ० भा०) अधीवासमित्येतत्पदमेके आचार्याः सावग्रहं कुर्वन्ति। "अधिवासमित्यधि वासम् या हिरण्यानि"। एक इति किम्? "अधीवासम्" ॥

(अ० भा०) अधीवासमित्येतत्पदं एकेआचार्याः सावग्रहं मन्यन्ते। यथा—अधीवासम् अधिवासमित्यधि वासम् या हिरण्यानि अस्मै। एकश-ब्दोऽत्रान्यवचनः। तेन आद्यशाखिनां न भवति। यथा अधीवासम् या हिरण्यानि अस्मै ॥

## प्रतिषेधे नावग्रहः ॥ २४ ॥

(उ० भा०) समासेऽवग्रहः। इति योऽवग्रहाधिकारः कृत-स्तस्यायमपवादः। प्रतिषेधवाचिना नञा निपातेन सह समासे सति

अवग्रहो न भवति। यथा—न रक्षसा। "अरक्षसा। मनसा"। न इराः। "अनिराः अमीवाः निर्षादन्"। अत्र "नलोपो नञः" इति नकारलोपः। "तस्मान्नुडचि" इति नुडागमः। प्रतिषेधे किम्? "अनिशित इत्यनि शितः असि"॥

(अ० भा०) प्रतिषेधवाचिना निपातेन नञा सह समासे सति अवग्रहो न स्यात्। समासेऽवग्रह इत्यस्यापवादः। यथा—न अमीवाः। अनमीवाः अनागसः अरक्षसा इत्यादि। नलोपो नञः इति व्याकरणसूत्रेण नकारलोपः। ततः तस्मान्नुडचीति नुडागमः। प्रतिषेधे किम्? पर्युदासे मा भूत्। यथा—अनिशित इत्यनि शितः असि॥

## उत्तरेण चाकारेण॥ २५॥

(उ० भा०) प्रतिषेधवाचिनो नञ्निपातादुत्तरेण चाकारेण सह समासेऽवग्रहो न भवति। यथा—"अनाततायधृष्णवे"। "अनाधृष्यः जातवेदा इति जात वेदाः"॥

(अ० भा०) प्रतिषेधवाचिनो नञ उत्तरेण सह समासे नावग्रहः। यथा—अनाततायधृष्णवे। अनाधृष्यः जातवेदा इति जात वेदाः॥

## द्वापूर्वम्॥ २६॥

(उ० भा०) द्वापदपूर्वं समासपदं नावगृह्यते। यथा—"द्वादश"। "द्वाविंशः"। "द्वात्रिंशत्"॥

(अ० भा०) द्वापदपूर्वे समासपदं नावगृह्यते। यथा—द्वादश। द्वाविंशतिः। द्वात्रिंशत्॥

## सङ्ख्यापूर्वश्चधा॥ २७॥

( उ० भा० ) सङ्ख्यापूर्वपदो धापदोत्तरपदः समासो नावगृह्यते। यथा—"अष्टधा दिवम्"। "कति होमासः कतिधा समिद्ध इति सम् इद्धः"। सङ्ख्यापूर्व इति किम्? "इदम् अहम् तप्तम् वाः बर्हिर्धेति बर्हिः धा"॥

( अ० भा० ) सङ्ख्यापूर्वश्च धाप्रत्ययः नावगृह्यते। त्रिधा बद्धः। सप्तधा त्वा यजन्ति। कतिधा वि अकल्पयन्। सङ्ख्यापूर्वः किम्? बर्हिर्धेति बर्हिः धा यज्ञात्॥

द्वन्द्वानि द्विवचनान्तानि स्वरान्तपूर्वपदानि॥ २८॥

( उ० भा० ) द्वन्द्वसमासपदानि द्विवचनान्तानि स्वरान्तपूर्वपदानि नावगृह्यन्ते। यथा—"अयम् वाम् मित्रावरुणा"। "इन्द्राग्नी आगतम्"। "अग्नीषोमयोः उज्जितिम्"। द्वन्द्वानीति किम्? "अन्हुतमसि हविर्द्धानमिति हविः धानम्"। स्वरान्तपूर्वपदानीति किम्? "ऋक्सामयोरित्यृक् सामयोः शिल्पे"॥

( अ० भा० ) द्विवचनान्तानि स्वरान्तपूर्वपदानि द्वन्द्वसमासपदानि नावगृह्यन्ते। समासेऽवग्रह इत्यस्यापवादः। यथा—अयं वां मित्रावरुणा। इन्द्राग्नो इतीन्द्राग्नी। इन्द्रवायू इतीन्द्रवायू। इन्द्राबृहस्पती इतीन्द्राबृहस्पती। अग्नीषोमयोः। द्वन्द्वानीति किम्? मणिवाला इति मणिवालाः। अत्र मणिवत् वालः यस्येति मणिवाल इति बहुव्रीहिः। स्वरान्तपूर्वपदानीति किम्? ऋक्सामयोर्ऋत्यृक्सामयोः शिल्पे इति शिल्पे। अत्र पूर्वपदं हलन्तम्॥

तद्धिते चैकाक्षरवृद्धावनिहिते॥ २९॥

( उ० भा० ) समासादुत्तरकालं तद्धिते उत्पन्नेऽवग्रहो न भवति यत्र तद्धितजनितैवैकाक्षरे पूर्वपदे वृद्धिर्भवति। यदि च तत्पूर्वपदेन सह अनिहितं भवति अव्यवहितं भवति। यदि पूर्वपदवृद्ध्या उत्तरपदमव्यवहितं भवतीत्यर्थः। यथा—"त्रैष्टुभेन छन्दसा"। "मे भागः सौभा-

भ्यम् पसः"। तद्धित इति किम्? "गायत्री त्रिष्टुप् त्रिस्तुबिति त्रि स्तुप्"। "सुभगेति सु भग"। एकाक्षरवृद्धाविति किम्? मधुः। प्राजापत्य इति प्राजा पत्य"। अनिहित इति किम्? "साम्राज्य-मिति साम् राज्यम्" अत्र पूर्वपदोत्तरपदयोर्व्यञ्जनेन व्यवधानं कृतम् ॥

(अ० भा०) समासानन्तरं तद्धितोत्पत्तौ नावगृह्यते यदि तत्रैकाक्षरे पूर्वपदे वृद्धिर्भवति । यदि च तद्वृद्धिस्वरूपमुत्तरपदेन सहानिहितं अव्यवहितं भवति तदेत्यर्थः । यथा—त्रैष्टुभेन त्रैस्तुभेनेति त्रैस्तुभेन छन्दसा अङ्गिरस्वत् । तथा भगः सौभाग्यम् पसः । अत्र त्रयाणाम् । स्तुप् सम्बन्धि त्रैष्टुभमिति तद्धितप्रत्ययोत्पत्तिः । शोभनश्चासौ भगश्च इति पूर्वं समासः । तथा सुभगस्य भावः सौभाग्यमिति तद्धितोत्पत्तिरिति विवेकः । तद्धिते किम्? गायत्री त्रिष्टुप् त्रिस्तुबिति त्रि स्तुप् । सुभगेति सु भग भद्रः अध्वरः । एकाक्षरवृद्धौ किम्? प्राजापत्य इति प्राजा पत्यः चरुः । अनिहितमिति किम्? साम्राज्यमिति साम् राज्यम् गच्छतात् । आनुस्तुभमित्यानु स्तुभम् छन्दः । अत्र पूर्वोत्तरपदयोः व्यञ्जनेन व्यवधानं कृतम् ॥

## अञ्चतिसहत्योः कृल्लोपे ॥ ३० ॥

(उ० भा०) अञ्चतेर्धातोः सहतेश्च कृत्प्रत्ययलोपे सति अवग्रहो न भवति । अञ्चतेर्न भवति यथा—"प्राङ्"। "प्रत्यङ्"। सहतेः खल्वपि यथा—"ऋतधामा दुश्च्यवनः पृतनाषाट्"। अञ्चति सहत्योरिति किम्? "सुकृदिति सु कृत् देवः सविता"। कृल्लोप इति किम्? "आच्येत्या अच्य जानु"। "पृतनासा-ह्यायेति पृतना सह्याय" ॥

(अ० भा०) अञ्चतेर्धातोः सहतेश्च कृत्प्रत्ययलोपे नावग्रहः स्यात् । यथा—प्राङ् सोमः । प्रत्यङ् सोमः । ऋताषाट् । ऋतधामा दुश्च्यवनः । पृतनाषाट् अयुध्यः । अत्र कृत्प्रत्ययस्य लोपात् । समासेऽवग्रह इत्यस्याप-वादः । प्रकर्षेण अञ्चतीति प्राङ् इति कुगतिप्रादय इति समासश्च । अञ्चति-

सहत्योः किम्? सुकृदिति सुकृत् देवः। कृल्लोपे किम्? आच्येत्या अच्य जानु। पृतनाषाह्याय पृतनासाह्यायेति पृतना साह्याय च। अत्र प्रथमोदाहरणे क्त्वाल्युटि श्रवणात् न कृल्लोपः। अतः समासे नञ्पूर्वे इति समासत्वादवग्रहः। द्वितीयोदाहरणेऽपि ऋहलोर्ण्यत् इति ण्यत्प्रत्ययश्रवणात न कृल्लोपः। पृतना सहते। समासत्वात् अवग्रह इति भावः॥

अनुरुसुभ्याम् ॥ ३१ ॥

(उ० भा०) उरु सु इत्येताभ्यां परयोरञ्चतिसहत्योः कृल्लोपे सत्यवग्रहो भवति। यथा—"उरुव्यञ्चमित्युरु व्यञ्चम् अश्रेत्"। "सुरुच इति सु रुचः वेनः आव"। "सुप्राङिति सु प्राङ् अजः"। अधस्तनयोगस्यापवादः॥

(अ० भा०) उरु सु इत्येताभ्यामुभाभ्यां परयोरञ्चतिसहत्योः कृल्लोपे सति नावग्रहनिषेधः स्यात्। पूर्वापवादोऽयम्। ऊरुव्यञ्चमिति उरु व्यञ्चम् अश्रेत्। सुसहमिति सु सहम्॥

समिदाभ्याँ वत्सरः ॥ ३२ ॥

(उ० भा०) सम् इदा एताभ्यां परो वत्सरशब्दो नावगृह्यते। यथा—"संवत्सरः असि इदावत्सरः"। समिदाभ्यामिति किम्? "परिवत्सर इति परि वत्सरः। इद्वत्सर इतीत् वत्सरः"॥

(अ० भा०) सम् इत् शब्दाभ्यां परः वत्सरशब्दो नावगृह्यते। यथा—संवत्सरः असि। इदावत्सरः। आभ्यां किम्? परिवत्सर इति परि वत्सरः। इद्वत्सर इतीत् वत्सरः॥

प्राग्निभ्यामनिन्धौ प्रश्लेषे ॥ ३३ ॥

(उ० भा०) प्र अग्नि इत्येताभ्यां प्रश्लिष्टसन्धाववग्रहो न भवति इन्धि दीप्तौ इत्यमुं धातुं वर्जयित्वा। प्रशब्दाद्भवति यथा—

"प्राणः"। अग्निशब्दाद्भवति यथा—"आग्नी३म् यत् सरस्वति"। प्राग्निभ्यामिति किम्? "वीध्यायेति वि ईध्याय"। अनिन्धाविति किम्? "प्रेद्ध इति प्र इद्धः"। प्रश्लेष इति किम्? "प्रायणाय प्रायनायेति प्र अयनाय"॥

(अ० भा०) प्राग्निभ्यां शब्दस्य प्रश्लिष्टसन्धौ नावग्रहः इन्धी दीप्ताविति धातुरूपं वर्जयित्वा। यथा— प्राणः। प्रकर्षेण अनतीति विग्रहः। आग्नीध्रम् यत् सरस्वति। आभ्यां किम्? अपान इत्यप आनः। व्यान इति वि आनः। वीध्यायेति वि ईध्याय। परकीयम्। अनिन्धौ किम्? प्रेद्ध इति प्र इद्धः। प्रश्लेषे किम्? प्रायनायेति प्र अयनाय॥

पाङ्त्रानुद्द्रोऽब्भ्राय संशयात्॥ ३४॥

(उ० भा०) पाङ्त्रान् उद्रः अब्भ्राय एतानि पदानि संशयान्नाव-गृह्यन्ते। पक्तेः पूर्वपदं त्रायतेरुत्तरपदं पातेर्वा पूर्वपदं तनोतेरुत्तरपदम्। तथा उद्द्रः उत् ऊर्ध्वं द्रवतीति उद्रः उत्शब्दः पूर्वपदं द्रवतेरुत्तरपदम्। तथा अब्भ्रशब्दः आपो बिभर्ति धारयतीत्यभ्रः अप्शब्दः पूर्वपदं बिभर्तेरुत्तरपदम्। यद्वा अभ्रवभ्रमभ्र चरगत्यर्थाः इत्य-भ्रतेरेवाभ्रम्। एवमेतानि पदानि पूर्वोत्तरपदसंशयान्नावगृह्यन्ते। हेतुवचना-दन्यत्रापि यत्र संशयस्तत्रावग्रहो न भवति। यथा—"अन्तरिक्षाय पाङ्त्रान्"। "अपामुद्द्रो मासाम्"। "अब्भ्राय स्वाहा" एतान्युदाहरणानि पदसंहिताया अन्यान्यपि यथासम्भवमूह्यानि चेति॥

(अ० भा०) संशयादेतानि नावगृह्यन्ते। संशयश्च उक्थपङ्क्तेः पूर्व-पदम् त्रायतेरुत्तरपदम्। पातेर्वा पूर्वपदम्। तरतेरुत्तरपदम्। पाङ्क्तानि-त्यत्र तथा। उद्द्र इत्यत्र ऊर्ध्वं द्रवतीति ऊर्ध्वशब्दात् पूर्वपदं यद्वा उत् रातीति उत्पूर्वं पदं रातेः उत्तरं पदम्। तथा अभ्र इत्यत्र अपो विभर्त्तीति अप्शब्दात् पूर्व-पदम्। बिभर्तेरुत्तरपदम्। यद्वा अभ्र बभ्र मभ्र चर एते गत्यर्था इत्यनेन अभ्रशब्द इति। यथा—अन्तरिक्षाय पाङ्त्रान। अपामुद्रः। अभ्राय स्वाहा। संशया-

दिति हेतुवचनात् अन्यत्रापि यत्र संशयः पूर्वोत्तरपदयोस्तत्रापि नावग्रहः। यथा— विष्वक्। उल्काः। इत्यादि॥

जनयत्या ओषधयो वृषायिषत च नास्मभ्य मजावयो वल-
गम्॥ ३५॥

(उ० भा०) एतानि पदानि नावगृह्यन्ते। यथा—"जनयत्यै त्वा"। ओषधयः प्रति मोदध्वम्"। "आ वृषायिषते"। "नही तेषाम् अमा चन" "कदा चन स्तरीः असि" "पावकः अस्मभ्यम्। शिवः। भव"। "ह्रस्वव्यञ्जनाभ्यां भकारादौ विभक्तिप्रत्यये" इत्यस्यापवादः। अजावयो यथा—"उपहूता इत्युप हूताः अजावयः"। "समासेऽवग्रहः" इत्यस्यापवादः। वलगं यथा—"इदमहन्तं वलगमुत्किरामि"।

(अ० भा०) एतान्यष्टौ पदानि नावगृह्यते। यथा—जनयत्यै त्वा ओषधयः प्रति। अत्र जनानां यतिः जनयतिः। ओषं दधतीत्योषधयः इति समासत्वेन प्राप्तापवादः। वृषायिषत। अत्र धात्वर्थे यकारः इति प्राप्तापवादः। नहि तेषाम् अमा चन। अत्र समासत्वेन प्राप्तिः। पावकः अस्मभ्यम् शिवः भव। अत्र ह्रस्वव्यञ्जनाभ्यां भकारादाविति प्राप्तिः। अजाश्चावयश्चेति अजावयः। उपहूता अजावय। वलं गच्छतीति वलगम्। इदम् अहम् तम् वलगम् उत् वपामि। अत्र समासात् प्राप्तिः॥

समानोऽनश्वमेधे॥ ३६॥

(उ० भा०) समानशब्दोऽश्वमेधमन्त्रमुक्त्वान्यत्र नावगृह्यते। यथा—"यमे समानः यमसमानः"। अनश्वमेध इति किम्? "समानो यज्ञेन कल्पतां स्वाहा। समान इति सम् आनः एकस्मै द्वाभ्याम्"॥

(अ० भा०) समानशब्दो नावगृह्यते। अश्वमेधमन्त्रान् वर्जयित्वा। यथा—यं नस्समानः। ये समानाः। सम्यक् अनतीति समानः इति समासत्वात् प्राप्तिः। अनश्वमेधे किम्? समानो यज्ञेन कल्पताम् स्वाहा। समान इति सं आनः चक्षुः॥

वायुरसजातः समुद्रमहोरात्रे विश्वानरो विश्वाहाग्रयणोऽसपत्क्ना गोधा गोधूमा आशुशुक्षणिर्न्यग्रोधः पुरोडाशः प्रावणेभिरशितम तस्करा मस्मसाश्वत्थ उपस्तिर्मा किर्विश्वामित्रो गोपाम्प्रउगमङ्गानि कक्षीवन्तमदधात् पवीरवन्नीहारेण प्रावृता घनाघन ईदृङ् चान्यादृङ् शूघनासः कुयवं कुचरः प्रियङ्गवो निवारा एकादश षोडश चन्द्रमा आयुवो व्याघ्रोऽनड्वान् गविष्ठिरः कपर्दिने पुलस्तये निषङ्गिणे कुलालेभ्यः कर्मारेभ्यः पुञ्जिष्ठेभ्यो द्वीप्याय नीप्याय किंशिलायै लबूदाः शूकराय शूकृताय चराचरेभ्यः पारावतान् गोलत्तिकाखुरजगरो विपन्यवो दाक्षायणा आयुधं सुरामं बृहस्पतिर्वनस्पतिर्नराशंसः सुरभिर्नरिष्ठायै॥ ३७॥

(उ० भा०) वायुरित्यादीयि पदानि नावगृह्यन्ते। वायुर्यथा—"वायुः पूषा स्वस्तये"। असजातो यथा—"यमसजातो निचखान"। समुद्रं यथा—"समुद्रं गच्छ स्वाहा"। अहोरात्रे यथा—"अहोरात्रे पार्श्वे"। विश्वानरो यथा—"अर्चा विश्वानराय"। विश्वाहा यथा—"विश्वाहा शर्म यच्छतु"। आग्रयणो यथा—"आग्रयणोऽसि"। असपत्क्ना यथा—"असपत्क्नाः समनसस्करत्"। गोधा यथा—"गोधा कालका"। गोधूमा यथा—"गोधूमाश्च मे"। आशुशुक्षणिर्यथा—"त्वमाशुशुक्षणिः"। न्यग्रोधो यथा—"न्यग्रोधश्चमसैः"। पुरोडाशो यथा—"पचन् पुरोडाशान्"। प्रावणेभिर्यथा—"प्रावणेभिः

सजोषसः"। अशीतम यथा—"अग्नेऽदब्धायोऽशीतम"। तस्करा यथा—"तस्कराँ उत"। मसमसा यथा—"सर्वं सम्मसमसा कुरु"। अश्वत्थे यथा—"अश्वत्थे वो निषदनम्"। उपस्तिर्यथा—"उपस्तिरस्तु सोऽस्माकम्"। माकिर्यथा—"अग्ने माकिष्टे व्यथिः"। विश्वामित्रो यथा—"विश्वामित्र ऋषिः"। गोपां यथा—"गोपामृतस्य दीदिवम्"। प्रउगं यथा—"प्रउगमुक्थमव्यथायै"। अङ्गानि यथा—"अङ्गानि च मे"। कक्षीवन्तं यथा—"कक्षीवन्तं य औशिजः"। अदधाद्यथा—"अश्रद्धामनृतेऽदधात्"। पवीरवद्यथा—"लाङ्गलं पवीरवत्"। नीहारेण प्रावृता यथा—"नीहारेण प्रावृता"। द्वे पदे अनन्तर्हिते घनाघनाः यथा—"घनाघनः क्षोभणः"। "ईदृङ् चान्यादृङ्"। द्वे पदे। शूघनासः यथा—"सिन्धोरिव प्राध्वने शूघनासः"। कुयवं यथा—"कुयवश्च मे"। कुचरो यथा—"मृगो न भीमः कुचरो गिरिष्ठाः"। प्रियङ्गवो यथा—"प्रियङ्गवश्च मे"। नीवारा यथा—"नीवाराश्च मे"। एकादश यथा—"एकादश च मे"। चन्द्रमा यथा—"चन्द्रमा अप्सु"। आयुवो यथा—"आयुवो नाम"। व्याघ्रा यथा—"व्याघ्रा हेतिः"। अनड्वान् यथा—"अनड्वान धोरामौ"। ववििष्ठरी यथा—"गविष्ठिरो नमसा"। कपर्दिने पुलस्तये यथा—"नमः कपर्दिने च पुलस्तये"। द्वे पदे। निषङ्गिणे यथा—"निषङ्गिणे"। "कुलालेभ्यः कर्मारेभ्यः। द्वे पदे अनन्तर्हिते। यथा—"नमः कुलालेभ्यः कर्मारेभ्यः"। पुञ्जिष्टेभ्यो यथा—"पुञ्जिष्टेभ्यश्च"। द्वीप्याय यथा—"द्वीप्याय च"। नीप्याय यथा—"नीप्याय च"। किंशिलाय यथा—"किंशिलाय च"। ऐलबृदा यथा—"ऐलबृदा आयुर्युधः"। शूकराय शृकृताय यथा—"शूकराय स्वाहा शृकृताय"। चराचरेभ्यो यथा—"चराचरेभ्यः स्वाहा"। पारावतान् यथा—"अह्ने पारावतान्"। गोलत्तिका यथा—"गोलत्तिका तेऽप्सरसाम्"। आखुर्यथा—"आखुस्ते पशुः"। अजगरो यथा—"अजगरो वसूनाम्"। विपन्यवो यथा—"तद्विप्रासो विपन्यवः"। दाक्षायणा यथा—"यदाबध्नन्दाक्षायणाः"। आयुधं यथा—"परमे वृक्ष आयुधन्निधाय"।

सुरापं यथा—"यत्सुरापं व्यपिबः"। बृहस्पतिर्यथा—"बृहस्पते अति यत्"। वनस्पतिर्यथा—"वनस्पतिः शमिता देवः"। नराशंसो यथा—"नराशंसस्य महिमानम्"। सुरभिर्यथा—"य ईमादुः सुरभिः"। नरिष्ठायै यथा—"नरिष्ठायै भीमलम्"। यैश्च हेतुभिरेतानि पदानि नावगृह्यन्ते तान् हेतूनन्यपदव्य जेनाचिचिख्यासुराचार्यो वक्ष्यमाण-सूत्रैर्वक्ष्यति। येषु च पदेषु वक्ष्यमाणहेतवो न सन्ति ते जातिवचनाः प्रत्येतव्याः। यथा गोधूमपारावतादयः॥

(अ० भा०) वायुरित्यादिसप्ततिपदानि नावगृह्यन्ते। क्रमेणोदाहर-णानि—वायुः। अत्र वायुशब्दस्य संशयान्नावग्रहः। उक्तं हि यास्केन—अथातो मध्यमस्थानदेवतास्तासां वायुः प्रथमगामी भवति। वायुर्वातेः। वेतेर्वास्यात्। गतिकर्मणः। एतेरितिस्थौलाष्ठीविः। अनर्थ को वकारः। तस्यैषा भवति वायवायाहि दर्शत इति एवमन्यत्रापि। पूषा स्वस्तये नियुत्वान्। असजातः। यमसजातो निचखान। समुद्रं गच्छ स्वाहा। समुद्राय स्वाहा अहोरात्रे गच्छ स्वाहा। विश्वा-नरः सविता विश्वानराय। विश्वाभुवे। विश्वाहा। शर्म यच्छतु। आग्रयणः असि। असपत्नाः। समनसस्करत्। गोधाकालका। गोधूमाश्च मे। त्वम् आशुशुक्षणिः। न्यग्रोधः चमसैः पचन्। पुरोळाशान् पुरोळाशेन सविता पुरोळाशैः हवींषि। आ प्रावणेभिः प्रावणेभिरिति प्रावणेभिः। द्विरुक्तिरत्र विनाम इति सूत्रेण। अशीतम पाहि। तस्कराः वने सर्वम्। तं मस्मसा। अश्वत्थे वः उपस्तिः अस्तु। अग्ने माकिः ते। विश्वामित्रः ऋषिः। गोपाम् ऋतस्य। विष्णुः गोपाः प्रउगम्। उक्थम्। अङ्गानि चमे। कक्षीवन्तं यः अनृते अदधात्। लाङ्गलम् पवीरवत्। नीहारेण प्रावृताः। इदं पदं सन्निहितम्। घनाघनः क्षोभणः। ईदृङ्। अन्यादृङ्। एतद्द्वयमपि सन्निहितम्। शूघनासः वातप्रमीयः। कुयवश्चमे। कुचरः गिरिष्ठाः। प्रियङ्गवः प्रियङ्गवश्चमे। नीवाराः। गोधूमाः। एकादश। त्रयो-दशेति त्रयः दश। षोळश। विंशतिः। चन्द्रमाः। गन्धर्वः। आयुवः नाम। व्याघ्रः अनाधृष्टम्। व्याघ्राः हेतिः या व्याघ्रम्। अनड्वान् अनड्वांश्च मे अनड्वाहम् अन्वारभामहे गविष्ठिरः नमसा कपर्दिने नमः कपर्दिने पुलस्तिने च। इदं द्वयं सन्निहितम्। निषङ्गिणे नमो निषङ्गिणे। कुलालेभ्यः कर्मारेभ्यः। इदं पदद्वयमपि।

पुञ्जिष्ठेभ्यश्च वो नमः। द्वीप्याय नमो नादेयाय च द्वीप्याय च नीप्याय नमः काठ्याय च नीप्याय च नमः किंशिलाय च। ऐलबृदा आयुर्युधः। शूकराय स्वाहा शूकृताय स्वाहा। चराचरेभ्यः स्वाहा। अहने पारावतान् पूर्ववदग्रह उक्तः। अनवग्रहार्थोऽयमारम्भः। गोलत्तिका तेऽप्सरसाम्। आखुः ते पशुः अजगरः। वसूनाम्। विपन्यवो जागृवांसः। अबध्नं दाक्षायणाः। परमे वृक्षे आयुधम्। यत् सुरामम्। बृहस्पतिः। वाचे वनस्पतिः शमिता। नराशंसः प्रति नराशंसेन। तेजसा। नराशंसस्य महिमानम्। य ईमाहुस्सुरभिः। नरिष्ठायै भीमलम्। यैश्च हेतुभिः वाधुरादिपदानि नावगृह्यन्ते तान् हेतूनन्यपदव्याजेनाचिख्यासुराचार्यो वक्ष्यमाणैः सूत्रैः वक्ष्यति। येषु पदेषु वक्ष्यमाणहेतवः न सन्ति तानि जातिवचनानि प्रत्येतव्यानि। यथा—गोधूमा-नीवारप्रियङ्गवो पारावतादीनि ॥

उत्तम्भनादी संसायत् ॥ ३८ ॥

(उ० भा०) उत्तम्भनादीनि पदानि आदिसंशयान्नावगृह्यन्ते। यथा—"वरुणस्योत्तम्भनमसि"। "उत्थाय बृहती भव"। "उत्थिताय स्वाहा"। एतानि त्रीणि पदानि उदाहरणानि उत्पूर्वपदानि। स्तम्भे-त्युत्तरपदं प्रथममुदाहरणम्। तिष्ठत्युत्तरपदे उत्तरे। तत्र "उदः स्थास्तम्भ्वोः पूर्वस्य" इति सकारस्य पाणिनिः पूर्वरूपतां विदधाति। अन्ये तु सकारलोपं विदधति। अत उत्तरपदस्यादिसंशयादेतानि पदानि नावगृह्यन्ते। यथैतान्येवमन्यान्यपि द्रष्टव्यानि ॥

(अ० भा०) उत्तम्भनादीनि पदानि संशयान्नावगृह्यन्ते। तानि च बहुवचनात् त्रीणि भवन्ति। यथा—वरुणस्य उत्तम्भनम्। उत्थाय बृहती। उत्थिताय स्वाहा। आदिसंशयश्चेत्थम्—त्रीण्येतानि उत्पूर्वपदानि स्तम्भोत्तरपदं प्रथमोदाहरणम्। तिष्ठत्युत्तरपदद्वयम्। उदस्थास्तम्भोः पूर्वस्य इति सकारस्य पाणिनिः पूर्वरूपतां विदधाति, अन्येतु सकारलोपं मन्यन्ते। अत उत्तरपदस्य आदिसंशयान्नावगृह्यन्ते। उक्तान्युदाहरणानि।

विशौजा इत्यन्यायसमासात् ॥ ३९ ॥

(उ० भा०) विशौजा इत्येतत्पदमन्यायसमासान्नावगृह्यते । विद्दौजा इति प्राप्ते यथा विशौजाः । "इन्द्रोऽसि विशौजाः" ॥

(अ० भा०) इदमपि नावगृह्यते अन्यायसमासात् । अन्यायसमासश्च इत्थम्—विशौजा इति वक्तव्ये विशौजा इत्युक्तः । यथा—इन्द्रः विशौजाः ॥

दित्यौही तुर्यौही पष्ठौही हृदयौपशेनेति च ॥ ४० ॥

(उ० भा०) एतानि च पदान्यन्यायसमासान्नावगृह्यन्ते । अत्र च "उवर्ण ओकारम्" इति ओकारे प्राप्ते औकारोऽन्यायसमासजः ॥

(अ० भा०) चत्वार्येतानि नावगृह्यन्तेऽन्यायसमासात् । अत्र अकार उकारे ओकारमित्योकारे प्राप्ते औकारोक्तिरन्यायसमासः । यथा—दित्यवाट् दित्यौही तुर्यौही पष्ठौही हृदयौपशेन अन्तरिक्षम् ॥

दुष्टरो विष्टरो विष्टपो विष्टम्भो विष्टम्भनीम् ॥ ४१ ॥

(उ० भा०) दुष्टर इत्यादीनि पदानि नावगृह्यन्ते । अत्राचार्येण कारणं नोपन्यस्तम् । तत्र तावत् दुष्टरपदं धातुसंशयान्नावगृह्यते । दुरुपसर्गः पूर्वपदं तरतेस्तृणातेर्वोत्तरपदम् अतो धातुसंशयान्नावगृह्यते । विष्टरादीनि तु अन्यायषत्वसंहितानि । अतः षत्वागमोऽपि पदकारैर्न कृतः ॥

(अ० भा०) पञ्चैतानि नावगृह्यन्ते उक्तहेतोरेव । तत्र तावत् दुष्टरपदं धातुसंशयान्नावगृह्यते दुरुपसर्गः पूर्वपदं तरतेस्तृणातेर्वोत्तरपदम् । अतः धातुसन्देहान्नावग्रहः । विष्टरादीनि अन्यायषत्वसंहितानि । अतो षत्वावगमोऽपि पदकारैर्न कृतः । यथादुष्टरः दुस्तर इति दुस्तरः । तरन् ब्रध्नस्य विष्टपम् । विष्टम्भोऽधिपतिः । धात्रीं विष्टम्भनीमदिशम् ॥

ऊवध्यमुगणाउखइष्कृतिरिष्कर्त्तारमुदरमित्युपसर्गैकदेशलोपात् ॥ ४२ ॥

(उ० भा०) एतानि पदान्युपसर्गैकदेशलोपान्नावगृह्यन्ते। तत्र इष्कृतिः इष्कर्तारं इत्यनयोः पदयोर्निरुपसर्गस्य नकारलोपान्नावग्रहः। शेषाणामुद उपसर्गस्यान्त्यवर्णलोपान्नावग्रहः। ऊवध्यं यथा—"ऊवध्यं वातं सब्वन्तदारात्"। उगणा यथा—"नम उगणाभ्यः"। उखे यथा—"अभीन्धतामुखे"। इष्कृतिर्यथा—"इष्कृतिर्नाम वः"। इष्कर्त्तारं यथा—"इष्कर्त्तारमध्वरस्य"। उदरं यथा—"पृष्टीर्मे राष्ट्रमुदरम्"॥

(अ० भा०) षडेतानि पदानि नावगृह्यन्ते उपसर्गैकदेशलोपात्। तत्र इष्कृतिरिष्कर्त्तारमित्यनयोः पदयोर्निरुपसर्गस्य नकारलोपः। शेषाणामुदुपसर्गस्यान्तलोपः। यथा—ऊवध्यम् वातम् सब्वम्। नम उगणाभ्यः। अङ्गिरस्वदभीन्धतामुखे। इष्कृतिर्नाम वः। इष्कर्त्तारमध्वरस्य। पृष्टीर्मे राष्ट्रमुदरम्। अत्र समासत्वेन प्राप्तिः॥

सँस्कृतं सँस्कृतिर्माँस्पचन्या पुंश्चलूमित्यनुनासिकोपधत्वात् ॥४३॥

(उ० भा०) एतानि पदानि अनुनासिकोपधत्वान्नावगृह्यन्ते। अत्र च "शञ्चे पकारादुकारोदयात्" इत्यादिभिः सूत्रैरुपधानुनासिकत्वमुक्तम्। पक्षे चानुस्वारः। अतो वाजसनेयिनामुपधानुनासिकत्वान्नावग्रहः। काण्वानां तु वक्ष्यमाणसूत्रेण। संस्कृतं यथा—"तन्नौ संस्कृतम्"। संस्कृतिर्यथा—"सा प्रथमा संस्कृतिः"। मांस्पचन्या यथा—"मांस्पचन्या उखायाः"। पुँश्चलूं यथा—"नर्माय पुंश्चलूं हसाय"॥

(अ० भा०) चत्वार्येतानि नावगृह्यन्ते अनुनासिकोपधत्वात्। स चेत्थम्—शंचे पकारादुकारोदयादित्यादिसूत्रैः उपधानुनासिकत्वमुक्त्वा पक्षे चानुस्वारोऽभिहितः। अन्ते माध्यन्दिनानां उपधानुनासिकत्वान्नावगृह्यते यथा—

तन्नौ संस्कृतत्। सा प्रथमा संस्कृतिः। मन्नीक्षणं मांस्पचन्याः। नर्माय पुंश्चलम्। अत्र काण्वानां पक्षमाह—

अनुस्वारागमत्वादित्येके ॥ ४४ ॥

(उ० भा०) अनुस्वारागमत्वाद्धेतोरेवैक आचार्या एतान्येव पदानि नावगृण्हन्ति। संस्कृतम्। संस्कृतिः। मांस्पचन्याः। पुंश्चलम्। काण्वादीनामयं पाठो बोध्यः॥

(अ० भा०) अत्रानुस्वारागमत्वाद्धेतोः एतानि नावगृह्यन्त इति एके आचार्या आहुः। एकशब्दोऽत्र मुख्यवचनः। तथैव काण्वपाठात्। उक्तपूर्वोदाहरणान्येव॥

परीत्तोऽवत्तानां सुविताय सग्धिरिति ॥ ४५ ॥

(उ० भा०) एतानि पदानि यथायोगं कारणैर्नावगृह्यन्ते। तत्र तावत्परीत्तः अवत्तानां सग्धिः एतानि धात्वेकदेशलोपान्नावगृह्यन्ते। सुवितायेत्येतत्पदं सु इताय सुगताय वा गृह्यते सुताय प्रजायै वा। इति धातुसंशयान्नावगृह्यते। यथा—"श्येने परीत्तो अजरत्"। "अङ्गादङ्गादवत्तानाम्"। "अग्निः सुदक्षः सुविताय"। "सग्धिश्च मे सपीतिश्च मे"। इतिशब्दोऽन्यपदप्रदर्शनार्थः। यथैतानि पदानि एतैर्हेतुभिर्नावगृह्यन्ते एवमन्यान्यपि द्रष्टव्यानि। तथाचोक्तम्—

"आदिमध्यान्तलुप्तानि समासन्यायभाञ्जि च।
नावगृण्हन्ति कवयः पदान्यागमवन्ति च"॥

(अ० भा०) चत्वार्येतानि नावगृह्यन्ते उक्तहेतुभ्यः। तत्र तावत् परीतः अवत्तानाम् सग्धिरिति त्रीणि धात्वेकदेशलोपान्नावगृह्यन्ते। परीत इत्यत्र परेर्दीर्घोदाहरणार्थं धाण्धातोः ध्वनिरिति हेतोर्लोपः। अवत्तानामित्यत्र खण्डनार्थं धातोरोकारलोपः। सग्धिरित्यत्र अहो। क्सग्धिस्तिलपगितीत्यगोधातोः जाड्यदेशे

सुवितायेति पदं तु सुइताय सुगताय सुप्रजायै वा इति धातुसंशयान्नावगृह्यते। यथा—श्येने परीतो अचरत्। अन्नादन्नादवत्तानाम्। अग्निः सुदक्षः सुविताय। सग्धिश्च मे। परीत इति पदस्य अवत्तादिपदसाहचर्यात् समस्तस्यैवात्र ग्रहणं न तु व्यस्तस्य तस्या प्राप्त्यभावादेव। यथा—परि इतः सिञ्चत सुतम्। केचित्तु परीतो अचरदवत्तानामिति सूत्रं पठन्ति। तदा न काचिदनुपपत्तिः। इतिशब्द एवं जातीयकान्युदाहरणानि प्रदर्शितार्थानि। तथाचोक्तम्—

आदिमध्यान्तलुप्तानि समासन्यायभाञ्जि च।
नावगृण्हन्ति कवयः पदान्यागमवन्ति च॥

**वृद्धं वृद्धिः॥ ४६॥**

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे
पञ्चमोऽध्यायः॥

(उ० भा०) इत्युक्तार्थम्॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये
प्रातिशाख्यभाष्ये पञ्चमोऽध्यायः॥

(अ० भा०) इति गतार्थः। हरिः ओम्॥

श्रीमदनन्तभट्टेन विरचिते कात्यायनप्रणीतप्रातिशाख्यभाष्ये
पदार्थप्रकाशिके पञ्चमाध्यायः समाप्तः॥

## अथ षष्ठोऽध्यायः ॥

अधुना षष्ठाध्याये आख्यातस्वरोऽभिधीयते। तत्र आमन्त्रितस्वरातिदेशपूर्वकं सूत्रमाह—

### अनुदात्तमाख्यातमामन्त्रितवत् ॥ १ ॥

(उ० भा०) "स्वरितवर्जमेकोदात्तं पदम्" इत्यत्र नामाख्यातोपसर्गनिपातानां सामान्येन स्वरोऽभिहितः। यथा—"नो नौ मे मदर्थे" इत्यादिभिर्नाम्नां विशेषस्वरोऽभिहितः। यथा—"वा च कमु चित्" इत्यादिसूत्रेण निपातानां च विशेषस्वरोऽभिहितः। तथा नामाख्यातोपसर्गाणां विशेषस्वरोऽभिहितः। अतस्तत्प्रतिपादनार्थमाह—"अनुदात्तमाख्यातमामन्त्रि" इति। आमन्त्रितपदवदनुदात्तमाख्यातं पदं भवति। यैरेव कारणैरनुदात्तमामन्त्रितं भवति तैरेव कारणैराख्यातमपीत्यर्थः। "पदपूर्वमामन्त्रितमनानार्थेऽपादादौ" इत्यामन्त्रितस्यानुदात्तत्वमुक्तम् इहापि तथैव भवति। एतदुक्तं भवति—पूर्वपदमाख्यातमनुदात्तं भवति तच्च नानार्थे न भवति। अपादादौ च भवति पदपूर्वं भवति। तद्यथा—"मा वस्तेन ईशत"। "गोपतौ स्यात्"। अनानार्थ इति किम्? "पाहि यज्ञं पाहि यज्ञपतिम्"। अपादादाविति किम्? ऋद्ध्यामात ओहैः"। "सुषाव सोममद्रिभिः"॥

(अ० भा०) आख्यातपदमामन्त्रितवत् अनुदात्तं स्यात्। एतदुक्तं भवति—पदपूर्वमामन्त्रितमनानार्थेऽपदादाविति उक्तत्वात्। तथैव पदपूर्वमाख्यातमनुदात्तं भवति अपदादौ च वर्त्तमानं च भवति। यथा—ईशत मावस्तेन ईशत गोपतौ स्यात्। वयँस्याम। अग्ना अग्निश्चरति। इत्यादि अनानार्थे किम्? पाहि यज्ञं पाहि यज्ञपतिम्। इदमाख्यातं नानार्थकं अत्रपातेर्नानार्थकत्वात्। अपादादौ किम्? ऋध्यामा त ओहैः। सुषाव सोममँद्रिभिः।

पदपूर्वे किम्? मन्ये त्वा जातवेदसम्। पूर्वे स्वरितवर्जे एकोदात्तं पदमित्यादिना नाम्नां निपातानां च विशेषस्वरोऽभिहितः न त्वाख्यातोपसर्गाणाम्। अतः तत्प्रतिपादनार्थे अध्यायारम्भ इत्यवधेयम् ॥

उपसर्ग उपसर्गे ॥ २ ॥

(उ० भा०) उपसर्गोऽनुदात्तो भवति उपसर्गे प्रत्यये। एतच्च समासपद एव द्रष्टव्यम्। यथा—"सम्प्रच्यवध्वम्"। "सम्प्रयाताग्ने पथः"। अत्र समुपसर्ग उपसर्गेऽनुदात्तः। उपसर्ग इति किम्? "प्रयतिः प्रसितिः"॥

(अ० भा०) परोपेत्युपसर्गसंज्ञां वक्ष्यति। उपसर्गोऽनुदात्तः स्यात् उपसर्गे परे। एतच्च पदसमासे द्रष्टव्यम्। यथा—सम्प्रच्यवध्वम्। सम्प्रयाता। उपसर्गे किम्? समिद्धो अञ्जन् प्रयतिः प्रसिद्धिः॥

आम्रेडिते चोत्तरः ॥ ३ ॥

(उ० भा०) आम्रेडिते च पदे उत्तर उपसर्गोनुदात्तो भवति। यथा—"सँसमिति सम् सम्"। "उपोपेत्युप उप"। अधस्तनयोगापवादः॥

(अ० भा०) आम्रेडिते उपसर्गोऽनुदात्तः स्यात्। न पूर्वः। अधस्तनापवादोऽयम्। यथा—सँसमित्। उपोपेन्नु। प्रप्रायमग्निः॥

कृदाख्यातयोश्चोदात्तयोः ॥ ४ ॥

(उ० भा०) उदात्ते कृत्प्रत्यये चाख्याते परभूते उपसर्गोऽनुदात्तो भवति। कृति भवति यथा—"स्वं आ भरन्तः"। "विभ्राजमानः सरिरस्य मध्ये"। आख्याते भवति यथा—"ये चार्वते पचनं सम्भरन्ति"। "यद्वध्यमुदरस्यापवाति"। कृदाख्यातयोरिति किम्?

"अनुगावोऽनु भगं कनीनम्"। उदात्तयोरिति किम्? "प्रयतिः। प्रसितिः"। "शिवाँ शग्माम्परि दधे"। यत्र चानुदात्तत्वमुपसर्गस्य न भवति तत्र पृथक्पदत्वमपि भवति। "स्वरितवर्जमेकोदात्तं पदम्" इति परिभाषितत्वात् ॥

(अ० भा०) उपसर्गोऽनुदात्तः स्यात्। उदात्तवति कृदन्ते च परे उदात्तवति आख्याते च परे। यथा—स्वः आरभन्तः। विभ्राजमानः सरिरस्य मध्ये। प्रतिपदसि। अनुपदसि। सम्पदसि। विवृदसि। संवृदसि। सवृते प्रयुतं द्वेषः। प्रवृत्तस्तेजः। संभरन्ति। ये चार्वते पचनं संभरन्ति। अपवाति। यद्रूवध्यमुदरस्यापवाति। यतो यतस्समीहसे। कृदाख्यातयोः किम्? अनु गावः। अनु भगः। उदात्तयोरिति किम्? प्रयतिः प्रसितिः। शिवाम् शग्माम् परि दधे। यत्र चानुदात्तत्वं उपसर्गस्य न भवति तत्र पृथक्पदत्वमपि भवति। यथा—परि दधे। इत्यादि। स्वरितवर्जमेकोदात्तं पदं इति परिभाषितत्वात् ॥

## नाभ्येकाक्षरश्च स्वरसन्धेयेऽकृति ॥ ५ ॥

(उ० भा०) अभ्युपसर्ग एकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गे स्वरसन्धेये चाकृति प्रत्यये नानुदात्तो भवति। अभेः स्वरात्मके भवति यथा—"अभि आ वर्त्तस्व"। अभेः स्वरसन्धेये अकृति भवति यथा—"याभिः मित्रावरुणौ अभि असिञ्चन्"। "अभि ऐक्षेताम् मनसा"। एकाक्षरस्य स्वरात्मके भवति यथा—"वि आ अकरोत्"। "नि असीदत्"। एकाक्षरस्य स्वरसन्धेयेऽकृति भवति यथा—"सत्यधर्मा वि आनट्"। "यत् पुरुषम् वि अदधुः। अधस्तनयोगापवादः ॥

(अ० भा०) अभ्युपसर्ग एकाक्षरश्चोपसर्गः स्वरात्मके उपसर्गे स्वरन्धेपये च अकृति प्रत्यये उदात्ते अनुदात्तो न स्यात्। उपसर्ग उपसर्गे इत्यस्यासवादः। उभे स्वरात्मके यथा—अभि आ दधामि। अभि आ

र्धस्व । स्वरसन्धेये अकृति प्रत्यये यथा—याभिर्मित्रावरुणा अभिव असिञ्चन् । अभि । ऐक्षेताम् । एकाक्षरस्य स्वरात्मके यथा—वि आ अकरोत् । वि असीदत् पिता । एकाक्षरस्य स्वरसन्धेये यथा—सत्यधर्मा व्यानट् । यत्पुरुषं व्यदधुः ॥

आ पूतजातयोः ॥ ६ ॥

(उ० भा०) आ इत्ययमुपसर्गः पूतजातयोः प्रत्यययोर्नानुदात्तो भवति । यथा—"आ पूतः एमि"। "आ जातो विश्वा"॥

(अ० भा०) आ इत्युपसर्गः पूतजातयोः शब्दयोः परयोः नानुदात्तः स्यात् । यथा—शुचिः आ पूतः एमि । आ जातः विश्वा । कृदाख्यातयोरित्यस्यापवादः ॥

अधि नि प्र प्रति श्रितात्रिणभानवपचतेषु ॥ ७ ॥

(उ० भा०) अधि नि प्र प्रति एते उपसर्गाः श्रित अत्रिण भानव पचत एषु प्रत्ययेषु नानुदात्तो भवति । अधि यथा—"अधि श्रिताः"। नि यथा—"विश्वं न्यत्रिणम्"। प्र यथा—"प्रभानवः"। प्रति यथा—प्रति पचता गृभीषत"॥

(अ० भा०) अधि नि प्र प्रति एते उपसर्गाः श्रिताः अत्रिणि भानवः पचत क्रमेण एषु परेषु नानुदात्ता स्युः । यस्मिन् लोका अधिश्रिताः । यासद्विश्वं न्यत्रिणम् । प्रभानवस्सिस्रते । एष्विति किम्? अधिषवणे इत्यत्र न ।

उज्जेषमावर्त्ते आपनीफणत्सनिष्यदत्सँवतं प्रयाणँ सञ्चरन्तं सँरभध्वं प्रसितिँ विक्रमस्वेत्येतेष्वनु ॥ ८ ॥

(उ० भा०) उज्जेषं आवर्त्ते आपनीफणत् सनिष्यदत् सँवतं प्रयाणं सञ्चरन्तं सँरभध्वं प्रसितिं विक्रमस्व एतेषु प्रत्ययेषु अन्वित्यय

मुपसर्गो नानुदात्तो भवति । उज्जेषं यथा—"अग्नीषोमयोरुज्जितिमनूज्जेषम्"। आवर्त्ते यथा—"सूर्यस्यावृतमन्वावर्ते"। आपनीफणद्यथा—"पथामङ्क्षांस्यन्वापनीफणत्"। सनिष्यदद्यथा—"अनुसँसनिष्यदत्"। सँवतं यथा—"वरिष्ठामनु सँवतम्"। प्रयाणं यथा—"अनु प्रयाणमुषसो विराजति"। सञ्चरन्तं यथा—"समानँ योनिमनु सञ्चरन्तम्"। सँरभध्वं यथा —"इन्द्रं सखायोऽनु सँरभध्वम्"। प्रसितिं यथा—"तृष्वीमनु प्रसितिं द्रूणानः"। विक्रमस्व याथा "पृथिवीमनु विक्रमस्व"॥

(अ० भा०) अनु इत्युपसर्गः उज्जेषमित्यादिदशसु परेषु नानुदात्तः। यथा—अग्नीषोमयोरुज्जितिमनूज्जेषम्। सूर्यस्यावृतमन्वावर्ते। अङ्क्षांस्यन्वापनीफणत्। अनुसंसनिष्यदत्। परेषामिदम्। वरिष्ठामनुसंवतम्। अनुप्रयाणमुषसो विराजति। योनिमनु सञ्चरन्तम्। सखायो अनुसंभरध्वम्। त्रिष्वीमनुप्रसितिं द्रूणानः। पृथिवीमनु विक्रमस्व॥

ओप प्रोदात्ते ॥ ९ ॥

(उ० भा०) आ उप एतौ प्रोपसर्गे उदात्ते प्रत्यये नानुदात्तौ भवतः। आ यथा—"आ प्रयातु परावतात्"। "आ प्रयच्छ दक्षिणात्"। उप यथा—"उप प्रयाहि"। "उप प्रागाच्छसनम्"॥

(अ० भा०) आ उप एतौ उदात्ते उपसर्गे परे अनुदात्तौ न स्तः। यथा—आ प्रयातु परावतः। आप्रयच्छ दक्षिणात्। उपप्रयाहि। उपप्रागात्॥

अभिप्रेह्युपसम्प्रयातप्रत्यातनुष्वासुषाव ॥ १० ॥

(उ० भा०) अभि प्रेहि उपसम्प्रयात प्रत्यातनुष्व आसुषाव एते चोपसर्गा यथागृहीता नानुदात्ता भवन्ति। यथा—"अभिप्रेहि निर्दह"। "उपसम्प्रयाताग्ने पथः"। "उदग्ने तिष्ठ प्रत्यातनुष्व"। "आसुषाव सोममद्रिभिः"॥

(अ० भा०) अभिप्रेहीत्यादयः चत्वारः यथोक्ता नानुदात्तो स्युः। यथा—अभिप्रेहि निर्दह। उपसम्प्रयाताग्ने। उदग्ने तिष्ठ प्रत्यातनुष्व। अन्तरा सुषाव सोममद्रिभिः। उपसर्गे उपसर्गे इति प्राप्तस्यापवादः॥

प्रकृत्याख्यातमाख्यातपूर्वम्॥ ११॥

(उ० भा०) यदुक्तं "अनुदात्तमाख्यातमामन्त्रितवत्" इति तस्यायमपवादः। आख्यातपूर्वमाख्यातं प्रकृतिस्वरं भवति। उदात्तपूर्वं भवति यथा—"पिबन्तु। मदन्तु। व्यन्तु"॥

(अ० भा०) यदुक्तमनुदात्तमाख्यातमामन्त्रितवदिति तस्यायमपवादः। आख्यातपूर्वं आख्यातं प्रकृतिस्वरं स्यात्। यथा—पिबन्तु। मदन्तु॥

उदात्ताच्चामन्त्रितादनन्तरम्॥ १२॥

(उ० भा०) उदात्तस्वराच्चामन्त्रितपदादनन्तरमाख्यातं पदं प्रकृतिस्वरं भवति। यथा—"अग्ने पवस्व"। "होतर्यज"॥

(अ० भा०) उदात्तस्वरात् आमन्त्रितपदात् अनन्तरमाख्यातं प्रकृत्या स्यात्। यथा—अग्ने पवस्व। अग्ने नय। होतर्यज। उदात्तात् किम्? पयस्वानग्ने। आ अगमम्। आमन्त्रितात् किम्? शिवो भवा वरूथ्यः॥

एकान्तरादपि॥ १३॥

(उ० भा०) एकेन पदेन व्यवहितादप्यामन्त्रितपदात् परमाख्यातं प्रकृतिस्वरं भवति। यथा—"ब्रह्मन्नश्वम्भन्त्स्यामि।" "देवाः सधस्थाः विद रूपम् अस्य"। अपिशब्देन विकल्पो ज्ञेयः। क्वचिद्भवति क्वाचिन्न भवति। यथा—"इडे आ इहि"॥

(अ० भा०) एकेन पदेन व्यवहितात् अप्यामन्त्रितपदात् परमाख्यातं प्रकृत्या स्यात्। यथा—ब्रह्मन् अश्वम् भन्त्यामि देवाः। सधस्थाः विद

रूपम् अस्य । तथा । वाजजित् च एधि । अपिशब्दो वाशब्दार्थः । तेन क्वचिन्न भवति । यथा—इळे आ इहि ॥

यद्वृत्तोपपदाच्च ॥ १४ ॥

(उ० भा०) यदो वृत्तं यद्वृत्तं सर्वविभक्त्यन्तं सर्वप्रत्ययान्तं च गृह्यते यत् यम् येन यतः यथा यत्र यदि इत्यादि यद्वृत्तोप पदात्परमाख्यातं पदं प्रकृत्या भवति । "यमाहुर्मनवस्तीर्णबर्हिषम्" । "येन ऋषयस्तपसा सत्रमायन्" । "यतो जातो अरोचथाः" । "यथायँ वायुरेजति" । "यत्र ऋषयो जग्मुः" । "यदि दिवा यदि नक्तमेनाँसि चकृम" । अत्र सर्वत्र यस्य यद्वृत्तस्याख्यातपदेन सह सम्बन्धो भवति तदेवाख्यातपदं विक्रियते न तु सन्निधिमात्रेण । यथा—"यदेकस्याधि धर्मणि तस्यावयजनमसि" । तथाचोक्तम्—

"यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" ॥

इति ॥

(अ० भा०) यदो वृत्तं यद्वृत्तम् । यच्छब्दस्वरूपमित्यर्थः । तत्सर्वविभक्त्यन्तं सर्वप्रत्ययान्तं च गृह्यते । यच्छब्दस्वरूपमुपपदं यस्य तत् यद्वृत्तोपपदम् । तस्मात् परमाख्यातं प्रकृतिस्वरं स्यात् । यथा—अग्निं यमाहुर्मनवस्तीर्णबर्हिषम् । येन ऋषयस्तपसा सत्रमायन् । यतो जातो अरोचथाः । यथायं वायुरेजति । यत्र ऋषयो जग्मुः । यदि दिवा यदि नक्तमेनां सिच कुम । ये देवा देवेष्वधिदेवत्वमायन् । अत्र सर्वत्र यस्य यद्वृत्तस्याख्यातपदेन सह सम्बन्धो भवति । तदेवाख्यातपदं विक्रियते । ननु न्निधानसूत्रेणान्यदपि । स यथा—यदेकस्याधिधर्मणि तस्यावयं जनमसि । अत्रार्थतः सम्बन्धो नास्ति । तथाचोक्तम्—

"यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य तत् ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" ॥

हेश्च ॥ १५ ॥

(उ० भा०) हिशब्दाच्च परमाख्यातं पदं प्रकृत्या भवति । यथा—"आपो हि ष्ठा मयोभुवः" ॥

(अ० भा०) हिशब्दाच्च परं आख्यातं प्रकृत्या स्यात् । हि स्थ । आपो हि ष्ठा मयोभुवः । त्वामिद्धि हवामहे ॥

उत्तरेपि ॥ १६ ॥

(उ० भा०) उत्तरेऽपि हिशब्दे आख्यातं पदं प्रकृत्या भवति । यथा—"इन्दवो वामुशन्ति हि" ॥

(अ० भा०) उत्तरेऽपि हिशब्दे सति आख्यातं प्रकृत्या स्यात् । यथा—इन्दवो वामुशन्ति हि ॥

नेत् ॥ १७ ॥

(उ० भा०) नेदित्यस्मान्निपातसमाहारात् परमाख्यातपदं प्रकृतिस्वरं भवति । यथा—"एष नेत्त्वदपचेतयातै" ॥

(अ० भा०) नेदित्यस्मात् निपातसमुदायात् परं आख्यातं तथा । यथा—एष नेत्वदपचेतयातै । नेदिति विशिष्टं किम्........ ॥

समनसस्करत् ॥ १८ ॥

(उ० भा०) करदित्येतदाख्यातं पदं समनस इत्येतत्पूर्वं प्रकृत्या भवति । यथा—"असपत्नाः समनसस्करत्" । समनस इत्येतत्पूर्वमिति किम्? "सुक्षत्र भेषजं करत्" ॥

(अ० भा०) समन इत्यस्मात्परः आख्यातं तथा । यथा—असपत्नास्समनसस्करत् । समनसः परं किम् ? सुक्षत्रो भेषजं करत् ॥

**द्वयोः पूर्वं समुच्चये ॥ १९ ॥**

(उ० भा०) द्वयोराख्यातयोः समुच्चयेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं पदं प्रकृत्या भवति । समुच्चयो नाम द्वयोराख्यातयोरेकस्मिन्नर्थे समावेशः । यथा—"शर्म च स्थः वर्म च स्थः"। "शम् च वक्ष्व परि च वक्ष्व" ॥

(अ० भा०) द्वयोराख्यातयोः समुच्चयार्थे वर्त्तमानयोर्मध्ये पूर्वमाख्यातं तथा । समुच्चयो नाम द्वयोराख्यातयो द्वयोराख्यातयोरेकार्थसमावेशः । यथा—शर्म च स्थः वर्म च स्थः । परि च वक्षि शम् च वक्षि । समुच्चये किम्? अपतन्तमिद्धतं वज्रेण तन्तमिद्धतम् ॥

**वा विचारणे ॥ २० ॥**

(उ० भा०) द्वयोराख्यातयोर्विचारणेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति वाशब्देन चेदाख्यातयोर्योगो भवति। संहितायां प्रायश उदाहरणानि न लभ्यन्ते। रूपोदाहरणानि तु दीयन्ते। देवदत्तो भुङ्क्तां वा यज्ञदत्तो वा भुङ्क्ताम् ॥

(अ० भा०) विचारार्थकयोः द्वयो आख्यातयोः पूर्वं तथा वाशब्देन चेदाख्यातयोः योगो भवति । संहितायां तादृशोदाहरणं नोपलभ्यते । अधस्विदासीदुपरि स्विदासीत् इत्यत्र स्वरविशेषः पूर्वमेवोक्तः । ततः नेदमुदाहरणम् । रूपोदाहरणं तु—देवदत्तो वा भुङ्क्ताम् यज्ञदत्तो वा भङ्क्ताम् ॥

**अहविनियोगे ॥ २१ ॥**

(उ० भा०) द्वयोराख्यातयोर्विनियोगेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति अहशब्देन चेदाख्यातयोर्योगो भवति विनियोगो नाम द्वयोः पुरुषयोरेकस्मिन् कर्मणि एकस्य पुरुषस्य सम्बन्धः अन्यस्मिन्

कर्मण्यपरस्य सम्बन्धः । रूपोदाहरणं दीयते । यथा—"देवदत्तो ऽह ग्रामं गच्छतु यज्ञदत्तो ऽह गाः पालयतु" ॥

(अ० भा०) विनियोगे वर्त्तमानयोराख्यातयोः पूर्वं तथा अहशब्दो यपि योगाभिधायकः । विनियोगो नाम द्वयोः पुरुषयोः कर्मद्वये सम्बन्धः । रूपोदाहरणम्—देवदत्तो ह ग्रामं गच्छतु यज्ञदत्तो ह गाः पालयतु ॥

एवावधारणे ॥ २२ ॥

(उ० भा०) द्वयोराख्यातयोरवधारणेऽर्थे वर्त्तमानयोः पूर्वमाख्यातं प्रकृत्या भवति एवशब्देन चेदाख्यातयोर्योगो भवति । अवधारणं नाम द्वयो कर्मणोः द्वयोश्च कर्त्रोरेकस्मिन् कर्मण्येकः कर्त्तावध्रियते परस्मिन्नन्यः । यथा—देवदत्त एव ग्रामं गच्छतु यज्ञदत्त एव भुङ्क्ताम् ॥

(अ० भा०) अवधारणार्थकयोराख्यातयोः पूर्वं तथा एवशब्दो ऽपि द्वयोराख्यातयोः योगाभिधायी । अवधारणं नाम द्वयोः कर्त्रोः कर्मद्वयसम्बन्धः । यथा—देवदत्त एव ग्रामं गच्छतु यज्ञदत्त एव भुङ्क्ताम् ॥

उपपदाप्रयोगेऽपि च ॥ २३ ॥

(उ० भा०) च वा ह अह एव एतानि चप्रभृतीनि यान्युपपदानि उक्तान्याख्यातस्य विकारीणि तेषामर्थो यदि कथञ्चिदवगम्यते । तथाचोक्तम्—

"उपसर्गात्परो यस्तु पदादिरपि दृश्यते ।
उच्चस्थानस्थितो यत्र गुरुं तत्रैव कारयेत्" ॥

इति तदा एतेषामुपपदानामुच्चारणेपि आख्यातं न विक्रियते । तथा रूपोदाहरणम्—सुखं भवथ पवित्रकं भवथ चशब्दोऽत्र लुप्तः । इत्थम्भूतानि छन्दस्युदाहरणानि द्रष्टव्यानि ॥

(अ० भा०) च वा ह अह एव एतानि यानि च उपपदानि पूर्वमुक्तानि तेषामनुच्चारणेऽपि यदि कथञ्चिदर्थोऽवगम्यते नाख्यातं विकारं प्राप्नोति यथा सुखं भवथ । पवित्रकं भवथ । चशब्दोऽत्र लुप्तोऽपि अर्थदशायां समुच्चयत्वेनावगम्यते । इत्थम्भूतानि छन्दसि उदाहरणानि शाखान्तरे द्रष्टव्यानि ॥

परोपापावप्रतिपर्य्यन्वप्यत्यध्याङ्प्रसन्निर्दुरुन्निविस्वभि ॥ २४ ॥

(उ० भा०) परा उप अप अव प्रति परि अनु अपि अति अधि आङ् प्र सम् निर् दुर् उद् नि वि सु अभि एते विंशतिरुपसर्गाः प्रकृतिस्वरा भवन्ति । अस्य चोपसर्गस्य "उपसर्ग उपसर्गे" इत्यादिकः पुरस्तादपवादो द्रष्टव्यः । प्रकृतिस्वरस्तु व्याकरणपठितोऽत्र गृह्यते । तथा च तत्सूत्रम्—"निपाता आद्युदात्ताः" "उपसर्गाश्चाभिवर्जम्" इति । तथाचोक्तम्—

"एकारोथ चकारो वा रेफो दीर्घपरेषु च ।
समुपसर्गेत्येतष्टेद्गुरुरेव न संशयः" ॥

उक्तानामुपसर्गाणामनित्यमुपसर्गगुरु । यथा—"अनु योजान्विन्द्रते हरी"

विंशतेरुपसर्गाणामुच्चा एकाक्षरा नव ।
अद्युदात्ता दशैतेषामन्तोदात्तस्त्वभीत्ययम् ॥

(अ० भा०) परा उप अप अव प्रति परि अनु अपि अति अधि आङ् प्र सम् निर् दुर् उत् नि वि सु अभि एते विंशतिरुपसर्गाः प्रकृतिस्वराः स्युः । अयमुत्सर्गः उपसर्ग उपसर्ग इत्यादिपूर्वोक्तस्यापवादः इति द्रष्टव्यम् । प्रकृतिस्वरश्च व्याकरणपरिपठितोऽत्र गण्यते । तथा च तत्सूत्रम्—निपाता आद्युदात्ताः । उपसर्गाश्चाभिवर्जम् । इति । तथाचोक्तम्—

विंशतेरुपसर्गाणामुच्चा एकाक्षरा नव ।
आद्युदात्ता दशैतेषामन्तोदात्तस्त्वभीत्ययम् ॥

इति ॥

**द्विस्पर्शम् ॥ २५ ॥**

(उ० भा०) द्वौ स्पर्शौ यस्मिन् पदे तद्द्विस्पर्शं पदम्। अधिकारसूत्रमेतत् ॥

(अ० भा०) एवमाख्यातोपसर्गयोः स्वरमुक्त्वा अधुनावशिष्टं संयोगमाह। द्विस्पर्शमिति। द्वौ स्पर्शौ यस्मिन् पदे तत् द्विस्पर्शं भवति। अधिकारसूत्रमेतत् ॥

**वेत्तु वित्त्वास्मद्र्यक्पात्त्रमभित्त्यम्मृत्तिकाद्ध्वं दात्त्रं समाववर्त्त्यृद्धिर्वृद्धिरराद्ध्या अर्द्धशुद्धबुद्धनक्त निषण्णस्विन्नान्नसन्नाश्च ॥ २६ ॥**

(उ० भा०) एतेषु पदेषु द्वौ स्पर्शौ भवतः। वेत्तु यथा—"प्रति त्वा पर्वती वेत्तु"। द्वौ तकारौ संयोगः। वित्त्वा यथा—"वित्त्वा गातुमित"। द्वौ तकारौ वकारश्च संयोगः। अस्मद्र्यक् यथा—"अस्मद्र्यग् वावृधे"। पात्त्रं यथा—"आसन्ना पात्त्रञ्जनयन्त देवाः"। द्वौ तकारौ रेफश्च संयोगः। अभित्त्यं यथा—"अभित्त्यन्देवम्"। द्वौ तकारौ यकारश्च संयोगः। मृत्तिका यथा—"अश्मा च मे मृत्तिका च मे"। द्वौ तकारौ संयोगः। ध्वं यथा—"विमुच्यद्ध्वमघ्न्या देवयानाः"। दकारधकारौ वकारश्च संयोगः। दात्त्रं यथा—"सोमस्य दात्त्रमसि"। द्वौ तकारौ रेफश्च संयोगः। समाववर्त्ति यथा—"समाववर्त्ति पृथिवी"। रेफो द्वौ तकारौ संयोगः। ऋद्धिर्यथा—"सत्रस्य ऋद्धिरसि"। दकारधकारौ संयोगः। वृद्धिर्यथा—"वृद्धं च मे वृद्धिश्च मे"। दकारधकारौ संयोगः। अराद्ध्यै यथा—"अराद्ध्या एदिधिषुः पतिम्"। दकारधकारौ यकारश्च संयोगः। अर्द्धो यथा—"अन्तश्च परार्द्धश्चैता मे"। रेफदकारधकाराः संयोगः। शुद्धो यथा—"शुद्धबालः सर्वशुद्धबालः"। दकारधकारौ संयोगः। नक्तं यथा—"मधु नक्तमुतोषसः"। द्वौ ककारौ तकारश्च संयोगः। निषण्णो

यथा—"निषण्णाय स्वाहा"। द्वौ णकारौ संयोगः स्विन्नो यथा—"स्विन्नः स्नातो मलादिव"। द्वौ नकारौ सयोगः। अन्नं यथा—"अन्नपतेऽन्नस्य"। द्वौ नकारौ संयोगः। सन्नो यथा—"सन्नः सिन्धुः"। द्वौ नकारौ संयोगः। "स्वरात् संयोगादिः" इत्यस्य प्रायशोऽपवादभूतमेतत्सूत्रम्।

(अ० भा०) मृत्तिका ध्वम् इति विच्छेदः। वेत्त्वादिर्विंशतिपदेषु द्वौ स्पर्शौ भवतः। स्वरात्संयोगादिरिति अस्य प्रायेणापवादभूतं एतत्। क्रमेणोदाहरणानि। पर्वती वेत्तु। वित्त्वा गातुमित। इदं माध्यन्दिनानाम्। काण्वानां तु इत्त्वेति पाठः। तदा वेत्त्वित्त्वेति सूत्रपाठो द्रष्टव्यः। अत्र द्वौ तकारौ वकारश्च संयोगः। पूर्वत्र द्वौ तकारौ संयोगः। अस्मद्द्य्रग्वावृधे। अत्रद्वौ दकारौ रेफयकारौ संयोगः। एवमुत्तरत्रापि प्रत्युदाहरणम् द्वौ द्वौ स्पर्शौ द्रष्टव्यौ। आसन्ना पात्त्वम्। अभित्त्यं देवं सवितारम्। मृत्तिका च मे। विमुच्यद्द्ध्वमघ्न्याः। सोमस्य दात्त्वमसि समाववर्त्ति पृथिवी। ऋद्धं च मे ऋद्धिश्च मे। वृद्धं च मे वृद्धिश्चमे। अराद्ध्या एदिधिषुः पतिम्। अन्तश्च परार्द्धश्च। शुद्धबालस्सर्वशुद्धबालः। प्रबुद्धाय स्वाहा। मधु नक्तम्। यदि दिवा यदि नक्तम्। निषण्णाय स्वाहा। स्विन्नः स्नातो मलादिव। अन्नपतेऽन्नस्य नो देहि। आसन्द्यामासन्नः॥

## न क्षवृचिश्विसतयेभ्यस्त्रैकम्॥ २७॥

(उ० भा०) क्ष वृ चि श्वि स त य एतेभ्यः परस्त्रशब्दो न विरुच्यते एकमेव व्यञ्जनं भवति। क्ष यथा—"क्षत्रस्य योनिरसि"। वृ यथा—"वृत्रं वधेत्"। चि यथा—"चित्रं देवानाम्"। श्वि यथा—"श्वित्र आदित्यानाम्"। स यथा—"सत्रस्य ऋद्धिः"। त यथा—"तत्र गच्छ"। य यथा—"यत्र पूर्वे परेताः"। "स्वरात् संयोगादिः" इत्यस्यायमपवादः॥

(अ० भा०) एभ्यः परः त्रशब्दः न द्विरुच्यते। स्वरात् संयोगादिरिति प्राप्तस्यापवादः। यथा—क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि।

वृत्रं वध्यात् । चित्रं देवानाम् । श्वित्र आदित्यानाम् । सत्रस्य ऋद्धिः । परेषामिदम् । तत्र गच्छ । यत्र पूर्वे परेताः ॥

## ईध्र्यायवार्ध्रीनसोद्राश्चराश्चेत् ॥ २८ ॥

(उ० भा०) ईध्र्याय वार्ध्रीनस उद्रः एते स्पर्शाः संयोगादयो न विरुच्यन्ते चरद्रव्यवचनाश्चेद् भवन्ति । ईध्र्याय यथा—"नमो वीध्र्याय च"। धकाररेफौ यकारश्च संयोगः । वार्ध्रीनसो यथा—"वार्ध्रीनसस्ते"। रेफधकारौ रेफश्च संयोगः । उद्रो यथा—"अपा-मुद्रो मासां कश्यपः"। चरद्रव्यवचना इति किम्? "समुद्द्राय शिशु-मारान्"। अत्र समुद्रशब्देन पार्थिवः समुद्र उच्यते ॥

(अ० भा०) ईध्र्याय । वार्ध्रीनसः । उद्रः । इत्यत्र स्पर्शाः संयो-गादिरिति द्वित्वेऽपि न द्विरुच्यन्ते चरद्रव्यवचनाश्चेत् भवन्ति । यथा—नम ईध्र्याय च । अत्र धकाररेफयकारश्च संयोगः । वार्ध्रीनसस्ते मर्त्यै । अपामुद्रो मासां कश्यपः । चराश्चेदिति किम्? समुद्राय शिंशुमारान् । अत्र समुद्रशब्देन पार्थिवः समुद्र उच्यते ॥

## उपोत्त्थित उत्त्तम्भनमुत्त्तभानोत्त्थायेयोत्त्थितायेति त्रीणि ॥ २९ ॥

(उ० भा०) उपोत्त्थितः उत्त्तम्भनं उत्त्तभान उत्त्थाय उत्त्थिताय एतेषु पदेषु त्रीणि स्पर्शाख्यानि व्यञ्जनानि भवन्ति । उपोत्त्थितो यथा—"क्रयायोपोत्त्थितोऽसुरः"। द्वौ तकारौ थकारश्च संयोगः । उत्त्तम्भनं यथा—"वरुणस्योत्त्तम्भनम्"। त्रयस्तकाराः संयोगः । उत्त्तभान यथा—"दिवमुत्त्तभान तेजसा" । त्रयस्तकाराः संयोगः । उत्त्थाय यथा—"उत्त्थाय बृहती भव"। द्वौ तकारौ थकारश्च संयोगः । उत्त्थिताय यथा—"उत्त्थिताय स्वाहा"। द्वौ तकारौ थकारश्च संयोगः ॥

(अ० भा०) एषु पञ्चसु पदेषु त्रीणि स्पर्शाक्षराणि स्युः । नियमोऽयम् । यथा—क्रयायोपोत्त्थितः । अत्र द्वौ तकारौ थकारश्च संयोगः । वरुणस्यो-

तुत्तम्भनम् । त्रयस्तकाराः संयोगः । दिवमुत्त्तभान तेजसा । इदं पूर्ववत् । उत्त्थाय बृहती । द्वौ तकारौ थकारश्च संयोगः । उर्त्त्थिताय स्वाहा । पूर्ववत् ॥

बर्हिरङ्ङ्क्ताम्भद्रेण पृङ्ङ्क्तं पङ्ङ्क्तिः समङ्ङ्धि परिवृङ्ङ्धि पाङ्ङ्त्रानिति द्वावनुनासिकौ पूर्वावारपन्तीवर्जमिति च ॥३०॥

(उ० भा०) बर्हिरङ्ङ्क्तां, भद्रेण पृङ्ङ्क्तं, पङ्ङ्क्तिः, समङ्ङ्धि, परिवृङ्ङ्धि, पाङ्ङ्त्रान्, एवंजातीयकेषु स्पर्शात्पूर्वौ द्वावनुनासिकौ ङकारौ भवतः आरपन्तीशब्दं वर्जयित्वा । बर्हिरङ्ङ्क्तां यथा—"सम्बर्हिरङ्ङ्क्ताम्" । भद्रेण पृङ्ङ्क्तं यथा—"सम्मा भद्रेण पृङ्ङ्क्तम्" । पङ्ङ्क्तिर्यथा—"पङ्ङ्क्तिश्छन्दः" । समङ्ङ्धि यथा—"पयसा समङ्ङ्धि" । परिवृङ्ङ्धि यथा—"परि वृङ्ङ्धि हरसा" । पाङ्ङ्त्रान् यथा—"अन्तरिक्षाय पाङ्ङ्त्रान्" । आरपन्तीवर्जमिति किम्? "ऋतस्य सामन्त्सरमारपन्ती" ॥

(अ० भा०) एषु षट्पदेषु स्पर्शात्पूर्वौः द्वौ ङकारौः स्याताम् । आरपन्ती इती वर्जयित्वा । चशब्दात् एवं जातीयके अन्यत्रापि द्रष्टव्यम् । यथा— सम्बर्हिरङ्ङ्क्तां हविषा घृतेन । सं मा भद्रेण पृङ्ङ्क्तं पापेन पृङ्ङ्क्तम् । पङ्ङ्क्तिछन्दः । पयसा समङ्ङ्धि । परिवृङ्ङ्धि हरसा । अन्तरिक्षाय पाङ्ङ्त्रान् । आरपन्तीवर्जमिति किम्? ऋतस्य सामन्त्सरमारपन्ती । अत्र काण्वानां नकारः अनुनासिक इत्यर्थः । चशब्दात् यत्कासीत्यादि ॥

वृद्धं वृद्धिः ॥ ३१ ॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे षष्ठोऽध्यायः समाप्तः ॥

(उ० भा०) इत्युक्तार्थम् ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते मातृमोदाख्ये प्रातिशाख्यभाष्ये षष्ठोऽध्यायः समाप्तः ॥

(अ० भा०) उक्तार्थमेव । हरिः ओम् ।

श्रीमदनन्तभट्टेन विरचिते कात्यायनप्रातिशाख्यभाष्ये पदार्थप्रकाशे षष्ठोऽध्यायः समाप्तः ॥

---

## अथ सप्तमोऽध्यायः ।

**अथावसानानि ॥ १ ॥**

(उ० भा०) अथशब्दोऽधिकारार्थः । पदावसानान्यधिकृतानि वेदितव्यानि । पदान्तस्येति करणस्यादेश्च यः सन्धिः स उच्यत इति यावत् ॥

(अ० भा०) सप्तमाध्याये पदावसानं निरूप्यते—अथशब्दोऽधिकारार्थः । आनन्तर्यस्य पाठादेव प्राप्तेः । पदावसानानि अधिकृतानि वेदितव्यानि इति सूत्रार्थः । पदन्तस्य इतिकरणस्य आदेश्च यः सन्धिः स उच्यत इत्यभिप्रायः ॥

**कण्ठयस्वरमेकारेण परिगृण्हीयात् प्लुतवर्जम् ॥ २ ॥**

(उ० भा०) कुण्ठयो ह्रस्वोऽकारो दीर्घश्चाकारः स्वरस्तमेकारेण परिगृण्हीयात् प्लुतमाकारं वर्जयित्वा । यथा—"यच्छन्तां पञ्च । पञ्चेति पञ्च" । "द्रविणस्युर्विपन्यया । विपन्ययेति विपन्यया" । प्लुतवर्जमिति किम्? "विवेशा इति विवेशा" ॥

(अ० भा०) कण्ठयस्वरमवर्णं एकारेण परिगृण्हीयात् प्लुताकारं वर्जयित्वा । यथा—यच्छन्तां पञ्च पञ्चेति पञ्च । द्रविणस्युर्विपन्यया विपन्ययेति विपन्यया । प्लुतवर्जं किम्? विवेशा नु इति विवेश नु ॥

**इवर्णमीकारेण ॥ ३ ॥**

(उ० भा०) इवर्णमीकारेण परिगृण्हीयात् । यथा—"पशून् पाहि । पाहीति पाहि" । "अश्विना सूनृतावति । सूनृतावतीति सू नृतावती" ॥

(अ० भा०) इवर्णमीकारेण परिगृण्हीयात्। यथा—वसोः पवित्रम् पवित्रमसि असीत्यसि। अश्विना सूनृतावती सूनृतावतीति सूनृतावती ॥

## उवर्णं वकारेण ॥ ४ ॥

(उ० भा०) उवर्णं वकारेण परिगृण्हीयात्। यथा—"तव द्युम्नान्युत्तमानि सन्तु। सन्त्विति सन्तु" ॥

(अ० भा०) उवर्णं वकारेण परिगृण्हीयात्। तव द्युम्नान्युत्तमानि सन्तु सन्त्विति सन्तु ॥

## औकारं च ॥ ५ ॥

(उ० भा०) औकारं च वकारेण परिगृण्हीयात्। यथा—"अभिषिञ्चाम्यसौ। असावित्यसौ" ॥

(अ० भा०) औकारं च वकारेण परिगृण्हीयात्। लोके नि निदधामि दधाम्यसौ असावित्यसौ ॥

## ह्रस्वकण्ठ्योपधं विसर्जनीयान्तमरिफितं विवृत्त्या ॥ ६ ॥

(उ० भा०) विसर्जनीयान्तं पदं ह्रस्वाकारोपधं रिफितं यन्न भवति तद्विवृत्त्या परिगृण्हीयात्। यथा—"होता यजिष्ठो अध्वरेष्वीड्यः। ईड्य इतीड्यः"। "शुक्रन्दुदुह्रे अह्रयः। अह्रय इत्यह्रयः"। अरिफितमिति किम्? "सतश्च योनिमसतश्च विवः। वरिति वः"। "सुरुचो वेन आवः। आवरित्यावः" ॥

(अ० भा०) विसर्जनीयान्तं ह्रस्वाकारोपधं रिफितसंज्ञं वर्जयित्वा विवृत्या परिगृण्हीयात्। विवृतिरसन्धिः। यथा—होता यजिष्ठो अध्वरेष्वीड्यः ईड्य इतीड्यः। दुदुह्रे अह्रयः अह्रय इत्यह्रयः। अरिफितं किम्? असतश्च विवः वरिति वः। आवः आवरित्यावः। समानर्चीति रिफितसंज्ञा ॥

दीर्घकण्ठ्योपधं विसर्जनीयान्तमेकारान्तमैकारान्तं प्लुतं प्रगृह्यं च ॥ ७ ॥

(उ० भा०) दीर्घाकारोपधं विसर्जनीयान्तं च यत्पदं तद्विवृत्त्या परिगृण्हीयात्। एकारान्तमैकारान्तं प्लुतं प्रगृह्यं च एतानि च पदानि विवृत्या परिगृण्हीयात्। दीर्घाकारोपधं विसर्जनीयान्तमुदाहरणं यथा— "यतो जातो अरोचथाः। अरोचथा इत्यरोचथाः"। एकारान्तं यथा— "मन्त्रं वोचेमाग्नये। अग्नय इत्यग्नये"। ऐकारान्तं यथा—"उभा राधसः सह मादयध्यै। मादयध्या इति मादयध्यै"। प्लुतं यथा—"भुवनमा विवेशा। विवेशा इति विवेशा"। प्रगृह्यं यथा—"अन्यान्या वत्समुपधापयेते। धापयेते इति धापयेते"॥

(अ० भा०) दीर्घकण्ठ्योपधं विसर्जनीयान्तं पदं विवृत्या परिगृण्हीयात्। यथा—यतो जातो अरोचथाः अरोचथा इत्यरोचथाः। इदं दीर्घकण्ठ्योपधविसर्जनीयान्तोदाहरणम्। एकारान्तं यथा—मन्त्रं वोचेमाग्नये अग्नय इत्यग्नये। एकारान्तं यथा—सह मादयध्यै मादयध्या इति मादयध्यै। प्लुतं यथा—भुवनमा विवेशा विवेशा इति विवेशा। प्रगृह्यं यथा—उप धापयेते धापयेते इति धापयेते॥

औकारान्तं चैके ॥ ८ ॥

(उ० भा०) औकारान्तं च पदमेके आचार्या विवृत्या परिगृण्हन्ति। यथा—"अभिषिञ्चाम्यसौ। असा इत्यसौ"। एक इति किम्? "असावित्यसौ"॥

(अ० भा०) पदं औकारान्तं च एके आचार्या विवृत्या परिगृण्हन्ति। एकशब्दोऽत्र मुख्यार्थवचनः। यथा—दधाम्यसौ असा इत्यसौ। इदं काण्वमतम्। एके किम्? माध्यन्दिनादेर्मा भूदिति। तेषां तु औकारं वकारेति वकारः। यथा—निदधाम्यसौ असावित्यसौ॥

भाव्युपधं च रिद्विसर्जनीयान्तानि रेफेण ॥ ९ ॥

(उ० भा०) अकण्ठ्यो भावीत्युक्तम्। भाव्युपधं रिद्विसर्जनीयान्तं रिफितविसर्जनीयान्तं च यत्पदं तद्रेफेण परिगृण्हीयात्। यथा—“ अग्निमीडे पूर्वचित्तिन्नमोभिः। नमोभिरिरिति नमः भिभिः”। सध्यूक्कः। करिति कः। “सतश्च योनिसमतश्च विवः। वरिति वः” ॥

(अ० भा०) अकण्ठ्यो भावीत्युक्तम्। भाव्युपधं विसर्जनीयान्तं पदं रिद्विसर्जनीयान्तं च पदं रेफेण परिगृण्हीयात्। यथा—अग्निमीळे पूर्वचित्तिन्नमोभिः नमोभिरिरिति नमः भिः। असतश्च विवः वरिति वः ॥

प्रथमान्तं तृतीयेन ॥ १० ॥

(उ० भा०) प्रथमान्ताः कचटतपाः तृतीयान्ताः गजडदबाः। वर्गप्रथमान्तं पदं स्ववर्गतृतीयेन वर्णेन परिगृण्हीयात्। यथा—“विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्। अस्मदित्यस्मत्”। “सममृतत्वमानट्। आनडित्यानट्”।

(अ० भा०) प्रथमाः कचटतपाः वर्णाद्यास्तृतीयाः गजडदबाः। प्रथमान्तं पदं तृतीयेन परिगृण्हीयात्। अस्मदित्यस्मत्। प्रमुमुग्ध्यस्मत्। वागिति वाक्। वाळिति वाट्। अनुस्तुबित्यनुस्तुप् ॥

उत्तमान्तमुत्तमेन ॥ ११ ॥

(उ० भा०) उत्तमान्तं पदमुत्तमेनैव परिगृण्हीयात्। यथा—“वर्त्तीं रुद्रा नृपाय्यम्। नृपाय्यमिति नृपाय्यम्” ॥

(अ० भा०) उत्तमाः ङञणनमाः वर्गान्त्याः। उत्तमान्तं पदं उत्तमेनैव परिगृण्हीयात्। यथा—अतिथिमित्यतिथिम्। घृतैर्बोधयतातिथिम्। नृपाय्यमिति नृपाय्यम्। अवर्धयन्नित्यवर्धयन्। अर्वाङ् इत्यर्वाङ्। स्ववाधात्वर्वाङ् ॥

वृद्धं वृद्धिः॥ १२ ॥

इति कात्यायनकृतौ प्रातिशाख्यसूत्रे

सप्तमोऽध्यायः ।

(उ० भा०) इत्युक्तार्थम् ॥

इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते

मातृमोदाख्ये प्रातिशाख्यभाष्ये

सप्तमोऽध्यायः समाप्तः ॥

(अ० भा०) उक्तार्थमेव ।

हरिः ओम् ।

इति श्रीमदनन्तभट्टेन विरचिते कात्यायनप्रातिशाख्यसूत्रभाष्ये

सप्तमाध्यायः समाप्तः ॥

---

## अथाष्टमोऽध्यायः ।

अथातो वर्णसमाम्नायं व्याख्यास्यामः ॥ १ ॥

(उ० भा०) अथातःशब्दावुक्तार्थौ । वर्णा यस्मिन् समाम्नाये पठ्यन्ते स वर्णसमाम्नायः । तं व्याख्यास्याम इति प्रतिज्ञा समाधानार्थम् ॥

(अ० भा०) नास्ति सर्वत्र सम्पूर्णाद्यतोऽन्यद्वस्तु किञ्चन ।
सदसत्सम्प्रकाशाय तस्मै शक्त्यात्मने नमः ॥

वर्णसमाम्नायस्वरूपप्रदर्शनायाष्टमाध्यायः प्रारभ्यते । वर्णसमाम्नायस्य सर्वोपयोगित्वात् यद्यपि प्रथमाध्याय एव वक्तुमुचितः तथापि मुनेः स्वतन्त्रेच्छत्वात् अन्तिमाध्याये कथ्यते । अथशब्दोऽत्रानन्तर्यार्थः मङ्गळार्थश्च । अतश्शब्दो हेत्वर्थः । यतस्सर्वमुक्तं वर्णसमाम्नायो नोक्तः अतस्सर्वार्थित्वात् । वर्णाः यस्मिन् समाम्नाये पठ्यन्ते सः वर्णसमाम्नायः । तं वर्णसमाम्नायं व्याख्यास्याम इति प्रतिज्ञासूत्रम् ॥

तत्र स्वराः प्रथमम् ॥ २ ॥

(उ० भा०) व्याख्यायन्त इति शेषः । तद्यथा—

अइति आइति आ३इति इइति ईइति ई३इति उइति ऊइति ऊ३इति ऋइति ॠइति ॠ३इति ऌइति ॡइति ॡ३इति ॥ ३ ॥

(अ० भा०) यथा—अ आ आ३ इ ई ई३ उ ऊ ऊ३ ऋ ॠ ॠ३ ऌ ॡ ॡ३ इति ॥

**अथ सन्ध्यक्षराणि ॥ ४ ॥**

(उ० भा०) व्याख्यायन्त इति सूत्रशेषः ॥

**एइति ए३इति ऐइति ऐ३इति ओइति ओ३इति औइति औ३इति ॥ ५ ॥**

(अ० भा०) व्याख्यायन्त इति सूत्रशेषः । ए ए३ ऐ ऐ३ ओ ओ३ औ औ३ इति ॥

**इति स्वराः ॥ ६ ॥**

(उ० भा०) व्याख्याता इति सूत्रशेषः ॥

(अ० भा०) व्याख्याता इति सूत्रशेषः ।

**अथ व्यञ्जनानि ॥ ७ ॥**

(उ० भा०) व्याख्यायन्त इति सूत्रशेषः । तद्यथा—

**किति खिति गिति घिति ङिति कवर्गः ॥ ८ ॥**

**चिति छिति जिति झिति ञिति चवर्गः ॥ ९ ॥**

**टिति ठिति डिति ढिति णिति टवर्गः ॥ १० ॥**

**तिति थिति दिति धिति निति तवर्गः ॥ ११ ॥**

**पिति फिति बिति भिति मिति पवर्गः ॥ १२ ॥**

(अ० भा०) व्याख्यायन्त इति शेषः । क् ख् ग् घ् ङ् इति कवर्गः । च् छ् ज् झ् ञ् इति चवर्गः । ट् ठ् ड् ढ् ण् इति टवर्गः । त् थ् द् ध् न् इति तवर्गः । फ् ब् भ् म् इति पवर्गः ॥

**इति स्पर्शाः ॥ १३ ॥**

(उ० भा०) व्याख्याता इति सूत्रशेषः ॥

(अ० भा०) व्याख्याता इति सूत्रशेषः ॥

**अथान्तस्थाः ॥ १४ ॥**

(उ० भा०) व्याख्यायन्त इति शेषः ॥

**यिति रिति लिति विति ॥ १५ ॥**

(अ० भा०) व्याख्यायन्त इति शेषः । य् र् ल् व् इति ॥

**अथोष्माणः ॥ १६ ॥**

(उ० भा०) व्याख्यायन्त इति शेषः ॥

**शिति षिति सिति हिति ॥ १७ ॥**

(अ० भा०) व्याख्यायन्त इति शेषः । श् ष् स् ह् इति ।

**अथायोगवाहाः ॥ १८ ॥**

(उ० भा०) व्याख्यायन्त इति शेषः । अकारादिना वर्णसमाम्नायेन सहिताः सन्त एते वहन्त्यात्मलाभं प्राप्नुवन्त्ययोगवाहाः । तथाहि—१८ ॥

(अ० भा०) योगवहत्वं च इत्थम् । योगेन अकारादिवर्णसमुदायेन सहिताः सन्तः आत्मानं च वहन्त इति योगवाहाः । तथाहि—

ᳵक इति जिह्वामूलीयः ॥ १९ ॥

(उ० भा०) इति ककारपूर्वं जिह्वामूलीयं दर्शयति। तथा—

(अ० भा०) इति ककारोत्तरं जिह्वामूलीयं दर्शयति—

ᳶप इत्युपध्मानीयः ॥ २० ॥

(उ० भा०) इति पकारपूर्वमुपध्मानीयं दर्शयति। एवमन्यत्रापि द्रष्टव्यम्—२० ॥

(अ० भा०) इति पकारोत्तरमुपध्मानीयं दर्शयति। एवं सवत्र द्रष्टव्यम् ॥

अं इत्यनुस्वारः ॥ २१ ॥

(उ० भा०) इति स्वरपूवं अनुस्वारं दर्शयति ॥

अः इति विसर्जनीयः ॥ २२ ॥

(उ० भा०) इति स्वरपूर्वं विसर्जनीयं दर्शयति ॥

(अ० भा०) इति स्वरपूर्वं विसर्जनीयं दर्शयति।

हुँ इति नासिक्यः ॥ २३ ॥

(उ० भा०) अयमृक्शाखायां प्रसिद्धः ॥

कुँ खुँ गुँ घुँ इति यमाः ॥ २४ ॥

(उ० भा०) इति यमसंज्ञका वर्णा विंशतिसंख्याका भवन्तीत्येतच्चतुर्थाध्याये व्याख्यातम् ॥

एते पञ्चषष्टिवर्णा ब्रह्मराशिरात्मवाचः ॥ २५ ॥

(उ० भा०) य एते पञ्चषष्टिवर्णास्ते समस्ता एव त्रयीलक्षणो ब्रह्मराशिः। एत एव कदाचिदानुपूर्व्या व्यवस्थिताः सन्तः ऋग्यजुस्सामाख्या भवन्तीत्यर्थः। लौकिक्या अपि वाचोऽयमेवात्मा। एतदेव स्पष्टीकर्तुमाह—

यत्किञ्चिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ॥

यत्किञ्चिद्वाङ्मयं लोके इत्यादि। एते पञ्चषष्टिवर्णा लोके वेदे च प्रतिज्ञाताः यत्किञ्चिद्वाङ्मयं लोके इत्यादिना। ते च लोके लोकैरनियतदेशकालाः प्रयुज्यमानाः सन्तो दृष्टाः। अतो वेदे तन्नियमार्थं स्वाध्यायविधिः क्रियते ॥

(अ० भा०) एते पञ्चषष्टिवर्णाः। ते एते समस्ता एव त्रयीलक्षणो ह्मराशिः। एत एव कदाचिदानुपूर्या व्यवस्थितास्सन्तः ऋग्यजुस्सामाख्या भवन्तीति श्लोकार्थः। लौकिक्या अपि वाचोऽयमेवात्मा एतदेव स्पष्टिकर्तुमाह। यत्किञ्चिद्वाङ्मयं लोक इति ॥

शुचिना ॥ २६ ॥

(उ० भा०) स्नानाचमनादिभिः शौचयुक्तेन ब्रह्मचर्य्यवता त्रैवर्णिकेन स्वाध्यायोऽध्येतव्यः ॥

(अ० भा०) य एते पञ्चषष्टिवर्णाः लोके वेदे तन्नियमार्थं शास्त्रारम्भतत्समाप्त्योः स्वाध्यायविधिं निरूप्यते। शुचिनेति। शुचिना स्नानाचमनादिभिः शौचयुक्तेन ब्रह्मचर्यवता च त्रयीवर्णकेन स्वाध्यायोऽध्येतव्य इति सूत्रशेषः ॥

शुचौ देशे ॥ २७ ॥

(उ० भा०) अनुपहृदेशे स्वाध्यायोऽध्येतव्यः। तथाचोक्तम्—

"द्वावेव वर्जयेन्नित्यमनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥"

(अ० भा०) शूद्राद्यनुपहते देशे स्वाध्यायोऽध्येतव्यः । उक्तं हि—

द्वावेतौ वर्जयेन्नित्यं अनध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाशुद्धां आत्मानं चाशुचिं द्विजः ॥

**शूद्रपतितयोरसंश्रावं स्वाध्यायोऽध्येतव्यः ॥ २८ ॥**

**(उ० भा०) शूद्रपतितादयो न शृण्वन्ति तथा स्वाध्यायोऽध्येतव्यः ॥**

(अ० भा०) यदितः ब्रह्महत्यादिपातकेन पतति सः पतिताः । शूद्रः चतुर्थो वर्णः । शूद्रपतितादयो यथा न गृण्हन्ति तथा शुद्धेन शुद्धायां भूमौ स्वाध्यायोऽध्येतव्य इति सूत्रत्रयमेकान्वयत्वेन व्याख्यातव्यम् । प्रत्येकमन्वयानुपपत्तेः ॥

**ज्ञाने ॥ २९॥**

**(उ० भा०) एवं स्वाध्यायविधिमुक्त्वाधुना वेदस्य ग्रन्थतोऽर्थतश्च परिज्ञाने फलमाह—**

(अ० भा०) एवं स्वाध्यायविधिमुक्त्वा अधुना वेदस्य ग्रन्थतोऽर्थतश्च परिज्ञाने फलमुच्यते इति शेषः । तदेवाह—

**पौरुष्यम् ॥ ३० ॥**

**(उ० भा०) पुरुष । आत्मा । तस्य विवेकस्य साधकं पौरुष्यम् । मुक्तिप्रदमित्यर्थः ॥**

(अ० भा०) पुरुष आत्मा । तत्प्राप्तिसाधनं पौरुष्यम् । मुक्तिप्रदमित्यर्थः॥

**स्वर्ग्यम् ॥ ३१ ॥**

(उ० भा०) **स्वर्गसाधकं च ॥**

(अ० भा०) स्वर्गसाधकं च ॥

**यशस्यम् ॥ ३२ ॥**

(उ० भा०) **यशः कीर्त्तिस्तस्याः साधकम् ॥**

(अ० भा०) यशः कीर्त्तिः । तत्साधकं च ॥

**आयुष्यम् ॥ ३३ ॥**

(उ० भा०) **आयुषो वर्धनम् । यद्वेदस्यार्थज्ञानं तन्मुक्तिसाधकं स्वर्गसाधकं च भवति ॥**

(अ० भा०) आयुषो वर्धनम् । अत्र पौरुष्यमित्यादिसूत्रचतुष्टये विभक्तिपरिणामेन वेदितव्यम् । तद्यथा—यद्वेदस्यार्थतोग्रन्थयतश्च ज्ञानं तन्मुक्तिसाधनं यशस्साधनं आयुस्साधनं चेति । यद्वा पौरुष्यं स्वर्ग्यं यशस्यं आयुष्यमिति भावप्रधानो निर्देशः । पुरुषस्य भावः स्वर्गस्य भावः यशसो भावः आयुषो भावः इति । तदा सुगमोऽन्वयः । वेदस्य परिज्ञाने पौरुष्यादि भवतीति भावः ॥

**तथा विभक्तिपरिज्ञानम् ॥ ३४ ॥**

(उ० भा०) **पदार्थज्ञानं तन्मुक्तिसाधकम् । यत्प्रकृतिप्रत्ययादिपरिज्ञानं तत् स्वर्गयशआयुषां साधकमित्ययं विभागो ज्ञानस्य द्रष्टव्यः ॥**

**"वेदस्याध्ययनाद्धर्मः सम्प्रदानात्तथा श्रुतेः ।**
**वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ॥**

अथापि भवति—

त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वरिंशद्वयञ्जनान्येतावान्वर्णसंग्रहः ॥

अयमेवार्थः । प्रकृत्या वेदस्य पाठमांत्रात्तावद्धर्मो भवति । तथा शिष्येभ्यः सम्प्रदानात् । तथा श्रवणात् । तथा वर्णपरिज्ञानात् । तथा अक्षरपरिज्ञानात् । विभक्तिपरिज्ञानाच्च पदपरिज्ञानाच्चोत्तरोत्तरं धर्मो भवति इत्येतदेवानुवर्तते । शब्दस्वरूपचिन्तकैस्त्रयोविंशतिः स्वरा अकाराद्य उक्ताः । द्विचत्वारिंशद्वयञ्जनानि कादीनि एतावान् वर्णसङ्घातः ॥

(अ० भा०) यद्वेदस्य प्रकृतिप्रत्ययादिविभागतो ज्ञानं तस्मादपि आयुष्यादिफलं भवति ॥

अथापि श्लोका भवन्ति—

वेदस्याध्ययनाद्धर्मः सम्प्रदानात्तथा श्रुतेः ।
वर्णशोऽक्षरशो ज्ञानाद्विभक्तिपदशोऽपि च ॥

अस्यार्थः—वेदस्याध्ययनात् पाठमात्रात् तावद्धर्मो भवति । अक्षरशः स्वराणां परिज्ञानाद्धर्मो भवति । तथा शिष्येभ्यः सम्प्रदानाद्धर्मो भवति । तथा श्रुतेः वेदश्रवणाद्धर्मो भवतीति सर्वत्रानुवर्त्तते । वाशब्दो व्यस्तसमस्तार्थः । तथाहि—अध्ययनादेर्व्यस्तस्य धर्मसामान्यसाधनत्वं समुदितस्य तु धर्म विशेषसाधनत्वमित्यवधेयम् । वर्णशोऽक्षरशो ज्ञानादिति यदुक्तं तद्विवृणोति—

त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः ।
द्विचत्वारिंशद्व्यञ्जनान्येतावान् वर्णसङ्ग्रहः ।

शब्दस्वरूपचिन्तकैः त्रयोविंशतिः स्वरा अकारादयः उक्ताः । द्विचत्वारिंशत्सङ्ख्यानि व्यञ्जनानि उक्तानि । एतावानेव वर्णसङ्घातः । स च अध्यायादौ प्रदर्शित अकारादियमान्तः ॥

**तस्मिन् ळ्हळजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम् ऌकारो दीर्घः प्लुताश्चोक्तवर्जम् ॥ ३५ ॥**

(उ० भा०) अधस्तनश्लोकरूपसूत्रेण वर्णानुक्त्वा अधुना ये माध्यन्दिनानां नेष्यन्ते वर्णास्तान्निराकर्तुमाह । ढकारष्टवर्गीयो डकारश्च तत्प्रकृती ळ्हळकारौ जिह्वामूलीयोपध्मानीयश्च नासिक्यश्च एते वर्णा न सन्ति माध्यन्दिनानाम् । किमेतावन्त एव ? नेत्युच्यते । ऌकारो दीर्घः । लाजीञ्छाचीनित्येवमाद्यो ये पठितास्तान् प्लुतान् वर्जयित्वा अन्ये प्लुता न सन्ति माध्यन्दिनानाम् ॥

(अ० भा०) अधस्तनश्लोकेन वर्णसङ्ग्रहमुक्त्वा तत्र माध्यन्दिनानां ये वर्णा नेष्यन्ते तान्निराकरोति । तस्मिन्निति । तस्मिन्वर्णसङ्ग्रहे माध्यन्दिनशाखिनां ळळ्हादयो न सन्ति । डकारस्थानीयो ळकारः ढकारस्थानीयो ळ्हकारः डढौ ळळ्हावेकेषामिति सूत्रकारोक्तेः । क इति जिह्वामूलीयः । प इत्युपध्मानीयः । हुङ्कारो नासिक्यः । एते वर्णा माध्यन्दिनानां न सन्तीति भावः । किमेतावन्त एव न सन्ति । नेत्याह । ऌकारो दीर्घो लाजी३न् शाची३न् एवमादयो ये परिपठिताः प्लुताः तान् वर्जयित्वान्ये प्लुताश्च न माध्यन्दिनानां सन्ति । माध्यन्दिनानामिति ग्रहणात् काण्वादेर्न निषेधः ॥

**वर्णदेवताः ॥ ३६ ॥**

(उ० भा०) प्रकृतानां वर्णानां देवता वक्ष्याम इति सूत्रशेषः ॥

(अ० भा०) अथ प्रकृतानां वर्णानां देवताः उच्यन्त इति सूत्रशेषः । ता एवाह—

**आग्नेयाः कण्ठ्याः ॥ ३७ ॥**

(उ० भा०) कण्ठस्थाना वर्णा अग्निदेवत्या भवन्ति ॥

(अ० भा०) कण्ठस्थाना वर्णाः अग्निदेवत्या भवन्ति ॥

नैऋत्या जिह्वामूलीयाः ॥ ३८ ॥

(उ० भा०) जिह्वामूलस्थाना वर्णा निर्ऋतिदेवत्या भवन्ति ॥

(अ० भा०) जिह्वामूलीयस्थाना नैऋत्यदेवत्या स्युः ॥

सौम्यास्तालव्याः ॥ ३९ ॥

(उ० भा०) तालुस्थाना वर्णाः सोमदेवत्या भवन्ति ॥

(अ० भा०) तालुस्थाना वर्णाः सोमदेवत्याः स्युः ॥

रौद्रा दन्त्याः ॥ ४० ॥

(उ० भा०) दन्तस्थाना वर्णा रुद्रदेवत्या भवन्ति ॥

(अ० भा०) दन्तस्थाना वर्णाः रुद्रदेवत्या स्युः ॥

ओष्ठ्या आश्विनाः ॥ ४१ ॥

(उ० भा०) ओष्ठ्यस्थाना वर्णा अश्विदेवत्या भवन्ति ॥

(अ० भा०) ओष्ठस्थाना वर्णाः अश्विदेवत्या स्युः ॥

वायव्या मूर्धन्याः ॥ ४२ ॥

(उ० भा०) मूर्धस्थाना वर्णा वायुदेवत्या भवन्ति ॥

(अ० भा०) मूर्धस्थाना वर्णाः वायुदेवत्या स्युः ॥

**शेषा वैश्वदेवाः ॥ ४३ ॥**

(उ० भा०) एतानि स्थानानि विहाय येऽन्यस्थानजन्या वर्णास्ते वैश्वदेवा भवन्ति । स्पष्टार्थान्येतानि सूत्राणि ॥

(अ० भा०) उक्तानि स्थानानि विहाय ये अन्यस्थानजन्मानः वर्णाः शेषास्ते वैश्वदेवा स्युः ॥

**तत्समुदायोऽक्षरम् ॥ ४४ ॥**

(उ० भा०) तेषां वर्णानामेकीभावलक्षणः समुदायोऽक्षरं भवति । तद्यथा—क ख ग घ ङ इत्यादि ।

(अ० भा०) तेषां वर्णानामेकीभावलक्षणः समुदायोऽक्षरं स्यात् । यथा—क ख ग घ इत्यादि ॥

**वर्णो वा ॥ ४५ ॥**

(उ० भा०) वर्णसमुदायो वा वर्णो वा अक्षरं भवति । तद्यथा—अ आ इ ई उ ऊ इत्येवमादि । वर्णसमुदायोऽक्षरं भवति । क ख ग घ ङ दध्ना एवमादि । व्यवस्थितविभाषा चेयम् । स्वरः केवलोऽप्यक्षरं भवति । व्यञ्जनसमुदायस्तु स्वरसंहित एवाक्षरं भवति । तथा च प्रतिपादितम्—"स्वरोऽक्षरम्" "सहाद्यैर्व्यञ्जनैः" "उत्तरैश्चावसितैः" इति प्रथमाध्याय एवेति ॥

(अ० भा०) वर्णसमुदायो वर्णो वाक्षरं स्यात् । यथा वर्णसमुदायः पूर्वमुक्तः । द्वितीयो यथा—अ आ इ ई इत्यादि । व्यवस्थितादिभाषेयम् । यथा—स्वरः केवलोऽप्यक्षरं भवति । व्यञ्जनं तु स्वरसहितमेवाक्षरं भवतीति । तथा च पूर्वमेव प्रतिपादितम् । स्वरोऽक्षरम् । सहाद्यैर्व्यन्जनैः । उत्तरैश्चावसितैः इत्यादिना ॥

अक्षरसमुदायः पदम् ॥ ४६ ॥

(उ० भा०) अक्षराणां समुदायः पदं भवति। तद्यथा—इषे त्वा ऊर्जे त्वा वाजः च मे ॥

(अ० भा०) तन्त्रावृत्या एकशेषन्यायेन वा अक्षरशब्दः द्विवारं आदर्शनीयः ॥

अक्षरं वा ॥ ४७ ॥

(उ० भा०) अक्षरं वा पदं भवत्यक्षरसमुदायो वा पदं भवति। इन्द्र आ याहि। यः उ विग्रायां रताः। अक्षरसमुदायः पदं भवति। इषे त्वा ऊर्जे त्वा ॥

(अ० भा०) अक्षरं समुदायश्चेति विग्रहः। तथाच अक्षरं अक्षरसमुदायो वा पदं स्यात्। यथा—आ इदम् अगन्म। द्वितीयो यथा—इषे त्वा ऊर्जे त्वा इत्यादि ॥

तच्चतुर्द्धा ॥ ४८ ॥

(उ० भा०) तदेतत्पदं चतुर्धा भिद्यत इति सूत्रशेषः ॥

(अ० भा०) तदेतत्पदं चतुर्धा भिद्यत इति शेषः। तदेवाह—

नामाख्यातोपसर्गनिपाताः ॥ ४९ ॥

(उ० भा०) नामपदं यथा—गौरश्वः पुरुषो हस्तीत्येवमादि। आख्यातपदं यथा—पचति पठति गच्छति धावति वल्गतीत्येवमादि। उपसर्गपदं यथा—प्र परा आ अभीत्येवमादि। निपातपदं यथा—वा च कं उ चित् इत्यादि। नामाख्यातोपसर्गनिपाता इति बहुवचनं पदचतुष्टयापेक्षम् ॥

(अ० भा०) नाम च आख्यातं च उपसर्गश्च निपातश्चेति द्वन्द्व-समासः। क्रमेणोदाह्रियन्ते। नाम यथा—गौरश्वः पुरुषो हस्तीत्येवमादि। आख्यातं यथा—पचति पठति गच्छति यच्छन्ताम् गृण्हामीत्यादि। तृतीयं यथा—अभि प्र निः। अभिप्रेहि। निर्देह। इत्यादि। निपातपदं यथा—वा च कम् इत्यादि॥

तत्र प्रतिविशेषः॥ ५०॥

(उ० भा०) तत्र च वाक्यपदचतुष्टयं प्रति यो विशेषः स प्रति-पाद्यते। वक्ष्यमाणेन सूत्रेणेति वाक्यशेषः॥

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः॥

अथ व्यवस्थया पदचतुष्टयस्य लक्षणं कर्त्तुमाह। क्रिया कालः कर्त्ता सङ्ख्या उपसर्गे विशेष इत्याख्यातार्थः। तत्र क्रियैव प्रधानमुपसर्गस्तु क्रियाया एव विशेषं करोति। यथा पचतीत्यत्र पाकः प्रतीयते। पुनः प्रपचतीत्युक्ते आदरः प्रतीयते। एवं गच्छत्याग-च्छतीत्यादिषु द्रष्टव्यम्। सत्त्वं धातुः कारकं विभक्तिरिति नाम्नोऽर्थः। तत्र सत्त्वमेव विशेषतोऽभिधीयते। निपातस्त्वर्थासम्भवे पादपूरणो भवति॥ एवं नामाख्यातोपसर्गनिपातानामर्थभेदं व्याख्यायाधुना स्वरसंस्कारावपि तत्रोक्तावेवैतौ प्रतिपादयति—चतुर्दशेति।

चतुर्दश निपाता येऽनुदात्तास्तेपि सन्धिताः।
निहन्यते खल्वाख्यातमुपसर्गचतुष्टये॥

चतुर्दश निपाता येऽनुदात्तास्तेपि अधस्तात्सन्धिता एव वाचकमुचिदित्या-दिसूत्रेण। निपातग्रहणमुपलक्षणम्। नाम्नामपि स्वरः सूत्रविहित एव। यथा—"नो नौ मे मदर्थे त्रिद्वयैकेषु" इत्यादिना। यच्च पदचतुष्टये आख्यातमुक्तं तन्निहन्यते अनुदात्तं भवति उपसर्गादीनां पदानां

परभूतम्। "उपसर्गो विशेषकृत्। सत्त्वाभिधायकं नाम निपातः पादपूरणः" इत्येतन्नामानुपूर्वीमंगीकृत्योक्तम्। निहन्यते खल्वाख्यातमुपसर्गाणां चतुष्टय इति। खलुशब्द उपलक्षणार्थः। उपसर्गाणामपि तत्र स्वरो विहित इति "उपसर्ग उपसर्गे" इत्यादिना, एतदुक्तं भवति—यदधस्तान्मया प्रतिज्ञातं "स्वरसंस्कारयोः छन्दसि नियमः" इति कृत्स्नं प्रतिपादितमित्यर्थः। अतः कृत्स्नमिदं शास्त्रमिति कृत्वा आदर्त्तव्यं शिष्यैः॥

(अ० मा०) तत्र पदचतुष्टयं प्रति यो विशेषः स प्रतिपाद्यते। वक्ष्यमाणेन सूत्रेणेति सूत्रशेषः। तदेव दर्शयति—

क्रियावाचकमाख्यातमुपसर्गो विशेषकृत्।
सत्त्वाभिधायकं नाम निपातः पादपूरणः॥

अर्थविशेषेण पदचतुष्टयस्य लक्षणं कर्तुमाह। क्रिया नाम धात्वर्थः। तद्वाचक आख्यातं पदं उपसर्गस्तु क्रियया एव विशेषं करोति। यथा—पचतीत्यत्र पाकः प्रतीयते। तत्र पुनः प्रपचतीत्युक्ते प्रकर्षोऽवगम्यते। एवं गच्छति आगच्छति नमति प्रणमतीत्यादौ द्रष्टव्यम्। सत्त्वं नाम लिङ्गसङ्ख्याकारकनिर्मुक्तं प्रातिपदिकस्वरूपम् तस्य अभिधायकं नामपदम्। लिङ्गसङ्ख्याकारकानि तु सुप्तिङोः प्रत्ययार्थाः। यथा—कृष्णः वामम् अश्विना अग्नये, अग्नेः अग्नौ इत्यादि। निपातस्तु अर्थविशेषाभावात् पादपूरणार्थः। यथा—स्वित्। किंस्विदेकाकी चरति। चित्। हृदयाविधश्चित्। कम् इमा। नु कं भुवना सीषधाम। इत्यादि। एवं नामाख्यातोपसर्गनिपातार्थभेदं व्याख्याय सम्प्रति निपातादीनां स्वरविशेषमनुवदति—

चतुर्दश निपाता येऽनुदात्तास्तेऽपि सञ्चिताः।
निहन्यते खल्वाख्यातमुपसर्गचतुष्टये॥

चतुर्दशनिपाता येऽनुदात्तास्तेऽपि सञ्चिता एव। वाचकमुचिदित्यादिना सूत्रेण द्वितीयाध्यायेऽभिहिता एव। यदाख्यातपदं तदुत्सर्गेण निहन्यते। यद्वृत्तोपपदावन्यथा भवतीत्येतदपि षष्ठाध्याये अनुदात्तमाख्यातमामन्त्रितवदि-

त्यादिनाभिहितमेव । तथोपसर्गचतुष्टयस्यापि स्वरः तत्रैव उपसर्ग उपसर्ग इत्यादिनाभिहित एव । चतुष्टयशब्दस्य उपलक्षणत्वात् सर्वो-पसर्गाणां स्वरोऽप्यभिहित एव परोपापावेत्यादिना । खलुशब्दः प्रसिध्यर्थः । एतदुक्तं भवति —यदधस्तात् मया प्रतिज्ञातं स्वरसंस्कारयोः छन्दसि नियम इति कृत्स्नं तत्प्रतिपादितम् । अधः कृत्स्नमिदं शास्त्रमिति मत्वा ज्ञानातिशयाय सर्वदा शिष्यैरावर्तनोयमिति । अधुना यन्नोक्तं पूर्वं प्रसङ्गात्तानाह—

**अथ पदगोत्राणि ॥ ५१ ॥**

**(उ० भा०) एवं पदचतुष्टयगोत्राणि वक्ष्यन्त इति सूत्रशेषः ।**

**भारद्वाजकमाख्यतं भार्गवं नाम भाष्यते ।**
**वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥**

**भरद्वाजेन दृष्टमाख्यातं भारद्वाजगोत्रं वा भारद्वाजसगोत्रं वा । तथा भृगुणा दृष्टं नाम भार्गवगोत्रं भार्गवसगोत्रं वा । तथा वसिष्ठेन दृष्टा उमसर्गा वासिष्ठगोत्रं वासिष्ठसगोत्रं वा । तथा काश्यपेन दृष्टा निपाताः काश्यपगोत्राः काश्यपसगोत्रा वा ॥**

(अ० भा०) अथशब्दो मङ्गळार्थः । पदानां नामाख्यातोपसर्गनिपातानां गोत्राणि वक्ष्यन्त इति सूत्रशेषः । तदाह—

भारद्वाजकमाख्यातं भार्गवं नाम भाष्यते ।
वासिष्ठ उपसर्गस्तु निपातः काश्यपः स्मृतः ॥

अत्र पूर्वोक्तक्रमपदक्रमस्यानुपयुक्तत्वात् प्राधान्यादाख्यातादिक्रममनुसृत्याह— भारद्वाजकमाख्यातमिति । भारद्वाजेन दृष्टत्वात् आख्यातं भारद्वाजगोत्रम् । तथा भृगुणा दृष्टत्वात् नाम भृगुगोत्रम् । वसिष्ठेन दृष्टत्वात् उपसर्गः वसिष्टगोत्रः । कश्यपेन निपातो दृष्टः । अतः काश्यपगोत्र इत्युच्यते ॥

**अथ पददेवताः ॥ ५२ ॥**

**(उ० भा०) अथ पदानां देवता वक्ष्यन्त इति सूत्रशेषः ॥**

**सर्वं तु सौम्यमाख्यातं नाम वायव्यमिष्यते ।**
**आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥**

**सर्वमाख्यातं सोमदैवत्यम् । सर्वं नाम वायुदैवत्यम् । अग्निदैवत्या उपसर्गाः । निपाता वरुणदैवत्याः । इत्याद्युपासनार्थमुक्तम् । एवं ह्युपासिताः सन्तोऽर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्ति । यो वा अविदितार्षेयछन्दोदैवतब्राह्मणेन मन्त्रेन याजयति वाऽध्यापयति वा स्थाणुं वर्छेति गर्त्तं वापद्यते प्रमीयते पापीयान् भवतीत्येवमादिदोषेण सम्बध्यते । घृतकुल्यमधुकुल्या इत्येवमादिभिस्तु गुणैः सम्बध्यत एव ॥**

(अ० भा०) उच्यन्त इति सूत्रशेषः । तथाहि—

सर्वं तु सौम्यमाख्यातं नाम वायव्यमिष्यते ।
आग्नेयस्तूपसर्गः स्यान्निपातो वारुणः स्मृतः ॥

(अ० भा०) सर्वमाख्यातं सोमदेवत्यम् । नामपदं सर्वं वायुदेवत्यम् उपसर्गोऽग्निदेवत्यः निपातो वरुणदेवत्यः । एवञ्च अथ पदगोत्राणीत्यादिकमुपासनार्थं उक्तमित्यवधेयम् । एवं हि उपासितास्शब्दाः अर्थानभिज्ञस्यापि पुरुषस्य फलप्रदा भवन्तीति ज्ञायते । योहवा अविदितार्षेयछन्दो दैवतेन मन्त्रेण याजयति अध्यापयति वा स्थाणुं वर्छेति गर्त्तो वापद्यते प्रमीयते वा पापीयान् भवतीत्यनुक्रमणिकायां देवताद्यज्ञाने दोषश्रवणात् । तद्ज्ञाने तु अथ विज्ञायैतानि योऽधीतेऽस्य ब्रह्म वीर्यवद्भवतीत्यथ योऽर्थवित्तस्य वीर्यवत्तरं भवति । जपित्वा हुत्वेष्टवा तत्फलेन युज्यते इति गुणश्रवणाच्च । एवं कृत्स्नं शास्त्रं अभिधाय स्वकृतमित्यलङ्करोति—

**इत्याह स्वरसंस्कारप्रतिष्ठापयिता भगवान् कात्यायनः ॥ ५२ ॥**

(उ० भा०) **एवं स्वरसंस्कारयोः प्रतिष्ठापयिता भगवान् कात्यायनः इदं शास्त्रमाह ॥**

(अ० भा०) ओम् ।

उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इति भगवच्छब्दार्थः । शेषं सुगमम् ॥

**वृद्धं वृद्धिः ॥**

**इति कात्यायनकृतौ प्रातिशाख्यसूत्रेऽष्टमोऽध्यायः ॥**

(उ० भा०) इत्युक्तार्थः ॥

**इत्यानन्दपुरवास्तव्यवज्रटसूनुनोव्वटेन कृते
मातृमोदाख्ये प्रातिशाख्यभाष्ये
अष्टमोऽध्यायः ॥**

(अ० भा०) उक्तार्थमेव । हरिः ओम् ॥

वेदवेदाङ्गविदुषा अनन्तभट्टेन सादरम् ।
परेषामुपकाराय भाषितं प्रातिशाख्यकम् ॥

अम्बा भागीरथी यस्य नागदेवात्मजः सुधीः ।
तेनानन्तेन रचितं प्रातिशाख्यस्य वर्णनम् ॥

असाधु साधु वा पद्यं ग्रन्थे चास्मिन्यथोदितम् ।
तत्सर्वं क्षम्यतां सन्तः श्रीमन्तः काण्वशाखिनः ॥

न पाण्डित्याभिमानेन न च वित्तस्य चेप्सया ।
ग्रन्थोऽयं रचितः किन्तु रामनाथस्य तुष्टये ॥

ओम् । श्रीमत्प्रथमशाखिना नागदेवभट्टात्मजेन श्रीमदनन्त-
भट्टेन विरचिते श्रीमत्कात्यायनप्रातिशाख्यसूत्र-
भाष्ये पदार्थप्रकाशे अष्टमोऽध्यायः
समाप्तः ॥

# INDEX OF SŪTRAS.

# LIST OF CORRECTIONS

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 3 | 19 | देव— | देव |
| | 25 | देवभ्यः | देवेभ्यः |
| 7 | 1 | मन्त्रे | मन्त्रो |
| 10 | 18 | इति | इति श्रुतेः |
| 12 | 19 | चाशुचिर्द्विजः | चाशुचि द्विजः |
| 13 | 10 | गच्छन्नघी | गच्छन्नाधी |
| 14 | 5 | तत्। | तत् |
| 15 | 3 | स्वामातर | स्वां मातर |
| 16 | 12 | विशेषः | विशेषः। |
| 17 | 19 | भवोऽन्त्यो | भवोऽन्त्यः। |
| | | ककारादिः, | अकारादिः । |
| | 20 | नकार- | नकारा- |
| | 21 | स्थाकार | स्पूर्व आकार |
| 18 | 10 | अकार | आकार |
| 22 | 20 | व्यवहितं | अव्यवहितं |
| 25 | 14 | मात्रावरः | मात्रा स्वरः |
| | 17 | पर्याय | पर्यायौ |
| 26 | 20 | संज्ञ | संज्ञा |
| 27 | 12 | वर्गाद्यौ | वर्गस्य |
| 28 | 6 | यकारश्च | पकारः यकारश्च |
| | 13 | ऌलसिता | ऌलसता |
| | 18 | उपध्मा- | पवर्गः, उपध्मा- |
| | 19 | पवर्गः, पेते | पेते |
| 29 | 16 | अत्रोकारस्य | अत्र अऽकारस्य |
| 30 | 14 | अकारास्या | अकारस्या |
| | | अध्यर्धममात्रा | ओकारस्य च अध्यर्ध-मात्रा |
| 31 | 5 | वनस्पतीं | वनस्पताँ |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 33 | 14 | यथा उत्तमाः | उत्तमा यथा |
| | 15 | त्रीन्, | त्रीन् |
| | 21 | लृकारधर्जम् | लृकारवर्जम् |
| 34 | 3 | द्वे, | द्वे |
| | 6 | द्वे, | द्वे |
| 37 | 19 | शोचने | रोचने |
| 38 | 8 | महाद्यै | सहाद्यै |
| | 10 | ओकार | ओकारः मकार |
| | 14 | यथा—घाक् | *आद्यैर्व्यञ्जनैः उत्तरैश्चावसानगतैः सहितः स्वरोऽक्षरम्। यथा-वाक् |
| 48 | 18 | श्वन्यत्रि | श्वन्यत्रि |
| 50 | 13 | समासु | सामसु |
| 54 | 15 | यथ | यथा |
| 58 | 9 | सेतिकरणं | सेतिकारं |
| 59 | 21 | द्रोणकलशं | द्रोणकलश |
| 61 | 2 | एहि | इहि |
| | 3 | पररूपं [पदान्तरूपकार्यत्वम्] | एकरूपत्वं पदान्तकार्यं पररूपत्वम्। |
| 62 | 9 | [पदविच्छेद पादविच्छेदः] | पदे पदे विच्छेदः पदविच्छेदः |
| | 19 | स्यात्। एकं | स्यात्। एवं |
| | 20 | द्विपदादिः | द्विपदादिः। |
| | | पादः। | पादः |
| 65 | 2 | भवति। अधि- | भवति। |
| | 3 | कारसूत्रमेतत्। यथा | यथा |
| 66 | 16 | अग्नि | " अग्नि |
| | 18 | संज्ञकानी | संज्ञकानि |
| 67 | 7 | अरण | अनरण |
| 69 | 3 | शास्त्रसंयव | शास्त्रसंव्यव |
| 72 | 24 | स्वरेष्ठः | स्वरेष्ठः।" |

* The part of the commentary beginning with this should go under the next sūtra (101.)

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 73 | 1 | वेदिरसि | " वेदिरासे |
| | 12 | अनुदात्तं | अनुदात्तः |
| 75 | 22 | त्व, | त्वः, |
| 77 | 14 | " वृषन् " " अग्ने संस ······विश्वानि," | " संस····विश्वानि ।" |
| | 22 | दुपरिष्टाद्वा | दुपरिष्टाद्वा |
| 78 | 1 | यथा—" अपान्नपात्। | अपान्नपात् यथा— |
| | 4 | षष्ठया— | षष्ठया |
| | 15 | अपाम् । नपात् | अपान्नपात् |
| | 16 | आर्षेय | ऋषीणां नपात् |
| 79 | 6 | यथा—" पृथिवि देवयजनि," | पृथिवि देवयजनि यथा— |
| 80 | 13 | श्रेयस्कर, | श्रेयस्कर |
| | 15 | लाजीश्न्, | लाजीउन् |
| 81 | 5 | शिवो नः" | शिवो नः । " |
| | 7 | आमान्त्रित | आमन्त्रित |
| | 12 | अम्बालिके" | अम्बालिके ।" |
| | 17 | लक्षणत्वात् । आद्यानुदात्तत्वं | लक्षणत्वात् आद्यानुदात्तत्वम् |
| 82 | 16 | हव्ये । | हव्ये |
| | | विश्रुतीति | विश्रुतीति । |
| 83 | 14 | भवति । | भवति |
| 85 | 4 | अन्तः । | अन्तः |
| | 10 | इयं वेदिः | " इयं वेदिः |
| 88 | 11 | किम्नीर | किर्मीर |
| | 21 | कुष्ण | कृष्ण |
| 89 | 2 | राट पर | राट्पर |
| 91 | 5 | गृह्येन | गुह्येन |
| 94 | 14 | द्विरुक्ता | द्विरुदात्ता |
| 97 | 8 | इन्द्रोत्तरमग्नि | अग्नि |
| 99 | 16 | मङ्घः | मध्वः |
| 100 | 12 | उदात्तादन्यत् | उक्तादन्यत् |
| 103 | 10 | उपरिष्ठा | उपरिष्टा |
| 104 | 13 | भावति | भवति |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 107 | 7 | पफथी | पफयो |
| 107 | 5, 6, 17 | रव | ख |
| 109 | 3 | सेमाम्नो | " सेमाम्नो |
| 110 | 3 | पता ते | " पता ते |
| 111 | 23 | भावति | भवति |
| 118 | 3 | परमे | " परमे |
| 119 | 9 | लीपागम | लोपागम |
| | 18 | वीघोऽत्र | दीर्घोऽत्र |
| 120 | 9 | द्रुणाश | दूणाश |
| 121 | 2 | वाहस् | वाहम् |
| | 9 | वर्णादप | वर्णाप |
| 122 | 7 | वनसदो | वन सदे |
| 123 | 9 | बृहत् स्पतिः | बृहत् पतिः |
| 124 | 11 | ध्रूव | भ्रुब |
| 131 | 20 | रवरेष्ठः | खरेष्ठः |
| 132 | 15 | ऋक्सामयोः | ऋक्सामयोः, |
| 133 | 20 | भाविभ्य— | भाविभ्यः |
| | 27 | हृदि स्पृशम् | हृदिस्पृशम् |
| 134 | 10 | ऋकारोद्या | ऋकारोद्यो |
| | 21 | अवयासि | अवयासि- |
| | 22 | सिसीष्ठाः | सीष्ठाः |
| 135 | 1 | पृथिवि सदंत्वा | पृथिविसदं त्वा |
| 136 | 5 | अस्थूरि, | अस्थूरि |
| | 22 | तारिषः | तारिषत् |
| | 25 | सिद्धऽपिपि | सिद्धोऽपि |
| 138 | 15 | क्षत्रवनि | क्षत्रवनि।" |
| | | वाध्रीं | " वाध्रीं |
| | | प्रपीनाम् | प्रपीनम् |
| | 22 | देवश्रीः | "देवश्रीः |
| | | शतपयाः | शतपयाः " |
| 139 | 13 | वाक्याभिः | वाक्याभिः । |
| | 22 | त्वेष नृम्णाः | त्वेषनृम्णाः |
| 140 | 9 | आक्त्नीं | " आक्त्नीं |
| | 16 | शाकार | शाकार- |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 140 | 17 | अट तवर्गै | अटतवर्गै |
| | | प्रकृत्या- | प्रकृत्या |
| | 19 | जेजल्येन | जेल्येन |
| 141 | 20 | घुष्य | घुष्य |
| | 21 | घृष्या | घुष्या |
| 142 | 4 | उष्ट्रो | उष्ट्रो |
| | 14 | पद्यते । पकारो | पद्यते पकारे । |
| | 16 | विश्येष | विश्येषं |
| 143 | 12 | गन्- | ग- |
| | 13 | धर्वस्त्वा | न्धर्वस्त्वा |
| 144 | 3 | चेन्द्रवति | चेन्द्रवति । |
| | 4 | ऊतये | ऊतये । |
| | | सविता | सविता । |
| 146 | 7 | वरुथ्य | वरूथ्य |
| 149 | 22 | नकारेभ्षः | नकारेभ्यः |
| 150 | 8 | येना | योना |
| 154 | 21 | ज | च |
| 160 | 9 | प्रुषी | प्रुर्षी |
| 161 | 5 | मापद्यते । | मापद्यते |
| | 7 | ब्रहमँ | ब्रह्मँ |
| | 15 | दध न्वायो | दधन्वा यो |
| 161 | 16 | स्व वाया | स्वधा या |
| | 17 | मापद्यते | मापद्येते |
| | 23 | शिक्षाय- | शिक्षाया- |
| 162 | 3 | यः दधन्वा | यः> दधन्वा |
| | | स्ववान् स्वकन् | स्ववान् |
| | | यातु स्वधा | यातु> स्वधा |
| | 4 | धायात्व | यात्व |
| | 9 | परे | परे । |
| | 10 | पीवो | > पीवो |
| | 18 | सादयामि | सादयामि । |
| | | प्रायेण | प्रायेण । |
| | 19 | मित्यादि | मित्यादि । |
| 163 | · 20 | अपजहि> | अप> |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 164 | 14 | सिछिर्नं | सन्धिर्न |
| | 20 | प्रत्यवे | प्रत्यये |
| | 24 | मध्वन्त | मधुन्त |
| 165 | 18 | ताढिह | ताळिह |
| | 24 | शिशुमारा | शिंशुमारा |
| 166 | 5 | शिशुमारा | शिंशुमारा |
| | 7 | प्रुषी | प्रुषीँ |
| 167 | 10 | यं या तु | यं यातु |
| | 12 | पूर्वे पदा | पूर्वपदा |
| 169 | 6 | स्तट्वधि | स्तद्वधि |
| 171 | 1 | भ्रूमः तत्र । | भ्रूमः । तत्र |
| | 14 | पृप्रसि | तृप्रसि |
| | 16 | किंशिला | किंशिला |
| 172 | 6 | पकारोदयात् | पकारात् |
| | 14 | सङ्क्षरे | सङ्क्षरे |
| 173 | 7 | तान् | कान् |
| 174 | 6 | सञ्ज्ञा | सञ्ज्ञा |
| | 10 | इदं पित्त | इदम्पित्त |
| | 17 | तकारे | तकारो |
| 175 | 16 | पदेषु | वेदेषु |
| 176 | 6 | र्विहन्तीति | र्विहन्तीति । |
| 177 | 10 | बदावृतौ | पदावृत्तौ |
| 178 | 3 | भावे । | भावे |
| | | विनामे । | विनामे |
| | | प्रगृह्ये । | प्रगृह्ये |
| | | इत्यग्रे । | इत्यग्रे |
| 178 | 5 | विनामों | विनामो |
| | 6 | सुसवेति | सु सावेति |
| | 24 | जातमुक्त्वा | जातमुक्तम् । |
| 179 | 21 | भवति । | भवति |
| | 25 | श्पति । | श्पती |
| 180 | 4 | छकारे | ञ्छकारे |
| 184 | 1 | सुवेशासा | सुपेशासा |
| | 9 | इवि | इषि |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 184 | 10 | साध्यां | साभ्यां |
| 187 | 1 | यौ | धौ |
| | 8 | लुप्यते । | लुप्यते |
| | | परे | परे । |
| | 9 | आददे | आददे> |
| | | आ अपृक्ते | आकारे अपृक्ते |
| | 12 | यकारस्य | आकारस्य यकारस्य |
| | 15 | परे | पदे |
| 188 | 2 | ग्रहणत् | ग्रहणात् |
| | 6 | मेति । | मेति |
| | | परेषु | परेषु । |
| 188 | 7 | मातरिश्वनोः | मातरिश्वनो |
| | 21 | यथा-स्य | स्य |
| 189 | 10 | अहोरात्रार ते | अहोरात्रास्ते |
| | 18 | हुघ्नः | हुघ्नः |
| 190 | 12 | देव्येऽतु | देव्येतु |
| | 19 | स्वरितः | स्वरिते |
| | 22 | उतोत्तर स्येति | उतोत्तरस्येति |
| 191 | 3 | ऋष मिन्द्राय | ऋषभमिन्द्राय |
| | | ऋष भस्तपसा | ऋषयस्तपसा |
| | 8 | स्वाह स्वाहा | स्वाहा |
| | 21 | स्रचि | स्रुचि |
| | 24 | णाधिकाशत् | अधिकारात् |
| 192 | 11 | उप> अंशुः | उप अँशुः> |
| | | उपांशु | उपाँशु |
| | | उपांशो | उपाँशो |
| 193 | 7 | नवादः | पवादः |
| | 11 | त्योजोः प्रत्य | त्योजोःप्रत्य |
| | 18 | तम्रेजति | तम्रैजति |
| 194 | 9 | शताय>स्वा | >स्वा |
| | 14 | उकारं | उकार |
| | 16 | क्मिम् | किम् |
| 195 | 2 | प्राप्नोति । | माप्नोति |
| | 3 | शायां | शायाम् । |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| | 7 | अलभाव | आलभाव |
| 197 | 4 | द्रूणानी | द्रूणानो |
| | 11 | तस्याय | तस्यायं |
| 198 | 18 | असम्म्भूति | असम्भूति |
| 199 | 12 | मन्त्रान्वंर्ज | मन्त्रान्वर्ज |
| 200 | 20 | यवसे विष्यन् | यवसेऽविष्यन् |
| 202 | 2 | ऽव | व |
| | 18 | तेऽग्रे | ते अग्रे |
| 204 | 6 | शूरनो नु | शूर नोनु |
| | 12 | विह्नना | विघ्नना |
| 205 | 9 | संहिताभिमाय | संहितायामभि |
| 206 | 11 | अप्तु राज्यस्य | अप्तुराज्यस्य । |
| 207 | 8 | त्वकारात्रे | त्वकारमात्रे |
| | 20 | अस्रत् | असृक् |
| 209 | 6 | अङ्कुपादि | अङ्कुपादिषु |
| | 15 | सदनाः अकर्म | सदना अकर्म |
| | 22 | असदनृतस्य | असदन्नृतस्य |
| 210 | 11 | इमे शब्दे | इमेशब्दे |
| 211 | 6 | द्रुवघ्नः | द्रूघ्नः |
| | 23 | अद्रिभिरिति | अद्रिभिरिति । |
| | 24 | प्रकृतिभाव | प्रकृतिभावः । |
| 213 | 1 | > वाजा | > वाजा- |
| | 19 | श्चकार | श्छकार |
| 214 | 7 | दिशः | दिशः । |
| | 12 | दकारे | स्थकारे |
| | 13 | गम्यमानायां | गम्यमानायाम् । |
| | 18 | पदान्त पदाद्योर्भवति | भवति |
| | 22 | अश्श्वः | अश्वः |
| 215 | 9 | परस्यानेनै वद्वित्व | परस्यानेनैव द्वित्व |
| | 26 | सूत्रकृत्तैव | सूत्रकृतैव |
| 217 | 10 | बोधितो | बाधितो |
| | 20 | क्रमाऽत्र | क्रमोऽत्र |

| Page. | Line. | For | Read. |
|---|---|---|---|
| 218 | 5 | प्रसुव | * प्प्रसुव |
| | 9 | द्विर्भावः | द्विर्भावयन्ति |
| 219 | 13 | अग्निः | अग्गिनः |
| 220 | 21 | संव्वपामि>सँव- | सं वपामि>सँव्व- |
| 221 | 1 | सँप्यौमि | सँय्यौमि |
| | 16 | द्व्यञ्जन | द्व्यञ्जन |
| 222 | 3 | अत्र | अत्र ककारः |
| | 4 | ककारयम्मौ | थकारयमौ |
| | 11 | द्विसर्जनीयो | विसर्जनीयो |
| | | विसर्जनीयस्य | द्विसर्जनीयस्य |
| 223 | 1 | अन्तरिक्षं पुरी | अन्तरिक्षम्पुरी |
| | 2 | तनूम्नी | तनूम्नो |
| | 7 | द्विरुक्तितर्न | द्विरुक्तिर्न |
| | 15 | अक्त्नीं | अत्नीं |
| | 20 | पञ्चमेऽत | पञ्चमेऽन्त |
| | 23 | पूषम्निति | बूषम्निति |
| 224 | 5 | स्वर्शौ | स्पर्शौ |
| | 11 | ऊर्मिं> | ऊर्मिः> |
| 226 | 3 | जातूकर्ण्यस्य | जातूकर्ण्यस्य |
| | 6 | ह्रदः | ह्रदः |
| 227 | 8 | लोपमनु | लोप अनु |
| | | पह्नाँय् | मह्नाँय् |
| | 13 | ऋतस्पते | ऋतस्पते । |
| 228 | 13 | दधाम्यौ असा | दधाम्यौजसा |
| | 19 | इत्यसिद्धिः | इत्यसन्धिः |
| 229 | 13 | तम् । | तम् । ” |
| | 22 | चम्बी | चम्वी |
| 230 | 19 | बाजजितो | वाजजितो |
| | 25 | स्वरितो | स्वरितपरो |
| | 26 | उदात्तानुदात्त | उदात्तवानुदात्त |

* The portion of the commentary on this page, beginning with विसर्जनीयात् परः, line 3, should be taken over to the next sutra (107).

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 231 | 2 | वाढव्यानि | वाड्ढव्यानि |
| | 10 | वीह्यादेति वि ईत्याय | वीध्यायेति वि इध्याय |
| | 22 | इवर्णस्वरितः | ईवर्णः स्वरितः |
| 232 | 24 | अस्थू रिणो | अस्थूरि णो |
| 233 | 9 | स्तानूनप्त्रे | स्तनूनप्त्रे |
| | 13 | शक्षा- | शिक्षा- |
| | 23 | सूत्रेणानुदार्त्ते | सूत्रेणानुदात्त |
| 236 | 1 | ह्निवर्णो | ह्निवर्णौ |
| | 7 | ह्निवत्व | ह्निवर्णत्व |
| | 16 | पाठात् | पाठात् । |
| | 18 | मीढव | मीढ्व |
| 237 | 4 | रास्स्वति | रास्स्वेति |
| | 14 | धघ्रौ | घरौ |
| | | करणादपि | करणा अपि |
| 238 | 7 | चाधेमात्रेति | चार्धमात्रेति |
| | 12 | स्यार्धा- | स्यार्ध- |
| | 15 | कार्य । | कार्य |
| 239 | 15 | शस्दाः | शब्दाः |
| | 19 | गीर्भि | गीर्भिः |
| 240 | 16 | बृहदारण्य- | बृहदारण्यक |
| | 17 | पघोदार हरणानिश्ये | पवोदाहरणानि |
| | 22 | पह्नौ | पतौ ह्नौ |
| 241 | 5 | व्यत्वं | णयत्वं |
| | 7 | ओ व्यो | ओण्यो |
| | 9 | कश्स्यस्य | कस्य । यस्य |
| | 10 | हरष्यम् | हिरण्यम् |
| 242 | 22 | थाय | यथा |
| 243 | 20 | दध्ने | दद्ध्ने |
| 244 | 24 | पक्षो | पक्षे |
| 246 | 10 | विष्कसाय | विष्कशाय |
| | 19 | रुदद्रू | रुद्द्र |
| 247 | 19 | ह्विडकृताय | ह्विङ्कृताय |
| | 21,23 | सडक्रम्यते | सङ्क्रम्यते |
| | 24 | ष्टुभेन | त्रैष्टुभेन |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 247 | 24 | छन्दसात्रै | छन्दसा |
| 249 | 12 | अशुशुक्षणिः | आशुशुक्षणिः |
| | 17 | कस्मान्न । | कस्मान्न |
| 251 | 11 | नोऽति | नाति |
| | 22 | अग्ने | अग्नेः |
| 252 | 10 | पृष्ठमि-त्यादि | पृष्ठमित्यादि |
| | 11 | आगुरा | आयुरा |
| | | कूले रस | कूलेरस |
| 253 | 7 | भ्रवः | भुवः |
| | 10 | त्वाव | त्वा |
| | 12 | सङ्क्रमं | सङ्क्रमः |
| | 17 | तौ एवम् । | तौ । एवम् |
| 255 | 17 | पष्णे | पूष्णे |
| | 22 | ज्ञापनाथम् | ज्ञापनार्थम् । |
| 256 | 3 | मदूर्ध्ने | मूदूर्ध्ने |
| | 8,21 | धिकार | विकार |
| | 10,22 | अधिकार | अविकार |
| | 21 | व्यवस्तितो | व्यवस्थितो |
| 257 | 8 | क्वचिद्बद्ध्यं | क्वचिद्द्व्यं |
| | 19 | पूर्वकवाक्या- | पूर्वकं वाक्या- |
| 258 | 6 | प्रयोजनम् । | प्रयोजनं |
| | 7 | विनियोगरूपम् | विनियोगरूपम् । |
| 259 | 6 | कथमुक्त | कथम् । उक्त |
| | 9 | भातिथि | अतिथि |
| 260 | 17 | दू षुणा सत्या | दू षु णासत्या |
| 261 | 1 | चके | चैके |
| | 11 | महीसू | महीमू |
| 262 | 19 | प्रयन्ता | प्रयन्तः |
| | 20 | नास्तिः | नास्ति । |
| 263 | 1 | णा सत्या | णासत्या |
| | 21 | दीर्घाभावः | दीर्घीभावः |
| 265 | 17 | वसनँ | वसानं |
| 267 | 2 | मदलक्षणं | पदलक्षणं |
| | 12 | समस्मात् | सिमस्मात् |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 267 | 13 | याच्ञ्ञा | याज्ञा |
| | 20 | अघशासः | अघशंसः |
| 269 | 3 | र्दक्षिणं । | र्दक्षिणं |
| | 9 | ‘ वसुधातम इति वसु । धातमः | “ वसुधातम इति वसु धातमः ” |
| | 15 | सर्प | सर्व |
| | 16 | षदेनाव | पदेनाव |
| | 17 | सर्प | सर्व |
| 270 | 6 | बिजावेति | विजावेति |
| 272 | 6 | रूपोद्- | रूपोदा- |
| | 11 | तुराषाठ् | तुराषाट् |
| 273 | 14 | ह्रस्व | ह्रस्व |
| 274 | 10 | प्रयत्यये | प्रत्यये |
| 275 | 3 | त्युप । | त्युप |
| | 7 | धावन्ती | धावति |
| | 19 | गिरिश | गिरि श |
| 276 | 1,6 | यज्ञा यज्ञेति | यज्ञायज्ञेति |
| | 2 | यतो यत | यतोयत |
| | 9 | यनायेत्या | आयनायेत्या |
| 277 | 8 | सु, भ्यः | वसुभ्यः |
| | 10 | त्वायवः । | त्वा यवः । |
| | | शंयोः | शं योः |
| | 12 | मित्यस्मयुम् । | मित्यस्म युम् । |
| | 14 | साधुया । | साधु या । |
| 278 | 15 | मित्याधि | मित्यधि |
| 279 | 19 | पदपूर्वे | पदपूर्वं |
| 280 | 17 | मणिवालाः | मणि वालाः |
| | 19 | योर्ऋत्यृक्सामयो | योरित्यृक् सामयोः |
| 281 | 8 | त्रयाणाम् । | त्रयाणां |
| 282 | 1 | सुकृत् | सु कृत् |
| 283 | 1 | आग्नी `म् | आग्नीध्रम् |
| | 20 | उक्थपङ्क्तेः | पक्तेः |
| 284 | 3 | च नास्मभ्य | चनास्मभ्य |
| | 11 | धथा | यथा |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 285 | 5,21 | सपत्क्ना | सपत्ना |
| | 7 | शितम | शीतम |
| | 10 | निवार | नीवार |
| | 12 | यै लबृदाः | यैलबृदाः |
| 286 | 5 | गोंपा | गोपा |
| | 6 | प्रउंगं | प्रउगं |
| | 9 | हिंते घनाघनाः | हिंते । घनाघनः |
| | 16 | अनड्डान | अनड्डान् |
| | | घविष्ठिरो | गविष्ठिरो |
| 287 | 5 | पद्व्य जेनाचिचि | पद्व्याजेनाचि |
| | 10 | स्यात्। | स्यात् |
| | 11 | गंति | गति |
| 288 | 8 | वाधुरादि | वायुरादि |
| | 11 | प्रियङ्गवो पारा | प्रियङ्गवः पारा |
| | 12 | उत्तम्भनादी संसायत् | उत्तम्भनादीन्यादि-संशयात्। |
| | 16 | उदः स्सा | उदः स्था |
| | 23 | तिष्ठत्युत्तर | तिष्ठत्युत्तरमुत्तर |
| | 25 | संशदा | संशया |
| 289 | 3 | विजौजाः | विशौजाः |
| | 5 | विशौजा इति | विडौजा इति |
| | 12 | ष्ठ | ष्ट |
| 290 | 13 | राष्ट्र | राष्ट्र |
| | 15,22 | पुंश्चल्‌ | पुँश्चल्‌ |
| | 19,20 | सं | सँ |
| | 20,21 | मां | माँ |
| 291 | 1 | सं | सँ |
| | | मां | माँ |
| | | पुं | पुँ |
| | 13 | सुताय पजायै | सुविताय सुप्रजायै |
| | 21 | परीत | लोपश्चेत्थम्। परीत |
| | 22 | खण्डनार्थे | खण्डनार्थस्य |
| | 23 | धातोरोकार | दोधातोरोकार |
| 292 | 4 | तस्या | तस्य |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| | 6 | इतिशब्द | इतिशब्दात् |
| 293 | 9 | मामन्त्रि " | मामन्त्रितवत् " |
| | 19 | अपदावौ | अपादादौ |
| 294 | 11 | प्रसिद्धिः | प्रसितिः |
| 295 | 23 | स्वरन्धेप- | स्वरसन्धे- |
| | 24 | इत्यस्यास- | इत्यस्याप- |
| 296 | 1 | र्त्तस्व | वर्तस्व |
| | | अभिव | अभि |
| | 16 | अत्रिणि | अत्रिण |
| | 18 | पष्विति | प्रतिपचता । पष्विति |
| 297 | 11 | त्रिष्वी | तृष्वी |
| 298 | 1 | अनुदात्तो | अनुदात्ता |
| | 3 | मदि्भिः | मद्रिभि |
| | 19 | क्वाचि | क्वचि |
| | 22 | भन्त्यामि | भन्त्स्यामि |
| 299 | 11 | तस्यावयजन | तस्या वयं जन |
| | 18 | मेनां सिचकुम | मेनांसि चकृम |
| | 20 | ननु न्निधानसूत्रे | ननु सन्निधानमात्रे |
| 300 | 19 | सुक्षत्र | सुक्षत्रो |
| 301 | 7 | नाम ह्वयोराख्या।तयो | नाम |
| | 15 | ह्वयो | ह्वयोः |
| | 19 | भङ्क्ताम् | भुङ्क्ताम् |
| 302 | 1,2 | ऽह | ह्व |
| | 9 | ह्वयो | ह्वयोः |
| | 12 | शापि | ऽपि |
| 303 | 8 | चोतसर्गस्य | चोत्सर्गस्य |
| 304 | 13 | अस्मद्‌युग् | अस्मद्र्यग् |
| | 16 | ध्वं यथा | दृध्वं यथा |
| | | मुच्यद्‌ध्वव | मुच्यद्‌ध्व |
| | 17 | दात यथा | दात्तृ यथा |
| | 18 | दात्रमसि | दात्तमसि |
| | | वर्बति | ववर्त्ति |
| | 21 | अराद्‌यै | अराद्‌ध्यै |
| | 24 | नक्त | मक्‌कं |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| 305 | 6 | मृत्तिका ध्वम् | मृत्तिका वृधं |
| | 15,16 | नक्तम् | नक्तम् |
| | 20 | विरुच्यते | द्विरुच्यते |
| 306 | 3 | ईध्य्रायवार्ध्रीनसो- | वीध्य्रायवार्ध्रीनसोद्रा- |
| | | द्राश्वराश्चेत् | स्पर्शाश्चेत् |
| | 5 | विरुच्यन्ते | द्विरुच्यन्ते |
| | 6,7,10,12 | वार्ध्रीन | वार्ध्रीन |
| | 10 | ईध्य्राय | वीध्य्राय |
| | 12 | ईध्य्राय | वीध्य्राय |
| | 17 | उपोर्स्थितो | उपोस्थितो |
| | 21 | थकारंश्च | थकारश्च |
| 307 | 2 | उर्स्थिताय | उस्थिताय |
| | 5 | बर्हि | बर्हि |
| | 13 | पूर्वौः | पूर्वौ |
| | | ङकारौः | ङकारौ |
| 308 | 7 | पदन्त | पदान्त |
| | 10 | कुण्ठ्यो | कण्ठ्यो |
| 309 | 5 | सन्त्ववि | सन्त्वति |
| 311 | 4 | भिभिः | भिः |
| | 10 | प्रथमान्ताः | प्रथमाः |
| | | तृतीयान्ताः | तृतीयाः |
| 314 | 12 | धिति | घिति |
| | 19 | फ् | प् फ् |
| 316 | 7 | सवत्र | सर्वत्र |
| 317 | 6 | सवं | सर्वं |
| | 9 | दृष्ठाः | दृष्टाः |
| | 12 | ह्मराशिः | ब्रह्मराशिः |
| | 13 | सृष्टि | स्पष्टी |
| | 22 | हृदेशे | हतदेशे |
| 318 | 9 | पतिताः | पतितः |
| | | शूद्रः | शूद्रः |
| | 10 | गृण्ह्वन्ति | शृण्वन्ति |
| 319 | 19 | वण | वर्ण |
| 320 | 3 | चत्वरिंशद्वय | चत्वारिंशद्वय |

| Page. | Line. | For. | Read. |
|---|---|---|---|
| | 7 | अकाराध्य | अकाराद्य |
| 321 | 2 | द्वीघः | द्वीर्घः |
| 322 | 2,4 | नैक्र | नैर्ऋ |
| 323 | 19 | स्थितादि | स्थितवि |
| 326 | 13 | क्रियया | क्रियाया |
| | 17 | सुप्तिङौः | सुप्तिङोः |
| | 19 | इमा । नु | इमा नु |
| 327 | 5 | अधः | अतः |
| | 13 | गोत्रं | गोत्रा |
| | 20 | भारद्वाजेन | भरद्वाजेन |
| | 22 | वसिष्ट | वसिष्ठ |
| | | दृष्ठः | दृष्टः |
| 328 | 5 | द्युपासिताः | ह्युपासिताः |
| | 19 | द्दवा | द्दृा |

